# ऋग्वेदसंहिता

सायणाचार्यविरचितमाधवीयवेदार्थप्रकाशसहिता

शार्मण्यदेशोत्पन्नेनेंगलण्डदेशनिवासिना मोक्षमूलरभट्टेन संशोधिता

गोतीर्थाभिधाननगरे

विद्यामंदिरसंस्थाननमुद्रायंत्रालये मुद्रिता

---

संवत् १९४९ वर्षे

---

॥ दशमं मंडलं ॥

## ॥ दशमं मंडलं ॥

दशमे मंडले द्वादशानुवाकाः। तत्र प्रथमानुवाके षोडश सूक्तानि। तत्राग्ने बृहन्निति सप्तर्चं प्रथमं सूक्तं। आप्त्यस्य त्रितस्यार्षं। अनादेशपरिभाषया त्रिष्टुप्। मंडलादिपरिभाषयाग्निर्देवता। तथा चानुक्रम्यते। अग्ने सप्त त्रित इति ॥ प्रातरनुवाकाश्विनशस्त्रयोराप्ये क्रतौ त्रैष्टुभे छंदसीदमादीन्यष्ट सूक्तान्यष्टमस्यांत्यास्तिस्रो वर्जयित्वा। सूत्र्यते हि। अग्ने नयाग्ने बृहन्नित्यष्टानामुत्तमादुत्तमास्तिस्र उद्धरेदिति त्रैष्टुभं। आ॰ ४.१३.। इति। प्रातरनुवाकन्यायेन तस्यैव समाम्नायस्य सहस्रावममोदेतोः शंसेत्। आ॰ ६.५.। इति च ॥ होमार्थं प्रणीत आहवनीये प्राग्घोमादुपशांते ज्योतिष्मत्गुणकाग्निदेवताका काचिदिष्टिः। तत्राद्या याज्या। सूत्रितं च। इष्टिरग्निर्ज्योतिष्मान्वरुण उदग्ने शुचयस्तवाग्ने बृहन्नुषसामूर्ध्वो अस्थात्। आ॰ ३.१२.। इति ॥ उपाकरणोत्सर्जनयोर्मंडलादिहोमेऽप्येषा। सूत्रमुदाहृतं ॥

अग्ने॑ बृ॒हन्नु॒षसा॑मू॒र्ध्वो अ॑स्थान्निर्जग॒न्वान्तम॑सो॒ ज्योति॒षागा॑त्।
अ॒ग्निर्भा॒नुना॒ रुश॑ता॒ स्वंग॒ आ जा॒तो विश्वा॒ सद्मा॑न्यप्राः ॥१॥

अग्ने॑। बृ॒हन्। उ॒षसा॑म्। ऊ॒र्ध्वः। अ॒स्था॒त्। निः॒ऽज॒ग॒न्वान्। तम॑सः। ज्योति॑षा। आ।
अ॒गा॒त्।
अ॒ग्निः। भा॒नुना॑। रुश॑ता। सु॒ऽअंगः॑। आ। जा॒तः। विश्वा॑। सद्मा॑नि। अ॒प्राः॒ ॥१॥

बृहन्महानेषोऽग्निरुषसामग्र उषसामुपर्युषःकाल ऊर्ध्वः प्रज्वलितः सञ्ज्वालारूपेणास्थात्। तिष्ठति। ततस्तमसः। रात्रिनामैतत्। रात्रेर्निर्जगन्वान्निर्गतः ॥ गमेः क्वसाविडभावे रूपं ॥ निर्गतो निष्क्रांतवान् सोऽग्निर्ज्योतिषा स्वीयेन तेजसा लक्षितः सन्नागात्। गार्हपत्याद्विह्रियमाण आहवनीयं प्रत्यागच्छति। अनंतरं स्वंगः शोभनज्वालावयवो जातः कर्मार्थं समुत्पन्न एषोऽग्नी रुशता ॥ रोचतेर्ज्वलतिकर्मण इदं रूपं॥ आरोचमानेन। यद्वा। रुशतिर्हिंसार्थः। तमसां हिंसकेन। भानुना तेजसा विश्वा सद्मानि सर्वाँल्लोकान् यद्वा सदनानि यज्ञगृहाण्याप्राः। आपूरयति ॥ प्रा पूरणे। तिङां तिङो भवंतीति तिपः सिबादेशः ॥ अत्र वाजसनेयकं। अग्ने बृहन्नुषसामूर्ध्वो अस्थादित्यग्ने ह्येष बृहन्नुषसामूर्ध्वस्तिष्ठति। निर्जगन्वान्तमसो ज्योतिषागादिति निर्जगन्वान्रात्रेस्तमसो ज्योतिषेति। अग्निर्भानुना रुशता स्वंग इत्यग्निर्वा एष भानुना रुशता स्वंग आ जातो विश्वा सद्मान्यप्रा इतीमे वै लोका विश्वा सद्मानि तानेष जात आपूरयति। शत॰ ६.७.३.१०.। इति ॥

स जा॒तो गर्भो॑ असि॒ रोद॑स्यो॒रग्ने॒ चारु॒र्विभृ॑त॒ ओष॑धीषु।
चि॒त्रः शिशुः॒ परि॒ तमां॑स्य॒क्तून्प्र मा॒तृभ्यो॒ अधि॒ कनि॑क्रदद्गाः ॥२॥

सः। जा॒तः। गर्भः॑। अ॒सि॒। रोद॑स्योः। अग्ने॑। चारुः॑। विऽभृ॑तः। ओष॑धीषु।
चि॒त्रः। शिशुः॑। परि॑। तमां॑सि। अ॒क्तून्। प्र। मा॒तृऽभ्यः॑। अधि॑। कनि॑क्रदत्। गाः॒ ॥२॥

हे अग्ने जात उत्पन्नस्त्वं चारुः कल्याणरूप ओषधीष्वोषधिविकारेष्वरणीषु विभृतो विशेषेण मथित आहव-

गीयाद्यात्मना विविधं ह्रियमाण ओषधीषु वर्तमानः स त्वं रोदस्योर्द्यावापृथिव्योर्गर्भोऽसि। गर्भो भवसि। अग्निरूप आदित्यरूपश्चेति। किंच चित्रश्चित्रवर्णः काली कराली च मनोजवेत्यादिसप्तजिह्वाभिर्नानारूपः यद्वा चित्रश्चायनीयः शिशुरोषधीनां शिशुरग्निस्तमांस्यक्तून्राचिवत्कृष्णाञ्श्वभूंश्च परि भवसि। स्वतेजसाभिभवसि। स त्वं मातृभ्यो मातृभूताभ्य ओषधीभ्यः। अधिः पंचम्यर्थद्योतकः। ताभ्यः कनिक्रदत्पुनःपुनः शब्दं कुर्वन्प्र गाः। प्रगच्छसि। प्रजायसे॥

विष्णुरित्था परममस्य विद्वाञ्जातो बृहन्नभि पाति तृतीयं।
आसा यदस्य पयो अक्रत स्वं सचेतसो अभ्यर्चत्यत्र॥३॥
विष्णुः। इत्था। परमं। अस्य। विद्वान्। जातः। बृहन्। अभि। पाति। तृतीयं।
आसा। यत्। अस्य। पयः। अक्रत। स्वं। सऽचेतसः। अभि। अर्चंति। अत्र॥३॥

विद्वाञ्जानानो जातः प्रादुर्भूतो बृहन्महान् विष्णुरित्थेत्यमनेन प्रकारेण विष्णुर्व्यापनशीलो ज्ञानादिगुणयुक्तोऽग्निरस्य मे तृतीयं त्रयाणां पूरकं चितं मामभि पाति। अभिरक्षतु। एकतो द्वितस्त्रित इति त्रयो बभूवुः। नि० ४.६.। इति यास्केनोक्तं। किंचास्याग्नेः स्वमात्मीयं पय उदकमासास्येन यद्यदाक्रत कुर्वंति यजमाना याचंते तदानीमत्रास्मिँल्लोके स्थिताः स्तोतारः सचेतसः समानमनस्का भूत्वैनमभ्यर्चंति। अभिष्टुवंति॥

अत उ त्वा पितुभृतो जनित्रीरन्नावृधं प्रति चरंत्यन्नैः।
ता ईं प्रत्येषि पुनरन्यरूपा असि त्वं विक्षु मानुषीषु होता॥४॥
अतः। ऊं इति। त्वा। पितुऽभृतः। जनित्रीः। अन्नऽवृधं। प्रति। चरंति। अन्नैः।
ताः। ईं। प्रति। एषि। पुनः। अन्यऽरूपाः। असि। त्वं। विक्षु। मानुषीषु। होता॥४॥

हे अग्ने अतः। उ इत्यवधारणे। अस्मादेव कारणात् पितुभृतः पितुनान्नेन सर्वस्य जगतो धारयित्र्यः पोषयित्र्यो वा जनित्रीर्जनयित्र्य ओषधयोऽन्नावृधमन्नस्य वर्धकं त्वा त्वामन्नैर्हेतुभिः प्रति चरंति। परिचरंति। अभिगच्छंति। ततस्त्वमीमेनास्ता ओषधीः प्रत्येषि। प्रतिगच्छसि। पुनरप्यन्यरूपा जीर्णा ओषधीर्दावभूतस्त्वं गच्छसि। किंच मानुषीषु मनुष्यजातिषु विक्षु प्रजासु। यद्वा। विक्षग्निहोत्रादिक्रियास्वभिनिविशंतीषु मानुषीषु मनुष्यजातिषु। होता देवानामाह्वाता होमनिष्पादको वासि। भवसि। मनुष्येषु स्थित इत्यर्थे ब्राह्मणं देवो ह्येष मर्त्येष्विति॥

आतिथ्यायां स्विष्टकृतोऽनुवाक्या होतारमित्येषा। सूत्रितं च। होतारं चित्ररथमध्वरस्य प्रप्रायमग्निर्भरतस्य शृण्व इति संयाज्ये। आ० ४.५.। इति॥

होतारं चित्ररथमध्वरस्य यज्ञस्ययज्ञस्य केतुं रुशंतं।
प्रत्यर्धिं देवस्यदेवस्य मह्ना श्रिया त्व१ग्निमतिथिं जनानां॥५॥
होतारं। चित्रऽरथं। अध्वरस्य। यज्ञस्यऽयज्ञस्य। केतुं। रुशंतं।
प्रतिऽअर्धिं। देवस्यऽदेवस्य। मह्ना। श्रिया। तु। अग्निं। अतिथिं। जनानां॥५॥

अध्वरस्य यज्ञस्य होतारमेतन्नामानमृत्विजं यद्वा होतारं देवानामाह्वातारं चित्ररथं नानारूपरथमध्वरस्य रक्षोभिरहिंसितस्य यज्ञस्य सर्वस्य यज्ञस्य केतुं प्रज्ञापकं पताकास्थानीयं वा रुशंतं श्वेतवर्णं मह्ना स्वमहत्त्वेन देवस्य देवस्य सर्वेषां देवानामर्धिमिंद्रं प्रति भवंतं। यत्सर्वेषामर्धिमिंद्रं प्रतीति ब्राह्मणं। तादृशं जनानां यजमानानामतिथिमतिथिवत्पूज्यमग्निं तु क्षिप्रं श्रिया श्रियोऽर्थं वयं स्तुमः॥

स तु वस्त्राण्यध पेशनानि वसानो अग्निर्नाभा पृथिव्याः ।
अरुषो जातः पद इळायाः पुरोहितो राजन्यक्षीह देवान् ॥६॥
सः । तु । वस्त्राणि । अध । पेशनानि । वसानः । अग्निः । नाभा । पृथिव्याः ।
अरुषः । जातः । पदे । इळायाः । पुरःऽहितः । राजन् । यक्षि । इह । देवान् ॥६॥

हे राजन्दीप्यमानाग्ने वस्त्राण्याच्छादकानि तेजांसि अधापि च पेशनानि तेषां तेजसां कार्ष्ण्यशौक्ल्यादीनि रूपाणि । यद्वा । अधानंतरं पेशनानि । पेश इति हिरण्यनाम । हिरण्यवद्धिरण्यसदृशानि भास्वराणि तेजांसि । वसान आच्छादयन् पृथिव्या नाभा नाभौ नाभिस्थानीय इळायास्पद उत्तरवेद्यां । एतद्वा इळायास्पदं यदुत्तरवेदीनाभिः । ऐ० ब्रा० १. २८. । इत्याम्नानात् । तस्यां जातः समुत्पन्नोऽरुष आरोचमानो योऽग्निरेवंविधोऽसि स त्वं पुरोहितः पुरतो निहितः पूर्वस्यां दिश्याहवनीयायतने स्थापितः सन्निहास्मिन्यज्ञे देवानिंद्रादीन्यक्षि । यज । पूजय ॥

आ हि द्यावापृथिवी अग्न उभे सदा पुत्रो न मातरा ततंथ ।
प्र याह्यच्छोशतो यविष्ठाथा वह सहस्येह देवान् ॥७॥
आ । हि । द्यावापृथिवी इति । अग्ने । उभे इति । सदा । पुत्रः । न । मातरा । ततंथ ।
प्र । याहि । अच्छ । उशतः । यविष्ठ । अथ । आ । वह । सहस्य । इह । देवान् ॥७॥

हे अग्ने त्वमुभे द्यावापृथिवी द्यावापृथिव्यौ सदा सर्वदा ततंथ । आतेनिथ । स्वतेजोभिर्विस्तारयसि खलु ॥ बभूथा ततंथेति थलि निपातितः ॥ तत्र दृष्टांतः । पुत्रो न यथा पुत्रो मातरा मातापितरौ प्रीणौ धनैस्तनोति तद्वत् । किंच हे यविष्ठ युवतम स त्वमुशतः कामयमानानच्छाभिलक्ष्य प्र याहि । प्रकर्षेणागच्छ । अथानंतरं हे सहस्य सहसो बलस्य पुत्र हे अग्ने त्वमिहास्मदीये यज्ञे देवानिंद्रादीना वह । प्रापय ॥ ॥२९॥

पिप्रीहीति सप्तर्चं द्वितीयं सूक्तं । ऋष्याद्याः पूर्ववत् । पिप्रीहीत्यनुक्रांतं ॥ प्रातरनुवाकाश्विनशस्त्रयोरुक्तः सूक्तविनियोगः ॥ दर्शपूर्णमासयोराद्या स्विष्टकृतोऽनुवाक्या । सूत्रितं च । अथ स्विष्टकृतः पिप्रीहि देवाँ उशतो यविष्ठेत्यनुवाक्या । आ० १. ६. । इति ॥

पिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ ऋतूँर्ऋतुपते यजेह ।
ये दैव्या ऋत्विजस्तेभिरग्ने त्वं होतॄणामस्यायजिष्ठः ॥१॥
पिप्रीहि । देवान् । उशतः । यविष्ठ । विद्वान् । ऋतून् । ऋतुऽपते । यज । इह ।
ये । दैव्याः । ऋत्विजः । तेभिः । अग्ने । त्वं । होतॄणां । असि । आऽयजिष्ठः ॥१॥

हे यविष्ठ युवतमाग्ने उशतः स्तुतीः श्रोतुं कामयमानान्देवान्पिप्रीहि । हविर्भिः प्रीणय । हे ऋतुपत ऋतूनां देवयागकालानां स्वामिन्नग्ने ऋतून्यागकालान्विद्वाञ्जानानस्त्वमिहास्मिन्यज्ञे तान्यज । पूजय । किंच हे अग्ने दैव्या देवेषु भवाः अग्निर्होताश्विनावध्वर्यू त्वष्टाग्नीन्मित्र उपवक्ता । तै० आ० ३. ३. । इत्यत्रोक्ता य ऋत्विजः संति तेभिस्तैः सह देवान्यज । यद्वा । दैव्या देवेषु भवा ऋत्विज आश्वलायनेनोक्ताश्चंद्रमा ब्रह्मादित्योऽध्वर्युः पर्जन्य उद्गातेति । आ० गृ० १. २३. ८–९. । तैः सह यज । यस्मात्त्वं होतॄणां मध्य आयजिष्ठ आभिमुख्येन देवानां यष्टृतमोऽसि भवसि ॥

वेषि होत्रमुत पोत्रं जनानां मंधातासि द्रविणोदा ऋतावा ।
स्वाहा वयं कृणवामा हवींषि देवो देवान्यजत्वग्निरर्हन् ॥२॥

वेषि । होत्रं । उत । पोत्रं । जनानां । मंधाता । असि । द्रविणःऽदाः । ऋतऽवा ।
स्वाहा । वयं । कृणवाम । हवींषि । देवः । देवान् । यजतु । अग्निः । अर्हन् ॥२॥

हे अग्ने जनानां यजमानार्थं होत्रं होतुः कर्म तेन क्रियमाणं स्तोत्रं वेषि । कामयसे । उतापि च पोत्रं पोतुः कर्म तेन क्रियमाणां स्तुतिं कामयसे । किंच मंधाता मेधाव्यृतवा सत्यवांस्त्वं द्रविणोदा असि । धनस्य प्रदाता भवसि । अथ परोक्षकृतः । वयं देवेभ्यो हवींषि स्वाहा कृणवाम । स्वाहा करवाम । प्रयच्छाम । ततो देवो दीप्यमानोऽर्हन् प्रशंस्यो यजमानयोग्यो वाग्निर्देवान्यजतु । तैर्हविर्भिः पूजयतु ॥

दर्शपूर्णमासातिपत्त्यादौ निमित्ते पाथिकृतीष्टिः कर्तव्या । तत्रा देवानामित्येषा याज्या । सूचितं च । वेत्था हि वेधो अध्वन आ देवानामपि पंथामगन्म । आ० ३. १०. । इति ॥ प्रायणीयायामप्येषैव याज्योदयनीयायां सैवानुवाक्या । सूचितं च । अग्ने नय सुपथा राये अस्माना देवानामपि पंथामगन्म । आ० ४. ३. । इति । विपरीताश्च याज्यानुवाक्या इति ॥

आ देवानामपि पंथामगन्म यच्छक्नवाम तदनु प्रवोळ्हुं ।
अग्निर्विद्वान्त्स यजात्सेदु होता सो अध्वरान्त्स ऋतून्कल्पयाति ॥३॥
आ । देवानां । अपि । पंथां । अगन्म । यत् । शक्नवाम । तत् । अनु । प्रऽवोळ्हुं ।
अग्निः । विद्वान् । सः । यजात् । सः । इत् । ऊं इति । होता । सः । अध्वरान् । सः ।
ऋतून् । कल्पयाति ॥३॥

देवानां देवलोकादिगमनसाधनं देवानां स्वभूतं पंथां पंथानं तमपि वैदिकमार्गं वयमागन्म । आगतवंतो भवेम । येन देवान्प्राप्नुमः । तथा वयं यत्कर्मानुष्ठातुं शक्नवाम शक्नुमः समर्था भवामः तत्कर्मानुक्रमेण प्रवोळ्हुं प्रकर्षेण वोढुं समाप्तिं प्रापयितुं समर्था भवेम । अनंतरं विद्वांस्तं पंथानं जानानः सोऽग्निर्यजात् । देवान्यजतु । सेदु स एव खलु होता मनुष्याणां होमनिष्पादकः । ततः स एवाग्निरध्वरान्यज्ञान् किंचर्तून् कालान्कल्पयाति । कल्पयतु । करोतु ॥

व्रतातिपत्तौ व्रातपतीष्टिः कर्तव्या । तत्र यद्वो वयमित्येषा याज्या । सूचितं च । त्वमग्ने व्रतपा असि यद्वो वयं प्रमिनाम व्रतानि । आ० ३. १३. । इति ॥

यद्वो वयं प्रमिनाम व्रतानि विदुषां देवा अविदुष्टरासः ।
अग्निष्टद्विश्वमा पृणाति विद्वान्येभिर्देवाँ ऋतुभिः कल्पयाति ॥४॥
यत् । वः । वयं । प्रऽमिनाम । व्रतानि । विदुषां । देवाः । अविदुःऽतरासः ।
अग्निः । तत् । विश्वं । आ । पृणाति । विद्वान् । येभिः । देवान् । ऋतुऽभिः । कल्पयाति ॥४॥

हे देवाः अविदुष्टरासोऽविद्वत्तरा अत्यंतमजानंतो वयं युष्माकं यत् यत्किंचिद्व्रतानि कर्माणि विदुषां भवतां जानतामेव प्रमिनाम प्रहिंसितवंतः । भवत्सु जानत्सु नित्यनैमित्तिककर्माणि विलोपितवंत इत्यर्थः । विद्वानेतत्सर्वं जानानोऽग्निः स्विष्टकृत्तद्विश्वं सर्वं कर्मजातमा पृणाति । आपूरयतु । फलसहितं करोत्वित्यर्थः । केनापूरयतु तत्राह । येभिर्ऋतुभिर्यागयोग्यैः कालैर्देवान्कल्पयाति कल्पयति कर्मांगभावाय समर्थयति तैरापूरयतु ॥

यत्पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्त्यासः ।
अग्निष्टद्धोता क्रतुविद्विजानन्यजिष्ठो देवाँ ऋतुशो यजाति ॥५॥

यत्। पाकऽत्रा। मनसा। दीनऽदक्षाः। न। यज्ञस्य। मन्वते। मर्त्यासः।
अग्निः। तत्। होता। क्रतुऽवित्। विऽजानन्। यजिष्ठः। देवान्। ऋतुऽशः। यजाति ॥५॥

दीनदक्षा दीनबला दीनोत्साहा वा मर्त्यासो मर्त्या मनुष्या ऋत्विजः पाकत्रा पाकेन ॥ बहुलग्रहणाद्-आदपि तृतीयार्थे त्राप्रत्ययः ॥ पाकेन पक्तव्येन विशिष्टज्ञानरहितेनाल्पेन वा मनसा युक्ताः संतो यज्ञसंबंधि यत्कर्म न मन्वते न जानंति तत्कर्म विजानन् होता देवानामाह्वाता होमनिष्पादको वा क्रतुवित् कर्मविद्यजिष्ठो देवानामतिशयेन यष्टा सोऽग्निः स्विष्टकृद्वृतुश ऋतावृतौ स्वे स्वे यागयोग्ये काले देवान्यजाति। यजतु। हविर्भिः पूजयतु ॥

विश्वेषां ह्यध्वराणामनीकं चित्रं केतुं जनिता त्वा जजान।
स आ यजस्व नृवतीरनु क्षाः स्पार्हा इषः क्षुमतीर्विश्वजन्याः ॥६॥
विश्वेषां। हि। अध्वराणां। अनीकं। चित्रं। केतुं। जनिता। त्वा। जजान।
सः। आ। यजस्व। नृऽवतीः। अनु। क्षाः। स्पार्हाः। इषः। क्षुऽमतीः। विश्वऽजन्याः ॥६॥

हे अग्ने विश्वेषां सर्वेषामध्वराणां यज्ञानामनीकं मुखं प्रधानं चित्रं चायनीयं नानारूपं केतुं प्रज्ञापकं त्वा त्वां जनिता जनयिता प्रजापतिर्यजमानो वा जजान। जनयामास। उत्पादितः स त्वं नृवतीर्दासादियुक्ताः क्षाः। पृथिवीनामैतत्। क्षयंत्यत्रेति क्षा भूमिः। अन्वा यजस्व। अनुप्रयच्छ। यद्वा। नृवतीर्नृभिः संस्कृतानि क्षा अनु पृथिवीं वेदिलक्षणामनुगतानि वेद्यामासादितानि स्पार्हाः स्पृहणीयानि क्षुमतीः स्तुतिमंत्रलक्षणशब्दवंति विश्वजन्याः सर्वजनहितानि वृष्ट्यन्नहेतुत्वात् तानीषोऽन्नानि हविर्लक्षणानि यजस्व। देवेभ्यः प्रयच्छ ॥

यं त्वा द्यावापृथिवी यं त्वापस्त्वष्टा यं त्वा सुजनिमा जजान।
पंथामनु प्रविद्वान्पितृयाणं द्युमदग्ने समिधानो वि भाहि ॥७॥
यं। त्वा। द्यावापृथिवी इति। यं। त्वा। आपः। त्वष्टा। यं। त्वा। सुऽजनिमा। जजान।
पंथां। अनु। प्रऽविद्वान्। पितृऽयानं। द्युऽमत्। अग्ने। संऽइधानः। वि। भाहि ॥७॥

हे अग्ने यं त्वा त्वां द्यावापृथिवी जनितवत्यौ आदित्यात्मनाग्न्यात्मना वा। तथा यं त्वामापो मेघोदरगता विद्युदात्मना स्थितं जनितवत्यः। यद्वा। आप इत्यंतरिक्षनाम। द्यावापृथिवी अंतरिक्षं चेमे त्रयो लोका यं त्वामजीजनन्। किंच सुजनिमा शोभनजननस्त्वष्टा प्रजापतिर्यं त्वां जजान जनयामास हे अग्ने पितृयाणं पितरो येन मार्गेण गच्छंति तं पंथां हविर्वहनमार्गमनु प्रविद्वान् प्रजानंस्त्वं समिधानः समिध्यमानः सन् द्युमद्दीप्तियुक्तं यथा भवति तथा वि भाहि। विशेषेण दीप्यसे ॥ ॥३०॥

इनो राजन्निति सप्तर्चं तृतीयं सूक्तं। ऋष्याद्याः पूर्ववत्। इन इत्यनुक्रांतं ॥ प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

इनो राजन्नरतिः समिद्धो रौद्रो दक्षाय सुषुमाँ अदर्शि।
चिकिद्वि भाति भासा बृहतासिक्नीमेति रुशतीमपाजन् ॥१॥
इनः। राजन्। अरतिः। संऽइद्धः। रौद्रः। दक्षाय। सुसुऽमान्। अदर्शि।
चिकित्। वि। भाति। भासा। बृहता। असिक्नीं। एति। रुशतीं। अपऽअजन् ॥१॥

हे राजन्दीप्यमानाग्ने त्वमिन ईश्वरः सर्वस्य भवसि । अथ परोक्षः । अरतिर्हविराद्याय देवान्प्रति गंता समिद्धः संदीप्तो रौद्रः शत्रूणां भयंकरः सुषुमान् । ओषध्यात्मना स्थितोऽग्निः सुष्ठु सूयत इति सुषुः सोमः । तेन तद्वान् शोभनप्रसवो वा सोऽग्निर्दक्षाय यजमानानां धनादिवृद्ध्यर्थमदर्शि । सर्वैर्दृश्यते । किंच चिकित् सर्वं जानानोऽग्निर्वि भाति । विशेषेण दीप्यते । तथा बृहता महता भासा तेजसा ज्वालालक्षणेनासिक्नीं रात्रिमेति । सायंहोमसिद्ध्यर्थमेव गच्छति । किं कुर्वन् । रुशतीं श्वेतवर्णां दीप्तिमपाजन्नपगमयन्रात्रिं गच्छति । सामर्थ्याद्रात्रिं परित्यजन्नुषसं प्रातर्होमसिद्ध्यर्थं गच्छतीत्यर्थो लभ्यते ॥

कृष्णां यदेनीमभि वर्पसा भूज्जनयन्योषां बृहतः पितुर्जाम् ।
ऊर्ध्वं भानुं सूर्यस्य स्तभायन्दिवो वसुभिररतिर्वि भाति ॥२॥
कृष्णाम् । यत् । एनीम् । अभि । वर्पसा । भूत् । जनयन् । योषाम् । बृहतः । पितुः । जाम् ।
ऊर्ध्वम् । भानुम् । सूर्यस्य । स्तभायन् । दिवः । वसुऽभिः । अरतिः । वि । भाति ॥२॥

सोऽग्निर्यद्यदा कृष्णां कृष्णवर्णामेनीं गच्छंतीं रात्रिं वर्पसात्मीयेन ज्वालालक्षणेन रूपेणाभि भूत् अभिभवति । किं कुर्वन् । बृहतो महतः पितुः सर्वस्य जगतः पालयितुः पितृभूतादादित्याज्जां जायमानां योषामुषसं जनयन्नभिव्यंजयन् । तदानीमरतिर्गमनशीलोऽग्निर्दिवो द्युलोकस्य वसुभिर्वासयितृभिराच्छादकैः संधुक्षणसमर्थैरात्मीयैस्तेजोभिः सूर्यस्य भानुं दीप्तिमूर्ध्वमुपरिष्टात् स्तभायन् स्तंभयन् वि भाति । विशेषेण दीप्यते ॥

भद्रो भद्रया सचमान आगात्स्वसारं जारो अभ्येति पश्चात् ।
सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन्रुशद्भिर्वर्णैरभि राममस्थात् ॥३॥
भद्रः । भद्रया । सचमानः । आ । अगात् । स्वसारम् । जारः । अभि । एति । पश्चात् ।
सुऽप्रकेतैः । द्युऽभिः । अग्निः । विऽतिष्ठन् । रुशत्ऽभिः । वर्णैः । अभि । रामम् । अस्थात् ॥३॥

भद्रो भजनीयः कल्याणो भद्रया भजनीयया दीप्त्योषसा वा सचमानः सेव्यमानः संगच्छमानो वाग्निरागात् । आजगाम । गार्हपत्यादाहवनीयमागच्छति । ततः पश्चाज्जारो जरयिता शत्रूणां सोऽग्निः स्वसारं स्वयंसारिणीं भगिनीं वागतामुषसमभ्येति । अभिगच्छति । तथा सुप्रकेतैः सुप्रज्ञानैर्द्युभिर्दीप्तैस्तेजोभिः सह वितिष्ठन् सर्वतो वर्तमानः सोऽग्नी रुशद्भिः श्वेतैर्वर्णैर्वारकैरात्मीयैस्तेजोभी रामं कृष्णं शार्वरं तमोऽभ्यस्थात् । सायंहोमकालेऽभिभूय तिष्ठति ॥

अस्य यामासो बृहतो न वग्नूनिंधाना अग्नेः सख्युः शिवस्य ।
ईड्यस्य वृष्णो बृहतः स्वासो भामासो यामन्नक्तवश्चिकित्रे ॥४॥
अस्य । यामासः । बृहतः । न । वग्नून् । इंधानाः । अग्नेः । सख्युः । शिवस्य ।
ईड्यस्य । वृष्णः । बृहतः । सुऽआसः । भामासः । यामन् । अक्तवः । चिकित्रे ॥४॥

बृहतो महतोऽस्याग्नेः संबंधिन इंधाना दीप्यमाना यामासः । यांति गच्छंतीति यामा रश्मयः । न वग्नून् स्तुतिकारिणो जनान्न बाधंते । किंतु सख्युः सुत्यस्तोतृत्वयष्टृत्वयष्टव्यत्वलक्षणेन सख्येन सखिभूतस्य शिवस्य कल्याणस्य भक्तानां सुखकरस्येड्यस्य स्तोतव्यस्य वृष्णः कामानां वर्षितुर्बृहतो महतः स्वासः शोभनास्यस्यास्याग्नेः स्वभूता अक्तवस्तमांस्यंजंतोऽपगमयंत आकृतिभिः संगता वा भामासः ॥ भाम क्रोधे ॥ तीक्ष्णा अप्रसह्या रश्मयो यामन् । याति देवान्प्रति तर्पणाय यांति देवा एतं प्रत्यंगभावायेति यामा यज्ञः । तस्मिंश्चिकित्रे । सर्वतो जज्ञिरे । प्रथिता बभूवन् ॥

स्वना न यस्य भामासः पवंते रोचमानस्य बृहतः सुदिवः ।
ज्येष्ठेभिर्यस्तेजिष्ठैः क्रीळुमद्भिर्वर्षिष्ठेभिर्भानुभिर्नक्षति द्यां ॥५॥
स्वनाः । न । यस्य । भामासः । पवंते । रोचमानस्य । बृहतः । सुऽदिवः ।
ज्येष्ठेभिः । यः । तेजिष्ठैः । क्रीळुमत्ऽभिः । वर्षिष्ठेभिः । भानुऽभिः । नक्षति । द्यां ॥५॥

रोचमानस्य दीप्यमानस्य बृहतो महतः सुदिवः शोभनदीप्तेर्वा यस्याग्नेः स्वभूता भामासः ॥ भा दीप्तौ ॥ दीप्ता रश्मयः स्वना न स्वनंतो मरुत इव पवंते सर्वतः शब्दं कुर्वंतो गच्छंति । किंच योऽग्निर्ज्येष्ठेभिरत्यंतं प्रशस्तैस्तेजिष्ठैस्तेजस्वितमैः क्रीळुमद्भिः क्रीडनवद्भिर्वर्षिष्ठेभिर्वृद्धतमैर्भानुभिरात्मीयैस्तेजोभिर्वा द्युलोकं नक्षति व्याप्नोतीति । स त्वं देवानावहेत्युत्तरेण संबंधः ॥

अस्य शुष्मासो ददृशानपवेर्जेहमानस्य स्वनयन्नियुद्भिः ।
प्रत्नेभिर्यो रुशद्भिर्देवतमो वि रेभद्भिरर्तिर्भाति विभ्वा ॥६॥
अस्य । शुष्मासः । ददृशानऽपवेः । जेहमानस्य । स्वनयन् । नियुत्ऽभिः ।
प्रत्नेभिः । यः । रुशत्ऽभिः । देवऽतमः । वि । रेभत्ऽभिः । अरतिः । भाति । विऽभ्वा ॥६॥

ददृशानपवेर्दर्शनीयज्वालाग्नेः । यद्वा । पविर्वज्र आयुधं । दृश्यमानायुधस्य । जेहमानस्य । जेहतिर्गतिकर्मा । हविरादाय देवान्प्रति गच्छतोऽस्याग्नेः स्वभूताः शुष्मासः शोषका नियुद्भिः । नियुतो वायोरिति वायोरश्वा नियुतः । तद्युक्तैर्वायुभिः संयुक्ता रश्मयः स्वनयन् । शब्दायंते । किंच देवतमो देवानां मुख्योऽरतिर्गंता विभ्वा विभवनशीलो महान् योऽग्निः प्रत्नेभिः पुराणै रुशद्भिः श्वेतवर्णै रेभद्भिः शब्दायमानैस्तेजोभिर्वि भाति विविधं दीप्यते ॥

स आ वक्षि महि न आ च सत्सि दिवस्पृथिव्योरर्रतिर्युवत्योः ।
अग्निः सुतुकः सुतुकेभिरश्वै रभस्वद्भी रभस्वाँ एह गम्याः ॥७॥
सः । आ । वक्षि । महि । नः । आ । च । सत्सि । दिवःपृथिव्योः । अरतिः । युवत्योः ।
अग्निः । सुऽतुकः । सुऽतुकेभिः । अश्वैः । रभस्वत्ऽभिः । रभस्वान् । आ । इह । गम्याः ॥७॥

हे अग्ने स तादृशस्त्वं नोऽस्मदीये यज्ञे महि महान् देवाना वक्षि । आवह । प्रापय । किंच युवत्योः परस्परं मिश्रितयोस्तरुण्योर्वा दिवस्पृथिव्योर्द्यावापृथिव्योर्मध्येऽरतिरग्निः सूर्यात्मना गंता त्वमा सत्सि । अस्माकं यज्ञमासीद । तथा सुतुकः । तुकिर्गत्यर्थः । सुगमः स्तोतृभिर्यष्टृभिश्च सुखेन प्राप्तव्यो रभस्वान्वेगवानग्नि-रंगनादिगुणयुक्तस्त्वं सुतुकेभिः सुगमै रभस्वद्भिर्वेगवद्भिरश्वै रोहिदाख्यैः सहेहास्मदीये यज्ञ आ गम्याः । आगच्छ ॥ ॥३१॥

प्र त इति सप्तर्चं चतुर्थं सूक्तं । ऋष्याद्याः पूर्ववत् । प्र त इत्यनुक्रांतं ॥ प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

प्र ते यक्षि प्र त इयर्मि मन्म भुवो यथा वंद्यो नो हवेषु ।
धन्वन्निव प्रपा असि त्वमग्न इयक्षवे पूरवे प्रत्न राजन् ॥१॥
प्र । ते । यक्षि । प्र । ते । इयर्मि । मन्म । भुवः । यथा । वंद्यः । नः । हवेषु ।
धन्वन्ऽइव । प्रऽपा । असि । त्वं । अग्ने । इयक्षवे । पूरवे । प्रत्न । राजन् ॥१॥

हे अग्ने ते तुभ्यं हविः प्र यंसि। प्रयच्छामि। यजिर्दानार्थः। तथा मनः मननीयां स्तुतिं ते त्वदर्थं प्रेयमि। प्रेरयामि। प्रोच्चारयामि। वंद्यः सर्वैर्वंदनीयस्त्वं नोऽस्मदीयेषु हवेषु देवाह्वानेषु यथा त्वं संनिहितो भुवः भवसि तथा हविः प्रयच्छामि स्तौमि च। हे प्रत्न पुराण राजन् सर्वस्य जगतः स्वामिन् हे अग्ने स त्वमियक्षवे यष्टुमिच्छते पूरवे। पूरुरिति मनुष्यनाम। मनुष्याय यजमानाय हविर्भिर्देवान्पूरयित्रे जनाय धन्वन्निव प्रपासि। यथा धन्वन् धन्वनि मरौ निरुदकप्रदेशे प्रपा। प्रपिबंत्यत्रेति प्रपा। सा यथोदकप्रदानेन जनेभ्यः सुखदा भवति एवं त्वं धनदानेन तस्मै सुखदाता भवसि॥

यं त्वा जनासो अभि संचरंति गाव उष्णमिव व्रजं यविष्ठ।
दूतो देवानामसि मर्त्यानामंतर्महाँश्चरसि रोचनेन॥२॥
यं। त्वा। जनासः। अभि। संऽचरंति। गावः। उष्णंऽइव। व्रजं। यविष्ठ।
दूतः। देवानां। असि। मर्त्यानां। अंतः। महान्। चरसि। रोचनेन॥२॥

हे यविष्ठ युवतमाग्ने यं त्वा त्वां जनासो जना यजमानाः फलप्राप्त्यर्थमभि संचरंति अभितः परिचरंति सेवंते। तत्र दृष्टांतः। गाव उष्णमिव यथा गावः शीतार्ता उष्णं शीतजनितदुःखापनोदनार्थमुष्णं व्रजं गोष्ठमभि गच्छंति तद्वत्। स त्वं देवानामिंद्रादीनां मर्त्यानां मनुष्याणां च दूतोऽसि हविष्प्रापणद्वारा। ततो महांस्त्वमंतर्द्यावापृथिव्योर्मध्ये हवींष्यादाय रोचनेनांतरिक्षेण लोकेन चरसि। गच्छसि। तं त्वां स्तुम इति शेषः॥

शिशुं न त्वा जेन्यं वर्धयंती माता बिभर्ति सचनस्यमाना।
धनोरधि प्रवता यासि हर्यञ्जिगीषसे पशुरिवावसृष्टः॥३॥
शिशुं। न। त्वा। जेन्यं। वर्धयंती। माता। बिभर्ति। सचनस्यमाना।
धनोः। अधि। प्रऽवता। यासि। हर्यन्। जिगीषसे। पशुःऽइव। अवऽसृष्टः॥३॥

हे अग्ने जेन्यं जयशीलं त्वा त्वां शिशुं न पुत्रमिव वर्धयंती पोषयंती माता पृथिवी सचनस्यमाना संपर्कमिच्छंती सती बिभर्ति। धारयति। स त्वं हर्यन् कामयमानस्तस्मिँल्लोके धनोरधि। अधिः सप्तम्यर्थद्योतकः। अंतरिक्षात्प्रवता प्रवणेन मार्गेण यासि। यज्ञं प्रत्यागच्छसि। किंच त्वमवसृष्टो यष्टृभिर्हविरादाय जिगीषसे। देवान्प्रति गंतुमिच्छसि। कथमिव। पशुरिव यथा विमुक्तः पशुर्गोष्ठं प्रत्यागच्छति तद्वत्॥

मूरा अमूर न वयं चिकित्वो महित्वमग्ने त्वमंग वित्से।
शये वव्रिश्चरति जिह्वयादन्रेरिह्यते युवतिं विश्पतिः सन्॥४॥
मूराः। अमूर। न। वयं। चिकित्वः। महिऽत्वं। अग्ने। त्वं। अंग। वित्से।
शये। वव्रिः। चरति। जिह्वया। अदन्। रेरिह्यते। युवतिं। विश्पतिः। सन्॥४॥

हे अमूरामूढ अत एव चिकित्वश्चेतनवन् हे अग्ने मूरा मूढा वयं तव माहात्म्यं न जानीमः। किंतु हे अग्ने त्वमंग। अंगेति निपात एवार्थे। त्वमेव तव महित्वं माहात्म्यं वित्से। जानासि। त्वत्तः कोऽन्यो वेदितुमर्हति। किंच वव्रिर्जीर्णे ओषधीसंघः शये। शेते। तिष्ठति। यद्वा। वव्रिरिति रूपनाम सामर्थ्याद्दांतर्णीतमत्वर्थं द्रष्टव्यं। आहवनीयाख्येन रूपेण रूपवाञ्शये। चरति। अथ जिह्वया ज्वालाख्ययादन्हवींषि भक्षयंश्चरति॥ वाक्यभेदादनिघातः॥ किंच विश्पतिर्विशां स्वामी सन्नग्निर्युवतिमात्मनो मिश्रयित्रीमाकृतिं दीर्घप्रकृतया ज्वालया जिह्वया रेरिह्यते। अत्यर्थं लेढि। आस्वादयति॥ लिह आस्वादने। यङि रूपं॥ यद्वा। सोऽग्निर्युवतिं तरुणीं जीर्णौषधिकां पृथिवीमास्वादयति॥

कूर्चिज्जायते सनयासु नव्यो वने तस्थौ पलितो धूमकेतुः ।
अस्नातापो वृषभो न प्र वेति सचेतसो यं प्रणयंत मर्ताः ॥५॥
कूऽचित् । जायते । सनयासु । नव्यः । वने । तस्थौ । पलितः । धूमऽकेतुः ।
अस्नाता । आपः । वृषभः । न । प्र । वेति । सऽचेतसः । यं । प्रऽनयंत । मर्ताः ॥५॥

नव्यो नवतरः स्तुत्यो वाग्निः कूचित् क्वचित्प्रदेशे जायते । कुत्र । सनयासु पुराणीषु जीर्णास्वोषधीष्वरण्योः । तथा पलितः पालयिता श्वेतवर्णो धूमकेतुर्धूमप्रज्ञानोऽग्निर्वने सर्वस्मिन्नरण्ये तस्थौ । तिष्ठति । यद्वा । वन उदके मेघगते विद्युदात्मना तिष्ठति च । अस्नाता स्नानमकुर्वन्ननपेक्षितस्नानः सर्वदा शुद्धः सोऽग्निरापः ॥ सुब्व्यत्ययः ॥ अप उदकानि शांत्यर्थं प्र वेति । प्रगच्छति । तत्र दृष्टांतः । वृषभो न यथा वृषभस्तृष्णोपशमनार्थमरण्यमध्यस्थान्युदकानि प्रगच्छति तद्वत् । मर्ता मनुष्या ऋत्विजः सचेतसः समानमनस्काः समानप्रज्ञानाः संतो यमग्निं प्रणयंत हविर्भिः प्रीणयंति ॥

तनूत्यजेव तस्करा वनर्गू रशनाभिर्दशभिरभ्यधीतां ।
इयं ते अग्ने नव्यसी मनीषा युक्ष्वा रथं न शुचयद्भिरंगैः ॥६॥
तनूत्यजाऽइव । तस्करा । वनर्गू इति । रशनाभिः । दशऽभिः । अभि । अधीतां ।
इयं । ते । अग्ने । नव्यसी । मनीषा । युक्ष्व । रथं । न । शुचयत्ऽभिः । अंगैः ॥६॥

हे अग्ने वनर्गू वनगामिनौ तनूत्यजा चौर्ये मर्तुं कृतनिश्चयौ धृष्टौ तस्करा तस्करौ यथा पथिकं मोषणार्थं रज्ज्वा बद्ध्वाकृष्य च क्वचित्प्रदेशे स्थापयतः तद्वत् । तथा यास्कः । तनूत्यक् तनूत्यक्ता वनर्गू वनगामिनावग्निमंथनौ बाहू तस्कराभ्यामुपमिमीते । नि० ३. १४. । इत्यादि । अधीतां ॥ दधातेर्लुङि सिचो लुकि छंदस्युभयथेति तस आर्धधातुकत्वेन ङित्त्वाद्घुमास्थेतीकारः ॥ ततो हे अग्ने ते त्वदर्थं नव्यसी नवतरेयं मनीषा स्तुतिर्मया क्रियते । एतज्ज्ञात्वा शुचयद्भिः सर्वं प्रकाशयद्भिरात्मीयैरंगैस्तेजोभिरात्मानं मदीयं यज्ञं प्रति युक्ष्व । योजय । कथमिव । रथं न यथा रथमश्वैः संयोजयंति तद्वत् ॥

उखासंभरणीयेष्टावग्नेर्ब्रह्मण्वतो याज्या ब्रह्म च त इत्येषा । सूत्रितं च । ब्रह्म च ते जातवेदो नमश्च पुरूण्यग्ने पुरुधा त्वाया । आ० ४. १. । इति ॥

ब्रह्म च ते जातवेदो नमश्चेयं च गीः सदमिद्वर्धनी भूत् ।
रक्षा णो अग्ने तनयानि तोका रक्षोत नस्तन्वो३ अप्रयुच्छन् ॥७॥
ब्रह्म । च । ते । जातऽवेदः । नमः । च । इयं । च । गीः । सदं । इत् । वर्धनी । भूत् ।
रक्ष । नः । अग्ने । तनयानि । तोका । रक्ष । उत । नः । तन्वः । अप्रऽयुच्छन् ॥७॥

हे जातवेदो जातप्रज्ञाग्ने ते त्वदर्थं ब्रह्मास्माभिर्दीयमानं हवीरूपमन्नं वर्धनी वर्धनं भूत् । भवतु । तथा नमो नमस्कारश्च किंचेयमिदानींक्रियमाणैषा स्तुतिः सदमित् सदैव वर्धनी वर्धयित्री भूत् । भवतु । तस्मात्त्वे अग्ने नोऽस्माकं तनयानि पुत्रांस्तोका पौत्रांश्च रक्ष । पालय । उतापि चाप्रयुच्छन्नप्रमाद्यंस्त्वं नोऽस्माकं तन्वोऽंगानि रक्ष ॥ ॥३२॥

एकः समुद्र इति सप्तर्चं पंचमं सूक्तं । ऋष्याद्याः पूर्ववत् । विनियोगश्च । एक इत्यनुक्रांतं ॥

एकः समुद्रो धरुणो रयीणामस्मद्धृदो भूरिजन्मा वि चष्टे ।
सिषक्त्यूधर्निण्योरुपस्थ उत्सस्य मध्ये निहितं पदं वेः ॥१॥

एकः । समुद्रः । धरुणः । रयीणां । अस्मत् । हृदः । भूरिऽजन्मा । वि । चष्टे ।
सिसक्ति । ऊधः । निण्योः । उपऽस्थे । उत्सस्य । मध्ये । निऽहितं । पदं । वेः । इति वेः ॥१॥

समुद्रः यस्माद्धनान्युदकानि वा समुद्रवंतीति तादृशो रयीणां धनानां धरुणो धारयितैकोऽसहायो भूरिजन्मा बहुविधजननो नानायज्ञेष्वाहवनीयादिभावेन बहुजननः सोऽग्निरस्मत् ॥ सुपां सुलुगिति षष्ठ्या लुक् ॥ अस्माकं हृदो हृदयान्यभिलषितानि वि चष्टे । विपश्यति । जानाति । उक्तं च । मनो वै देवा मनुष्यस्य जानंतीति । किंच निण्योः । अंतर्हितनामैतत् । अंतर्हितयोर्ज्योतिस्तमोभ्यामाच्छादितयोः प्रातःसायंकालयोरुपस्य उपस्थाने समीपे वर्तमानमूधो रात्रिं सिषक्ति । सेवते । उपजीवति । यद्वा । निण्योरंतर्हितस्यांतरिक्षस्य समीपे वर्तमानमूधो मेघं सेवते । अथ प्रत्यक्षः । हे अग्ने उत्सस्योदकधारकस्य लोकस्य मध्ये पदमपां स्थानं निहितं । तन्माध्यमिकां वाचं वेः । गच्छ । यद्वा । उत्सस्य मेघस्य मध्ये निहितं पदं विद्युदाख्यं तत् स्वात्मतया गच्छ ॥ वेः । वी गत्यादिषु । लङि सिपि रूपं । वाक्यभेदादनिघातः ॥

समानं नीळं वृषणो वसानाः सं जग्मिरे महिषा अर्वतीभिः ।
ऋतस्य पदं कवयो नि पांति गुहा नामानि दधिरे पराणि ॥२॥
समानं । नीळं । वृषणः । वसानाः । सं । जग्मिरे । महिषाः । अर्वतीभिः ।
ऋतस्य । पदं । कवयः । नि । पांति । गुहा । नामानि । दधिरे । पराणि ॥२॥

वृषण आहुतीनां सेक्तारः समानमेकं नीळं स्थानमग्निं वसाना मंत्रत आच्छादयंतो महिषा महांतो यजमाना अर्वतीभिर्वडवाभिः सं जग्मिरे । समगच्छंत । अश्ववंतोऽभूवन् । यद्वा । अग्निमेवात्मीययज्ञं प्रत्यागंतुं रोहिदाख्याभिर्वडवाभिः संयोजितवंतः । तथा कवयो मेधाविन ऋतस्योदकस्य पदमावासस्थानमग्निं नि पांति । नितरां रक्षंति । हविर्भिः स्तुतिभिश्चाराधयंतीत्यर्थः । ततो गुहा गुहायामंतरिक्षे स्थितानि दिव्यानि नामान्युदकानि दधिरे । धारयंति । यद्वा । गुहा गूढे संवृते हृदये पराणि प्रधानान्यग्निर्जातवेदा वैश्वानर इत्यादीनि नामानि दधिरे । कुर्वंति । स्तुवंतीत्यर्थः ॥

ऋतायिनी मायिनी सं दधाते मित्वा शिशुं जज्ञतुर्वर्धयंती ।
विश्वस्य नाभिं चरतो ध्रुवस्य कवेश्चित्तंतुं मनसा वियंतः ॥३॥
ऋतयिनी इत्यृतऽयिनी । मायिनी इति । सं । दधाते इति । मित्वा । शिशुं । जज्ञतुः ।
वर्धयंती इति ।
विश्वस्य । नाभिं । चरतः । ध्रुवस्य । कवेः । चित् । तंतुं । मनसा । विऽयंतः ॥३॥

ऋतायिनी ऋतवत्यौ सत्यवत्यौ अत एव मायिनी प्रज्ञावत्यौ कर्मयुक्ते वा द्यावापृथिव्यौ यज्ञसाधनभूते अरणी वेममग्निं सं दधाते । सम्यग्धारयतः । अग्निं सूर्यात्मना केवलान्यात्मना वा सं दधाते । मित्वा कालपरिमाणं कृत्वा यद्वा संपरिच्छिद्य शिशुं शंसनीयं बालमग्निं जज्ञतुः । जनयतः । वर्धयंती वर्धयंत्यौ द्यावापृथिव्यौ । लोके यथा परिच्छेदाय पुत्रं पितरौ जनयतस्तद्वत् । ततो विश्वस्य सर्वस्य चरतो जंगमस्य ध्रुवस्य स्थावरस्य च जगतो नाभिं नाभिभूतं मध्यं प्रधानभूतं वा कवेर्मेधाविनोऽग्नेस्तंतुं तनितारं वैश्वानराख्यमंशमेव मनसा वियंतो विविधं गच्छंतो मनुष्याः सुखेन युज्यंत इति शेषः । तं वयं यजाम इति ॥

ऋतस्य हि वर्तनयः सुजातमिषो वाजाय प्रदिवः सचंते ।
अधीवासं रोदसी वावसाने घृतैरन्नैर्वावृधाते मधूनां ॥४॥

ऋतस्य । हि । वर्तनयः । सुऽजातं । इषः । वाजाय । प्रऽदिवः । सचंते ।
अधीवासं । रोदसी इति । ववसाने इति । घृतैः । अन्नैः । ववृधाते इति । मधूनां ॥४॥

ऋतस्य यज्ञस्य वर्तनयः प्रवर्तका इषोऽभिलषितानीच्छंतः प्रदिवः पुरातना ऋत्विग्यजमानाः सुजातमाधानकाले सुष्ठूत्पन्नमग्निं वाजाय बलार्थमन्नार्थं वा सचंते हि । सेवंते खलु । अपि च वावसाने सर्वस्य जगत आच्छादयित्र्यौ रोदसी द्यावापृथिव्यावधीवासमोषधिनक्षत्राद्यात्मना निवसंतं । यद्वा । अधिरुपर्यर्थे । त्रयाणां लोकानामुपर्यग्निविद्युदादित्यात्मना निवसंतं । अग्निं मधूनामुदकानां जन्यत्वेन संबंधिभिर्घृतैरन्नैः पुरोडाशादिभिश्च वावृधाते । वर्धयां चक्रतुः । वर्धयतः । तस्माद्वयमपि तमग्निमभिष्टुम इत्यभिप्रायः ॥

सप्त स्वसॄररुषीर्वावशानो विद्वान्मध्व उज्जभारा दृशे कं ।
अंतर्येमे अंतरिक्षे पुराजा इच्छन्वव्रिमविदत्पूषणस्य ॥५॥
सप्त । स्वसॄः । अरुषीः । वावशानः । विद्वान् । मध्वः । उत् । जभार । दृशे । कं ।
अंतः । येमे । अंतरिक्षे । पुराऽजाः । इच्छन् । वव्रिं । अविदत् । पूषणस्य ॥५॥

वावशानः कामयमानो वाश्यमानः स्तोतृभिः स्तूयमानो वा विद्वान् सर्वं जानानः सोऽग्निररुषीरारोचमानाः सप्त सप्तसंख्याकाः स्वसॄः स्वयंसारिणीः काली कराली चेत्यादिकाः सप्त जिह्वा मध्वो मदकराद्यज्ञादुज्जभार । उज्जहार । ऊर्ध्वं हृतवान् । यज्ञे स्वतेजसा प्रादुर्भूत इत्यर्थः । किमर्थं कं सुखेन दृशे सर्वेषामेव पदार्थानां दर्शनार्थं । किंच पुराजाः पुराजातः सोऽग्निर्द्यावापृथिव्योरंतर्मध्येऽंतरिक्षे स्थितस्ता जिह्वा येमे । नियमितवान् । सर्वत्र तेजोयुक्तो वर्तत इत्यर्थः । अपि चेच्छन्यजमानान्कामयमानोऽग्निः पूषणस्य । पूषेति पृथिवीनाम । पार्थिवस्य लोकस्य वव्रिं रूपं पृश्निवर्णमविदत् । प्रायच्छत् । यद्वा । मूर्धा भुवो भवति नक्तमग्निस्ततः सूर्यो जायते प्रातरुद्यन् । ऋ॰ १०. ८८. ६. । इति मंत्रांतरे दर्शनादादित्यात्मनाग्निः स्तूयते । कामयमानः सूर्यात्माग्निः सप्तसंख्याकान् स्वसॄ रश्मीन् मध्वः समुद्रोदकादुद्धृतवान् । प्राप्तः । अंतरिक्षे विद्युदात्मना स्थित्वा वृष्टिलक्षणं रूपं पृथिव्याः प्रयच्छति ॥

सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरो गात् ।
आयोर्ह स्कंभ उपमस्य नीळे पथां विसर्गे धरुणेषु तस्थौ ॥६॥
सप्त । मर्यादाः । कवयः । ततक्षुः । तासां । एकां । इत् । अभि । अंहुरः । गात् ।
आयोः । ह । स्कंभः । उपऽमस्य । नीळे । पथां । विऽसर्गे । धरुणेषु । तस्थौ ॥६॥

कवयो मेधाविन ऋषयः सप्त मर्यादाः । कामजेभ्यः क्रोधजेभ्यश्चोद्धृताः पानमक्षाः स्त्रियो मृगया दंडः पारुष्यमन्यदूषणमिति सप्त मर्यादाः । यद्वा । स्तेयं गुरुतल्पारोहणं ब्रह्महत्यां सुरापानं दुष्कृतकर्मणः पुनःपुनःसेवां पातकेऽनृतोद्यं । नि॰ ६. २७. । इति निरुक्ते निर्दिष्टाः सप्त मर्यादाः । अवस्थितास्ततक्षुः । तक्षतिः करोतिकर्मा । सुष्ठु लंघनीयाश्चक्रुः । त्यक्तवंत इत्यर्थः । तासां मर्यादानामेकामिदेकामेवांहुरः पापवान् पुरुषोऽभिगात् । अभिगच्छति । यस्त्वेवं करोति स पापवान्भवतीत्यर्थः । किंचायोस्तस्य मनुष्यस्य स्कंभः स्कंभयिता निरोधकोऽग्निरुपमस्य समीपभूतस्यायोर्नीळे स्थाने पथामादित्यरूपस्य स्वस्य रश्मीनां विसर्गे विसर्जनस्थानेऽंतरिक्षमध्ये वर्तमानेषु धरुणेषूदकेषु तस्थौ । विद्युदात्मना तिष्ठति । अनेन लोकत्रयवर्तित्वमिति ॥

असच्च सच्च परमे व्योमन्दक्षस्य जन्मन्नदितेरुपस्थे ।
अग्निर्ह नः प्रथमजा ऋतस्य पूर्व आयुनि वृषभश्च धेनुः ॥७॥

असत्। च। सत्। च। परमे। विऽओमन्। दक्षस्य। जन्मन्। अदितेः। उपऽस्थे।
अग्निः। ह। नः। प्रथमऽजाः। ऋतस्य। पूर्वे। आयुनि। वृषभः। च। धेनुः ॥७॥

असद्व्याकृतं सच्च व्याकृतं। असदेवेदमग्र आसीत् तत्सदासीत् तत्समभवत्। छां० उ० ३. १९. १.। इति श्रुतेः। सदसदात्मकं जगत्सर्वं परम उत्तमे व्यामसहिते व्योमन्व्योमनि कारणात्मनि आत्मभूत्सदा। अदितेः पृथिव्या उपस्थ उपस्थाने समीपे दक्षस्य प्रजापतेः। यद्वा। दक्षस्य। स त्रेधात्मानं व्यभजतादित्यं तृतीयं वायुं तृतीयमिति श्रुतेः। शत० १०. ६. ५. ३.। तृतीयस्य द्युलोकस्याधिष्ठातृत्वादादित्यस्य। जन्मञ्जन्मनि। तत एवं सति मनुष्यस्य सृष्टिक्रमात्पूर्वमग्निर्हाग्निरेवर्तस्य कर्मफलस्य भोक्तॄणां नोऽस्माकं प्रथमजाः प्रथमजातः समुत्पन्नः। तेजो रसो निरवर्ततामिः। शत० १०. ६. ५. २. बृ० उ० १. १. २. २.। इति श्रवणात्। पश्चात्तत्प्रकरणे ततो मनुष्या अजायंतेति प्रथमत एव मनुष्यसृष्टेरभिहितत्वात् अनंतरं पूर्वे। उत्तरसृष्टिमपेक्ष्य पूर्वत्वं। आयुनि काले ऽयमग्निरेव वृषभश्चासीत्। धेनुश्चाभवत्। स्त्रीपुंसवत् स्त्रीपुंसात्मकोऽभवदित्यर्थः ॥ ॥३३॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये सप्तमाष्टके पंचमोऽध्यायः ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्। निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥
सप्तमस्याष्टकस्येत्थं व्याकार्षीत्पंचमं सुधीः। सायणाह्वस्ततः षष्ठमध्यायं व्याचिकीर्षति ॥

दशमे मंडले प्रथमेऽनुवाके षोडश सूक्तानि। तत्रायं स यस्येति सप्तर्चं षष्ठं सूक्तं। आप्त्यस्य त्रितस्यार्षं त्रैष्टुभमाग्नेयं। अयमित्यनुक्रांतं ॥ प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

अयं स यस्य शर्मन्नवोभिरग्नेरेधते जरिताभिष्टौ।
ज्येष्ठेभिर्यो भानुभिर्ऋषूणां पर्येति परिवीतो विभावा ॥१॥
अयं। सः। यस्य। शर्मन्। अवःऽभिः। अग्नेः। एधते। जरिता। अभिष्टौ।
ज्येष्ठेभिः। यः। भानुऽभिः। ऋषूणां। परिऽएति। परिऽवीतः। विभाऽवा ॥१॥

जरिता स्तोताभिष्टौ यागे कृते यस्याग्नेरवोभिः पालनैः शर्मञ्छर्मणि स्वगृह एधते वर्धते सोऽयमग्निर्यागार्थमस्माभिराहूत इति शेषः। विभावा दीप्तिमान् योऽग्निर्ऋषूणां सूर्यरश्मीनां ज्येष्ठेभिः प्रशस्तैर्भानुभिस्तेजोभिः परिवीतः परिवृतः पर्येति सर्वतो गच्छति। यत्र यत्र गंतव्यं तत्र तत्राप्रतिहतगतिर्गच्छतीत्यर्थः ॥

यो भानुभिर्विभावा विभात्यग्निर्देवेभिर्ऋतावाजस्रः।
आ यो विवाय सख्या सखिभ्योऽपरिह्वृतो अत्यो न सप्तिः ॥२॥
यः। भानुऽभिः। विभाऽवा। विऽभाति। अग्निः। देवेभिः। ऋतऽवा। अजस्रः।
आ। यः। विवाय। सख्या। सखिऽभ्यः। अपरिऽह्वृतः। अत्यः। न। सप्तिः ॥२॥

ऋतवा सत्यवानुदकवान्यज्ञवान्वाजस्रोऽनुपक्षीणोऽहिंसितो वा। केनचिदनभिभूत इत्यर्थः। विभावा दीप्तिमान्योऽग्निर्देवेभिर्देवैर्द्योतमानैर्भानुभिस्तेजोभिर्विभाति विविधं दीप्यते किंच योऽग्निः सख्या सख्यानि

सखिभिः कर्तव्यानि कर्माणि हविरादीनि । कर्तुमिति शेषः । सखिभ्यः सखिभूतानां यजमानानामर्थायापरिह्रुतोऽपरिहिंसितः । अपरिश्रांत इत्यर्थः । आ विवाय आभिमुख्येन गच्छति । तत्र दृष्टांतः । सप्तिः । सदासर्पण इत्यर्थः । अत्यो न यथा सततगमनसमर्थोऽश्वोऽपरिश्रांतो गच्छति तद्वत् । सोऽयमग्निरस्माभिर्यागार्थमाहूत इति पूर्ववद्योज्यं ॥

ईशे यो विश्वस्या देववीतेरीशे विश्वायुरुषसो व्युष्टौ ।
आ यस्मिन्मना हवींष्यग्नावरिष्टरथः स्कभ्नाति शूषैः ॥३॥
ईशे । यः । विश्वस्याः । देवऽवीतेः । ईशे । विश्वऽआयुः । उषसः । विऽउष्टौ ।
आ । यस्मिन् । मना । हवींषि । अग्नौ । अरिष्टऽरथः । स्कभ्नाति । शूषैः ॥३॥

योऽग्निर्विश्वस्या देववीतेः सर्वस्य यज्ञस्येशे ईष्टे । अपि च विश्वायुः सर्वत्राप्रतिहतगमन उषसो व्युष्टौ विवासन उदयकाले होमार्थं यजमानानामीशे ईष्टे । शूषैः शत्रुबलैररिष्टरथोऽहिंसितयज्ञरथः सर्व एव यजमानो यस्मिन्नग्नौ मना मननीयानि हवींष्या स्कभ्नाति आदरेण प्रतिबध्नाति प्रक्षिपति । सोऽयमग्निरस्माभिर्यागार्थमाहूत इत्यर्थः ॥

शूषेभिर्वृधो जुषाणो अर्कैर्देवाँ अच्छा रघुपत्वा जिगाति ।
मंद्रो होता स जुह्वा३ यजिष्ठः संमिश्लो अग्निरा जिघर्ति देवान् ॥४॥
शूषेभिः । वृधः । जुषाणः । अर्कैः । देवान् । अच्छ । रघुऽपत्वा । जिगाति ।
मंद्रः । होता । सः । जुह्वा । यजिष्ठः । संऽमिश्लः । अग्निः । आ । जिघर्ति । देवान् ॥४॥

वृधो वर्धितोऽग्निः शूषेभिर्हविर्लक्षणैर्बलैः । बलनिमित्तैर्हविर्भिरित्यर्थः । अर्कैः स्तोत्रैश्च जुषाणः सेव्यमानः सन् देवानिंद्रादीनच्छाप्तुं रघुपत्वा लघुपतनः शीघ्रगामी जिगाति । गच्छति । गत्वा च मंद्रः स्तुत्यो होता देवानामाह्वाता होमनिष्पादको वा यजिष्ठो यष्टृतमः संमिश्लः स्वगुणैर्देवैर्वा संप्रयुक्तः सोऽग्निर्देवान्प्रति हविरा जिघर्ति । आहारयति । देवेभ्यो हविर्ददातीत्यर्थः ॥

तमुस्रामिंद्रं न रेजमानमग्निं गीर्भिर्नमोभिरा कृणुध्वं ।
आ यं विप्रासो मतिभिर्गृणंति जातवेदसं जुह्वं सहानां ॥५॥
तं । उस्रां । इंद्रं । न । रेजमानं । अग्निं । गीःऽभिः । नमःऽभिः । आ । कृणुध्वं ।
आ । यं । विप्रासः । मतिऽभिः । गृणंति । जातऽवेदसं । जुह्वं । सहानां ॥५॥

हे ऋत्विजः यूयमुस्रां भोगानामुत्स्राविणं दातारं रेजमानं ज्वालात्मना कंपमानं तमग्निमिंद्रं नेंद्रमिव गीर्भिः स्तुतिभिर्नमोभिर्हविर्भिश्चा कृणुध्वं । अस्मदभिमुखं कुरुत । विप्रासो मेधाविनः स्तोतारः सहानां शत्रुबलाद्यभिभवितॄणां देवानां जुह्वमाह्वातारं जातवेदसं जातधनं जातप्रज्ञं वा यमग्निमा गृणंति आदरेण स्तुवंति । तमा कृणुध्वमिति पूर्वेण संबंधः ॥

सं यस्मिन्विश्वा वसूनि जग्मुर्वाजे नाश्वाः सप्तीवंत एवैः ।
अस्मे ऊतीरिंद्रवाततमा अर्वाचीना अग्न आ कृणुष्व ॥६॥
सं । यस्मिन् । विश्वा । वसूनि । जग्मुः । वाजे । न । अश्वाः । सप्तिऽवंतः । एवैः ।
अस्मे इति । ऊतीः । इंद्रवातऽतमाः । अर्वाचीनाः । अग्ने । आ । कृणुष्व ॥६॥

हे अग्ने यस्मिंस्त्वयि विश्वानि वसूनि धनानि सं जग्मुः स्वत्वेन संगतानि भवंति । तत्र दृष्टांतः । एवैर्गमनैः सप्तीवंतः सर्पणवंतः शीघ्रगमनसमर्था अश्वा वाजे न यथा संग्रामे संगतास्तद्वत् । हे अग्ने स त्वमिंद्रवाततमा इंद्रेणाभिगता ऊती रक्षा अस्मे अस्मास्वर्वाचीना अभिमुखीरा वृणुष्व । आदरेण कुरु ॥

अधा ह्यग्ने मह्ना निषद्या सद्यो जज्ञानो हव्यो बभूथ ।
तं ते देवासो अनु केतमायन्नधावर्धंत प्रथमास ऊमाः ॥७॥
अध । हि । अग्ने । मह्ना । निऽसद्य । सद्यः । जज्ञानः । हव्यः । बभूथ ।
तं । ते । देवासः । अनु । केतं । आयन् । अध । अवर्धंत । प्रथमासः । ऊमाः ॥७॥

अधानंतरं हि यस्माद्धे अग्ने त्वं मह्ना महत्त्वेन जज्ञानो जायमानो ज्वलन्निषद्योपविश्य सद्यस्तस्मिन्प्रजननकाल एव हव्यो हवनार्ह आहुतिप्रक्षेपणार्हो बभूथ भवसि तस्मात्कारणाद्देवासो हविषां दातार ऋत्विग्यजमानास्ते तव स्वभूतं तं तादृशं केतं प्रज्ञानलक्षणमन्वायन् । अनुगच्छंति । दीप्ते त्वयि हवींषि जुह्वतीत्यर्थः । अधानंतरमृत्विगादयः प्रथमासः क्रियाभिजनविद्यागुणैरुत्कृष्टा ऊमास्त्वया रक्षिताः संतोऽवर्धंत । वर्धंते ॥ ॥१॥

स्वस्ति न इति सप्तर्चं सप्तमं सूक्तं । ऋष्याद्याः पूर्ववत् । स्वस्तीत्यनुक्रांतं ॥ उक्तः सूक्तविनियोगः ॥ स्वस्त्ययन्यां प्रधानस्य स्वस्ति न इत्येषानुवाक्या । सूचितं च । अग्निः स्वस्तिमान् स्वस्ति नो दिवो अग्ने पृथिव्याः । आ॰ २. १०. । इति ॥

स्वस्ति नो दिवो अग्ने पृथिव्या विश्वायुर्धेहि यजथाय देव ।
सचेमहि तव दस्म प्रकेतैरुरुष्या ण उरुभिर्देव शंसैः ॥१॥
स्वस्ति । नः । दिवः । अग्ने । पृथिव्याः । विश्वऽआयुः । धेहि । यजथाय । देव ।
सचेमहि । तव । दस्म । प्रऽकेतैः । उरुष्य । नः । उरुऽभिः । देव । शंसैः ॥१॥

हे देव दानादिगुणविशिष्टाग्ने त्वं दिवः पृथिव्या द्यावापृथिव्योः सकाशान्नोऽस्मभ्यं विश्वायुः सर्वान्नं स्वस्ति पुत्रादि यजथाय देवयागार्थं धेहि । प्रयच्छ । सर्वोपद्रवरहिताः सर्वान्नपुत्रयुक्ताश्च संतो वयं यथा यज्वानो भवेम तथास्मान्कुर्विति वाक्यशेषः । अपि च वयं सचेमहि । हे दस्म दर्शनीय देवाग्ने उरुभिर्बहुभिः शंसैः शंसनीयैस्तव संबंधिभिः प्रकेतैः पालनोपायप्रज्ञानैर्नोऽस्मानुरुष्य । रक्ष ॥

इमा अग्ने मतयस्तुभ्यं जाता गोभिरश्वैरभि गृणंति राधः ।
यदा ते मर्तो अनु भोगमानड्वसो दधानो मतिभिः सुजात ॥२॥
इमाः । अग्ने । मतयः । तुभ्यं । जाताः । गोभिः । अश्वैः । अभि । गृणंति । राधः ।
यदा । ते । मर्तः । अनु । भोगं । आनट् । वसो इति । दधानः । मतिऽभिः । सुऽजात ॥२॥

हे अग्ने इमा ईदृश्यो मतयः स्तुतयस्तुभ्यं त्वदर्थं जाता अस्मदादिस्तोतृमुखादुत्पन्नाः । उच्चारिता इत्यर्थः । गोभिरश्वैश्च सहितं राधस्त्वया दीयमानं हिरण्यादिकं धनमभि गृणंति । अभिष्टुवंति । अस्मत्स्तुत्यनुरूपान्नमस्मभ्यं त्वया दत्तमिति प्रशंसंति । यदा मर्तोऽस्मदादिको मनुष्यस्ते त्वया दीयमानं भोगं भोगार्हं धनमन्वानट् प्राप्नोति लभते तदा हे वसो प्रशस्यवसुमन् । यद्वा । स्वेन तेजसा सर्वस्याच्छादयितः । हे सुजात शोभनकर्मार्थमुत्पन्नाग्ने त्वं दधानोऽस्मभ्यं धनं प्रयच्छन् मतिभिरस्मदीयाभिः स्तूयस इति शेषः ॥

अग्निं मन्ये पितरमग्निमापिमग्निं भ्रातरं सदमित्सखायं ।
अग्नेरनीकं बृहतः सपर्यं दिवि शुक्रं यजतं सूर्यस्य ॥३॥
अग्निं । मन्ये । पितरं । अग्निं । आपिं । अग्निं । भ्रातरं । सदं । इत् । सखायं ।
अग्नेः । अनीकं । बृहतः । सपर्यं । दिवि । शुक्रं । यजतं । सूर्यस्य ॥३॥

अहं स्तोता पितरमग्निमेव मन्ये । जाने । आपिं बंधुमग्निमेव मन्ये । भ्रातरमग्निमेव मन्ये । सदमित् सदैवाविसंवादिनं सखायमग्निमेव जानामि । बृहतो महतोऽग्नेरनीकमाहवनीयाख्यं मुखं सपर्यं । परिचरामि । तत्र लुप्तोपममेतत् । दिवि द्युलोके स्थितं यजतं यष्टव्यं पूजनीयं सूर्यस्य संबंधि शुक्रं दीप्तिमन्मंडलं यथा कश्चिदभिप्रेतार्थसिद्ध्य आराधयति तद्वत् ॥

सिध्रा अग्ने धियो अस्मे सनुत्रीर्यं त्रायसे दम आ नित्यहोता ।
ऋतावा स रोहिदश्वः पुरुक्षुर्द्युभिरस्मा अहभिर्वाममस्तु ॥४॥
सिध्राः । अग्ने । धियः । अस्मे इति । सनुत्रीः । यं । त्रायसे । दमे । आ । नित्यऽहोता ।
ऋतऽवा । सः । रोहित्ऽअश्वः । पुरुऽक्षुः । द्युऽभिः । अस्मै । अहऽभिः । वामं । अस्तु ॥४॥

हे अग्ने सनुत्रीः संभक्त्र्योऽस्मे अस्माकं संबंधिन्यो धियः स्तुतयः सिध्राः सिद्धा निष्पन्नाः । त्वदर्थमस्माभिः कृता इत्यर्थः । दम आ अस्मद्यज्ञगृहे मर्यादतयावस्थितस्त्वं नित्यहोता सततं होमनिष्पादको देवानामाह्वाता वा सन् यं त्रायसे कर्मवैगुण्याद्रक्षसि सोऽहं त्वत्प्रसादात्त्वत्सायुज्यं गतः सन्नृतवा यज्ञवान् सत्यवान् वा स्यामिति शेषः । रोहिदश्वो रोहित्संज्ञकाश्वः पुरुक्षुर्बह्वन्नश्च स्यां । किंचास्मा ईदृग्भूताय तुभ्यं द्युभिर्दीप्तिष्वहभिरहःसु दिवसेषु वामं वननीयं हविरस्तु ॥

द्युभिर्हितं मित्रमिव प्रयोगं प्रत्नमृत्विजमध्वरस्य जारं ।
बाहुभ्यामग्निमायवोऽजनंत विक्षु होतारं न्यसादयंत ॥५॥
द्युऽभिः । हितं । मित्रंऽइव । प्रऽयोगं । प्रत्नं । ऋत्विजं । अध्वरस्य । जारं ।
बाहुऽभ्यां । अग्निं । आयवः । अजनंत । विक्षु । होतारं । नि । असादयंत ॥५॥

द्युभिर्हितं दीप्तैराहितं मित्रमिव स्निग्धमिव प्रयोगं प्रयोक्तव्यं प्रत्नं पुराणमृत्विजं होतृसंज्ञकं । अग्निर्वै देवानां होतासीदिति श्रुतेः । अध्वरस्य जारं समापयितारं एवंभूतमग्निमायवो यजमाना मनुष्या बाहुभ्यामजनंत । जनितवंतः । किंच विक्षु मनुष्येषु । तदाकारेषु देवेष्वित्यर्थः । होतारमाह्वातारं न्यसादयंत । नियमेन सादितवंतः । देवानां यागार्थं निरूपितवंत इत्यर्थः ॥

स्वयं यजस्व दिवि देव देवान्किं ते पाकः कृणवदप्रचेताः ।
यथायज ऋतुभिर्देव देवानेवा यजस्व तन्वं सुजात ॥६॥
स्वयं । यजस्व । दिवि । देव । देवान् । किं । ते । पाकः । कृणवत् । अप्रऽचेताः ।
यथा । अयजः । ऋतुऽभिः । देव । देवान् । एव । यजस्व । तन्वं । सुऽजात ॥६॥

हे देव द्योतमानाग्ने त्वं दिवि द्युलोके स्थितान्देवानिंद्रादीन् स्वयमात्मनैव यजस्व । पाकः पक्तव्यप्रज्ञोऽप्रचेता अप्रकृष्टज्ञानो मनुष्यस्ते तव किं कृणवत् । किं करोति । त्वयानधिष्ठितः किंचिदपि न जानातीत्यर्थः ।

किंच हे देव त्वमृतुभिः कालविशेषैर्देवान्यथायजः इष्टवानसि एवैवं हे सुजात शोभनजन्मन्नग्ने तन्वमात्मानमपि यजस्व ॥

भवा नो अग्नेऽवितोत गोपा भवा वयस्कृदुत नो वयोधाः ।
रास्वा च नः सुमहो हव्यदातिं त्रास्वोत नस्तन्वो३ अप्रयुच्छन् ॥७॥
भव । नः । अग्ने । अविता । उत । गोपाः । भव । वयःऽकृत् । उत । नः । वयःऽधाः ।
रास्व । च । नः । सुऽमहः । हव्यऽदातिं । त्रास्व । उत । नः । तन्वः । अप्रऽयुच्छन् ॥७॥

हे अग्ने त्वं नोऽस्माकमविता दृष्टभयेभ्यो रक्षको भव । भूयाः । उतापि च गोपा अदृष्टभयेभ्यो गोप्ता रक्षको भव । उतापि च वयस्कृदन्नस्य कर्ता भव । वयोधा अन्नस्य दाता भव । हे सुमहः सुष्ठु पूजनीयाग्ने त्वं स्वभूतां हव्यदातिं हविषो दातिं नोऽस्मभ्यं रास्व च । प्रयच्छ । उतापि च नोऽस्माकं स्वभूतास्तन्वः शरीराण्यप्रयुच्छन्नप्रमाद्यंस्त्रास्व । पालय ॥ ॥२॥

प्र केतुनेति नवर्चमष्टमं सूक्तं त्रैष्टुभं । त्वष्टृपुत्रस्त्रिशिरा नामर्षिः । आदितः षडाग्नेय्यस्ततस्तिस्र ऐंद्र्यः । तथा चानुक्रांतं । प्र केतुना नव त्रिशिरास्त्वाष्ट्रस्तृचोऽंत्य ऐंद्र इति ॥ आदितः षण्णां प्रातरनुवाकाश्विनशस्त्रयोराग्नेयक्रतावुक्तो विनियोगः ॥

प्र केतुना बृहता यात्यग्निरा रोदसी वृषभो रोरवीति ।
दिवश्चिदंताँ उपमाँ उदानळपामुपस्थे महिषो ववर्ध ॥१॥
प्र । केतुना । बृहता । याति । अग्निः । आ । रोदसी इति । वृषभः । रोरवीति ।
दिवः । चित् । अंतान् । उपऽमान् । उत् । आनट् । अपां । उपऽस्थे । महिषः । ववर्ध ॥१॥

अग्निर्बृहता महता केतुना प्रज्ञानेन युक्तः सन्निदानीं रोदसी द्यावापृथिव्यौ प्र याति । प्रकर्षेण गच्छति । किंच देवानामाह्वानकाले वृषभ इव रोरवीति । अत्यर्थं शब्दं करोति । दिवश्चिद्द्युलोकस्याप्यंतानवसानानुपमान् समीपांश्च प्रदेशान् ज्वलनात्मनादित्यात्मना वा स्थित उदानट् । ऊर्ध्वं व्याप्नोति । अपां वृष्टिलक्षणानामुदकानामुपस्थ उपस्थानेऽंतरिक्षे वैद्युतात्मना महिषो महान्ववर्ध । वर्धते ॥

मुमोद गर्भो वृषभः ककुद्मानस्रेमा वत्सः शिमीवाँ अरावीत् ।
स देवतात्युद्यतानि कृण्वन्स्वेषु क्षयेषु प्रथमो जिगाति ॥२॥
मुमोद । गर्भः । वृषभः । ककुत्ऽमान् । अस्रेमा । वत्सः । शिमीऽवान् । अरावीत् ।
सः । देवऽताति । उत्ऽयतानि । कृण्वन् । स्वेषु । क्षयेषु । प्रथमः । जिगाति ॥२॥

गर्भो द्यावापृथिव्योरंतर्गतो वृषभः कामानां वर्षिताग्निः ककुद्मानुन्नततेजस्को मुमोद । मोदते । किंचास्रेमा । प्रशस्यनामैतत् । प्रशस्तो वत्सो नक्तोषसोर्वत्सभूतः सायंप्रातराहुत्युपजीवनात् शिमीवान्हविर्वहनदेवाह्वानादिकर्मवानग्निरराबीत् । देवाह्वानादिशब्दं करोति । सोऽग्निर्देवताति यज्ञ उद्यतान्युद्यमान्युत्साहकर्माणि कृण्वन् कुर्वन् स्वेषु क्षयेष्वात्मीयेष्वाहवनीयादिस्थानेषु स्थितः प्रथमो देवानां स्थानेषु मुख्यो जिगाति । गच्छति ॥

आ यो मूर्धानं पित्रोररब्ध न्यध्वरे दधिरे सूरो अर्णः ।
अस्य पत्मन्नरुषीरश्वबुध्ना ऋतस्य योनौ तन्वो जुषंत ॥३॥

आ। यः। मूर्धानं। पित्रोः। अरब्ध। नि। अध्वरे। दधिरे। सूरः। अर्णः।
अस्य। पत्मन्। अरुषीः। अश्वऽबुध्नाः। ऋतस्य। योनौ। तन्वः। जुषंत ॥३॥

योऽग्निः पित्रोर्मातापितृभूतयोर्द्यावापृथिव्योर्मूर्धानमारब्ध स्वतेजोभिरारभते। यद्वा। मातापितृभूतयोररण्योर्मूर्धानं शिरोवत्प्रधानभूतं मंथनप्रदेशं। आङीषदर्थे। आरब्ध ईषद्धिनस्ति। निर्मथनकालेऽपि दाहेन दग्धुं समर्थः। सूरः सुवीर्यस्याग्नेरर्णो गमनशीलं तेजोऽध्वरे यज्ञे नि दधिरे। यष्टारो नियमेन धारयंति। अस्याग्नेः पत्मन्पतनेऽरुषीरारोचमाना ऋतस्य यज्ञस्य योनौ स्थानेऽश्वबुध्ना व्याप्तमूला अशनबंधना वा। हविराहारान्विता इत्यर्थः। तन्वस्तदीयास्तनूर्जुषंत। कवयः सेवंते॥

उषउषो हि वसो अग्रमेषि त्वं यमयोरभवो विभावा।
ऋताय सप्त दधिषे पदानि जनयन्मित्रं तन्वे३ स्वायै ॥४॥
उषःऽउषः। हि। वसो इति। अग्रं। एषि। त्वं। यमयोः। अभवः। विभाऽवा।
ऋताय। सप्त। दधिषे। पदानि। जनयन्। मित्रं। तन्वे। स्वायै ॥४॥

हे वसो स्वेन तेजसा सर्वस्याच्छादयितर्वसुमन्वा प्रशस्य वाग्ने त्वमुष उषः सर्वस्या एवोषसोऽग्रं पूर्वमेषि। प्राप्नोषि। अपि च यमयोर्युग्मयोः परस्परमवियुक्तयोरहोरात्रयोर्विभावा दीप्तिमानभवः। भवसि। तन्वे स्वाया आत्मीयाच्छरीरान्मित्रमादित्यं जनयन्नुत्पादयन् सप्त पदानि सप्तसंख्याकानि धिष्ण्यादिस्थानान्यृताय यज्ञार्थं दधिषे। धारयसि॥

भुवश्चक्षुर्मह ऋतस्य गोपा भुवो वरुणो यदृताय वेषि।
भुवो अपां नपाज्जातवेदो भुवो दूतो यस्य हव्यं जुजोषः ॥५॥
भुवः। चक्षुः। महः। ऋतस्य। गोपाः। भुवः। वरुणः। यत्। ऋताय। वेषि।
भुवः। अपां। नपात्। जातऽवेदः। भुवः। दूतः। यस्य। हव्यं। जुजोषः ॥५॥

महो महत ऋतस्य यज्ञस्य हे अग्ने त्वं चक्षुरिव प्रकाशको भुवः। भवसि। गोपा यज्ञस्य रक्षकस्त्वमेव भवसि। यद्यदृताय सोमरसलक्षणस्योदकस्यादानार्थं वरुण आदित्यो वेषि गच्छसि तदा त्वमेव भुवः। भवसि। हे जातवेदो जातप्रज्ञाग्ने अपां वृष्टिलक्षणानामुदकानां नपात् पौत्रस्त्वमेव भुवः। भवसि। अद्भ्यो हि मेघो जायते मेघादग्निर्विद्युद्रूपो जायत इत्यपां पौत्रत्वमुच्यते। यस्य यजमानस्य हव्यं हविर्जुजोषः सेवसे तस्य दूतो भुवः। भवसि॥ ॥३॥

दर्शपूर्णमासयोराग्नेयस्य याज्या भुवो यज्ञस्येत्येषा। सूत्रितं च। तासां याज्यानुवाक्या अग्निर्मूर्धा भुवो यज्ञस्य। आ० १. ६.। इति॥ आग्नेयी काचित्काम्येष्टिः। तस्यामेषैव याज्या। सूत्रितं च। आग्नेय्या उत्तरे नित्ये मूर्धन्वतः। आ० २. १०.। इति॥

भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः।
दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहं ॥६॥
भुवः। यज्ञस्य। रजसः। च। नेता। यत्र। नियुत्ऽभिः। सचसे। शिवाभिः।
दिवि। मूर्धानं। दधिषे। स्वःऽसां। जिह्वां। अग्ने। चकृषे। हव्यऽवाहं ॥६॥

हे अग्ने त्वं यत्र यस्मिन्नंतरिक्षे शिवाभिः कल्याणीभिर्नियुद्भिर्नियुत्संज्ञकाभिरश्वजातिभिः संबद्धं वायुं

सचसे संगच्छसे तस्मिन्नंतरिक्षे यज्ञस्य रजसश्चोदकस्य च नेता प्रापयिता भुवः। भवसि। अग्निर्वा इतो वृष्टिं समीरयतीति श्रुतेः। किंच दिवि द्युलोके मूर्धानं शिरोवत्प्रधानभूतं स्वर्षा सर्वस्य संभक्तारमादित्यं दधिषे। हविर्वहनद्वारेण धारयसि। हे अग्ने त्वं जिह्वां ज्वालां हव्यवाहं हविषो वोढ्रीं चकृषे। करोषि॥

अस्य त्रितः क्रतुना वव्रे अंतरिच्छन्धीतिं पितुरेवैः परस्य।
सचस्यमानः पित्रोरुपस्थे जामि ब्रुवाण आयुधानि वेति॥७॥
अस्य। त्रितः। क्रतुना। वव्रे। अंतः। इच्छन्। धीतिं। पितुः। एवैः। परस्य।
सचस्यमानः। पित्रोः। उपऽस्थे। जामि। ब्रुवाणः। आयुधानि। वेति॥७॥

अस्मिंस्तृच इममर्थं ब्रवीति। हे त्रित सर्वेषामायुधानि वेत्ता त्वं त्वष्टृपुत्रस्य त्रिशिरसो वधार्थं मम साहाय्यं कुर्वितीद्रेणैवं पृष्टस्त्रितः स्ववीर्यवृद्ध्यर्थं यज्ञभागं वव्रे। स चेंद्रस्तस्मै पाणिप्रक्षालनार्थं च अग्रं यज्ञभागं च दत्तवान्। अनेन यज्ञभागेन वृद्धवीर्यस्त्रित एतत्संज्ञक ऋषिरेवैरात्मनो रक्षणैर्युक्तोऽंतर्यज्ञस्य मध्ये धीतिं भागमिच्छन् परस्योत्कृष्टस्य पितुः सर्वस्य जगतः पालयितुरस्येंद्रस्य क्रतुना त्रिशिरसो मम वधार्थं साहाय्यभूतेन कर्मणा निमित्तेन वव्रे। सखायं वृतवान्। किंच पित्रोर्मातापितृभूतयोर्द्यावापृथिव्योरुपस्थे समीपस्थे यज्ञे सचस्यमान ऋत्विग्भिः सेव्यमानस्त्रितो जामि योग्यमिंद्रस्यानुरूपं स्तोत्रं ब्रुवाण इंद्रस्य बलवृद्ध्यर्थमुच्चारयन्नायुधानि स्वभूतानि वेति। त्वष्टृपुत्रस्य मम वधार्थमागच्छति॥

स पित्र्याण्यायुधानि विद्वानिंद्रेषित आप्त्यो अभ्ययुध्यत्।
त्रिशीर्षाणं सप्तरश्मिं जघन्वान् त्वाष्ट्रस्य चिन्निः ससृजे त्रितो गाः॥८॥
सः। पित्र्याणि। आयुधानि। विद्वान्। इंद्रऽइषितः। आप्त्यः। अभि। अयुध्यत्।
त्रिऽशीर्षाणं। सप्तऽरश्मिं। जघन्वान्। त्वाष्ट्रस्य। चित्। निः। ससृजे। त्रितः। गाः॥८॥

आप्त्य आप्त्यस्य पुत्रोऽपां पुत्रो वा॥ तकारोपजनश्छांदसः॥ स त्रितः पित्र्याणि स्वपितृसंबंधीन्यायुधानि विद्वाञ्जानन्निंद्रेषितस्त्रिशिरसा मया सह युद्धार्थमिंद्रेण प्रेषितः सन्नभ्ययुध्यत्। आभिमुख्येन युद्धवान्। तदनंतरं सप्तरश्मिं शत्रुनियमनार्थं सप्तप्रग्रहहस्तं। यद्वा। सप्तरश्मिरादित्यः। तत्सदृशं। त्रिशीर्षाणं त्रिशिरस्कं मां जघन्वान्। हतवान्। मूर्छितं कृतवानित्यर्थः। किंच त्रितस्त्वाष्ट्रस्य चित्त्वष्टृपुत्रस्य ममापि गाः पशून्निः ससृजे। विसृष्टवान्। अपहृतवानित्यर्थः॥

भूरीदिंद्र उदिनक्षंतमोजोऽवाभिनत्सत्पतिर्मन्यमानं।
त्वाष्ट्रस्य चिद्विश्वरूपस्य गोनामाचक्राणस्त्रीणि शीर्षा परा वर्क्॥९॥
भूरि। इत्। इंद्रः। उत्ऽइनक्षंतं। ओजः। अव। अभिनत्। सत्ऽपतिः। मन्यमानं।
त्वाष्ट्रस्य। चित्। विश्वऽरूपस्य। गोनां। आऽचक्राणः। त्रीणि। शीर्षा। परा।
वर्गिति वर्क्॥९॥

सत्पतिः सतां पालक इंद्रो भूरीद्बह्वेव पूर्वतुल्यमतिरिक्तं वौजो बलमुदिनक्षंतं व्याप्नुवंतं मन्यमानं भूरमित्यात्मानं चिंतयंतं। यद्वा। मन्यतिर्दीप्तिकर्मा क्रोधकर्मा वा। दीप्यमानं क्रुध्यंतं वा। त्वष्टृपुत्रं मामवाभिनत्। वज्रेण विदारितवान्। विदार्य त्वाष्ट्रस्य चित्त्वष्टृपुत्रस्यापि गोनां गवां। स्वामिन इति शेषः। विश्वरूपस्य मम त्रीणि शीर्षा शीर्षाण्याचक्राण आ समंताच्छब्दं कुर्वन् परा वर्क्। पराङ्मुखस्य वृक्णवान्। छिन्नवानित्यर्थः। ईदृशं भावि वस्तु विश्वरूपः सप्तांतेऽनेन तृचेन दृष्टवान्॥ ॥४॥

आपो हीति नवर्चं नवमं सूक्तं। अंबरीषस्य राज्ञः पुत्रः सिंधुद्वीप ऋषिस्त्वष्टृपुत्रस्त्रिशिरा वा। इदमाप इत्यादिके द्वे अनुष्टुभौ। ईशाना इति वर्धमाना। आपः पृणीतेति प्रतिष्ठा। शिष्टा गायत्र्यः। आपो देवता। तथा चानुक्रांतं। आपो हि सिंधुद्वीपो वांबरीष आपं गायत्रं ह्यनुष्टुबंतं पंचमी वर्धमाना सप्तमी प्रतिष्ठेति॥ गतः सूक्तविनियोगः॥ अग्निमारुत आपो हि ष्ठेत्याद्यास्तिस्रः। सूचितं च। आपो हि ष्ठेति तिस्रो वियतमप उपसृजन्। आ० ५. २०। इति॥

आपो॒ हि ष्ठा म॑यो॒भुव॒स्ता न॑ ऊ॒र्जे द॑धातन। म॒हे रणा॑य॒ चक्ष॑से॥१॥
आपः॑। हि। स्थ। म॒यः॒ऽभुवः॑। ताः। नः॒। ऊ॒र्जे। द॒धा॒त॒न॒। म॒हे। रणा॑य। चक्ष॑से॥१॥

हि यस्मात्कारणादापो या यूयं मयोभुवः सुखस्य भावयित्र्यः स्थ भवथ तास्तादृश्यो यूयं नोऽस्मानूर्जेऽन्नाय दधातन। धत्त। अन्नप्राप्तियोग्यानस्मान् कुरुत। अन्नमस्मभ्यं दत्तेत्यर्थः। महे महति रणाय रमणीयाय चक्षसे दर्शनाय सम्यग्ज्ञानाय च धत्त। अस्मान् सम्यग्ज्ञानं प्रति योग्यान्कुरुतेत्यर्थः॥

यो वः॑ शि॒वत॑मो॒ रस॒स्तस्य॑ भाजयते॒ह नः॑। उ॒श॒तीरि॑व मा॒तरः॑॥२॥
यः। वः॒। शि॒वऽत॑मः। रसः॑। तस्य॑। भा॒ज॒य॒त॒। इ॒ह। नः॒। उ॒श॒तीःऽइ॑व। मा॒तरः॑॥२॥

हे आपः वो युष्माकं स्वभूतो यो रसः शिवतमः सुखतम इहास्मिँल्लोके तस्य तं रसं नोऽस्मान् भाजयत। सेवयत। उपयोजयतेत्यर्थः। तत्र दृष्टांतः। उशतीरिवोशत्य इव पुत्रसमृद्धिं कामयमाना मातरः स्तन्यं रसं यथा भाजयंति प्रापयंति तद्वत्॥

तस्मा॒ अरं॑ गमाम वो॒ यस्य॒ क्षया॑य॒ जिन्व॑थ। आपो॑ ज॒नय॑था च नः॥३॥
तस्मै॑। अरं॑। ग॒मा॒म॒। वः॒। यस्य॑। क्षया॑य। जिन्व॑थ। आपः॑। ज॒नय॑थ। च॒। नः॒॥३॥

हे आपः यूयं यस्य पापस्य क्षयाय विनाशायास्माञ्जिन्वथ प्रीणयथ तस्मै तादृशाय पापक्षयायारं क्षिप्रं वो युष्मान् गमाम। गमयाम। वयं शिरसि प्रक्षिपामेत्यर्थः। यद्वा। यस्यान्नस्य क्षयाय निवासार्थं यूयमोषधीर्जिन्वथ तर्पयथ तस्मै तदन्नमुद्दिश्य वयमरमलं पर्याप्तं यथा भवति तथा वो युष्मान्गमाम। गच्छाम। किंच हे आपः नोऽस्माञ्जनयथ च। पुत्रपौत्रादिजनने प्रयोजयतेत्यर्थः॥

शं नो॑ दे॒वीर॒भिष्ट॑य॒ आपो॑ भवंतु पी॒तये॑। शं योर॒भि स्र॑वंतु नः॥४॥
शं। नः॒। दे॒वीः। अ॒भिष्ट॑ये। आपः॑। भ॒वं॒तु॒। पी॒तये॑। शं। योः। अ॒भि। स्र॒वं॒तु॒। नः॒॥४॥

नोऽस्माकं पापापनोदद्वारेण शं सुखं भवंतु देवीर्देव्य आपः। अभिष्टयेऽस्मद्यागाय भवंतु। यज्ञांगभावाय च भवंत्वित्यर्थः। पीतये पानाय च भवंतु। तथा शमुत्पन्नानां रोगाणां शमनं योर्यावनमनुत्पन्नानां पृथक्करणं च कुर्वंतु। अपि च नोऽस्माकमभ्युपरि स्रवंतु। शुद्ध्यर्थं सिंचंतु॥

ईशा॑ना॒ वार्या॑णां॒ क्षयं॑तीश्चर्षणी॒नां। अ॒पो या॑चामि भेष॒जं॥५॥
ईशा॑नाः। वार्या॑णां। क्षयं॑तीः। च॒र्ष॒णी॒नां। अ॒पः। या॒चा॒मि॒। भे॒ष॒जं॥५॥

वार्याणां वारिप्रभवानां व्रीहियवादीनां यद्वा वरणीयानां धनानामीशाना ईश्वराश्चर्षणीनां मनुष्याणां क्षयंतीर्निवासयित्रीरप उदकानि भेषजं। सुखनामैतत्। पापापनोदनं सुखं याचामि। अहं प्रार्थये॥

अ॒प्सु मे॒ सोमो॑ अब्रवीदं॒तर्विश्वा॑नि भेष॒जा। अ॒ग्निं च॑ वि॒श्वशं॑भुवं॥६॥
अ॒प्ऽसु। मे॒। सोमः॑। अ॒ब्र॒वी॒त्। अं॒तः। विश्वा॑नि। भे॒ष॒जा। अ॒ग्निं। च॒। वि॒श्वऽशं॑भुवं॥६॥

आपः पृणीत भेषजं वरूथं तन्वे३ मम । ज्योक् च सूर्यं दृशे ॥७॥
आपः । पृणीत । भेषजं । वरूथं । तन्वे । मम । ज्योक् । च । सूर्यं । दृशे ॥७॥

इदमापः प्र वहत यत्किं च दुरितं मयि । यद्वाहमभिदुद्रोह यद्वा शेप उतानृतं ॥८॥
इदं । आपः । प्र । वहत । यत् । किं । च । दुःऽइतं । मयि । यत् । वा । अहं । अभिऽदुद्रोह ।
यत् । वा । शेपे । उत । अनृतं ॥८॥

आपो अद्यान्वचारिषं रसेन समगस्महि ।
पयस्वानग्न आ गहि तं मा सं सृज वर्चसा ॥९॥
आपः । अद्य । अनु । अचारिषं । रसेन । सं । अगस्महि ।
पयस्वान् । अग्ने । आ । गहि । तं । मा । सं । सृज । वर्चसा ॥९॥

अप्सु मे सोमो अब्रवीदित्यादिकास्तस्र ऋचः प्रथमाष्टके द्वितीयाध्याये विनियोगपुरःसरं व्याख्याताः । ऋ० १. २३. २०–२३. ॥ ॥५॥

ओ चिदिति चतुर्दशर्चं दशमं सूक्तं । अत्रानुक्रम्यते । ओ चित्षट्ना वैवस्वतयोर्यमयम्योः संवादः षळ्युग्भिर्यमी मिथुनार्थं यमं प्रोवाच स तां नवमीयुग्भिरनिच्छन् प्रत्याचष्ट इति । ततः षष्ठ्यां प्रथमातृतीयाद्यासु विवस्वतः पुत्री यम्यृषिर्यमो देवता । यस्य वाक्यं स ऋषिर्या तेनोच्यते सा देवतेति न्यायात् । तथा नवम्यां द्वितीयाचतुर्थीप्रभृतिषु युग्मासु वैवस्वतो यम ऋषिर्यमी देवता । अनादेशपरिभाषया त्रिष्टुप् ॥ गतो विनियोगः ॥

ओ चित्सखायं सख्या ववृत्यां तिरः पुरू चिदर्णवं जगन्वान् ।
पितुर्नपातमा दधीत वेधा अधि क्षमि प्रतरं दीध्यानः ॥१॥
ओ इति । चित् । सखायं । सख्या । ववृत्यां । तिरः । पुरु । चित् । अर्णवं । जगन्वान् ।
पितुः । नपातं । आ । दधीत । वेधाः । अधि । क्षमि । प्रऽतरं । दीध्यानः ॥१॥

अत्रास्मिन्सूक्ते वैवस्वतयोर्यमयम्योः संवाद उच्यते । अस्यामृचि यमं प्रति यमी प्रोवाच । तिरोऽन्तर्हितमप्रकाशमानं । निर्जनप्रदेशमित्यर्थः । पुरु चिद्बह्वपि विस्तीर्णं चार्णवं समुद्रैकदेशमवान्तरद्वीपं जगन्वान् गतवती यमी । चिदिति पूजार्थे । पूजितमिष्टं । श्रेष्ठमित्यर्थः । सखायं गर्भवासादारभ्य सखीभूतं यमं सख्या सख्याय स्त्रीपुरुषसंपर्कजनितमित्रत्वाय ओ ववृत्यां । आवर्तयामि । आभिमुख्येन स्थित्वा लज्जां परित्यज्य त्वत्संभोगं करोमीत्यर्थः । धर्मस्य त्वरिता गतिरिति न्यायेन कामस्य त्वरितत्वात् । अपि च पितुरावयोर्भविष्यतः पुत्रस्य पितृभूतस्य तवार्थायाधि क्षम्यधि पृथिव्यां । पृथिवीस्थानीये ममोदर इत्यर्थः । प्रतरं प्रकृष्टं । सर्वगुणोपेतमित्यर्थः । नपातं गर्भलक्षणमपत्यं वेधा विधाता प्रजापतिर्दीध्यान आवयोरनुरूपस्य पुत्रस्य जननार्थमावां ध्यायन्ना दधीत । प्रजापतिर्धाता गर्भं दधातु ते । ऋ० १०. १८४. १. । इत्युक्तत्वात् ॥

न ते सखा सख्यं वष्ट्येतत्सलक्ष्मा यद्विषुरूपा भवाति ।
महस्पुत्रासो असुरस्य वीरा दिवो धर्तार उर्विया परि ख्यन् ॥२॥

न। ते। सखा। सख्यं। वष्टि। एतत्। सऽलक्ष्मा। यत्। विषुऽरूपा। भवाति।
महः। पुत्रासः। असुरस्य। वीराः। दिवः। धर्तारः। उर्विया। परि। ख्यन् ॥२॥

यम आत्मानं परोक्षीकृत्य यमीं प्रत्युवाच। हे यमि ते तव सखा गर्भवासलक्षणेन सखीभूतो यम एतदीदृशं त्वयोक्तं स्त्रीपुरुषलक्षणं सख्यं न वष्टि। न कामयते। यद्यस्मात्कारणाद्यमी सलक्ष्मा समानयोनित्वलक्षणा विषुरूपा भगिनीत्वाद्विषमरूपा भवाति भवति। तस्मान्न वष्टीत्यर्थः। इदानीं तिरः पुरू चिदर्णवं जगन्वानित्यस्य प्रतिवचनमुच्यते। महो महतोऽसुरस्य प्राणवतः प्रज्ञावतो वा प्रजापतेः पुत्रासः पुत्रभूता वीराः। वीरो वीरयत्यमित्रान्वेतेर्वा स्याद्गतिकर्मणो वीरयतेर्वा। नि॰ १.७.। इति निरुक्तं। शत्रूणां विविधमीरयितारो धर्तारो धारयितारो दिवो द्युलोकस्य। प्रदर्शनमेतत्। द्युप्रभृतीनां लोकानामित्यर्थः। ---॥

उशंति घा ते अमृतास एतदेकस्य चित्त्यजसं मर्त्यस्य।
नि ते मनो मनसि धाय्यस्मे जन्युः पतिस्तन्व१मा विविश्याः ॥३॥
उशंति। घ। ते। अमृतासः। एतत्। एकस्य। चित्। त्यजसं। मर्त्यस्य।
नि। ते। मनः। मनसि। धायि। अस्मे इति। जन्युः। पतिः। तन्वं। आ। विविश्याः ॥३॥

पुनरपि यमी यमं प्रत्युवाच। घेति निपातोऽप्यर्थे। हे यम ते प्रसिद्धा अमृतासः प्रजापत्यादयोऽपि देवा एतदीदृशं शास्त्रेणागम्यत्वेनोक्तं त्यजसं। त्यज्यते परस्मै प्रदीयत इति त्यजसं दुहितृभगिन्यादिस्त्रीजातं। उशंति। कामयंते। एकस्य चित् सर्वस्य जगतो मुख्यस्यापि प्रजापत्यादेः स्वदुहितृभगिन्यादीनां संबंधोऽस्तीति शेषः। अतः कारणात्ते तव मनश्चित्तमस्मे अस्माकं। ममेत्यर्थः। मनसि चित्ते नि धायि। निधीयतां। अहं त्वां कामये त्वं मामपि कामयस्वेत्यर्थः। अपि च। जन्युरिति लुप्तोपममेतत्। जन्युरिव यथा जनयिता प्रजापतिः पतिर्भर्ता भूत्वा स्वदुहितुः शरीरं संभोगेनाविष्टवान् तथा त्वमपि मम पतिर्भूत्वा तन्वं मदीयं शरीरमा विविश्याः। संभोगेनाविश। योनौ प्रजननप्रक्षेपोपगूहनचुंबनादिना मां संभुंक्ष्वेत्यर्थः॥

न यत्पुरा चकृमा कद्ध नूनमृता वदंतो अनृतं रपेम।
गंधर्वो अप्स्वप्या च योषा सा नो नाभिः परमं जामि तन्नौ ॥४॥
न। यत्। पुरा। चकृम। कत्। ह। नूनं। ऋता। वदंतः। अनृतं। रपेम।
गंधर्वः। अप्ऽसु। अप्या। च। योषा। सा। नः। नाभिः। परमं। जामि। तत्। नौ ॥४॥

यमो यमीं पुनर्ब्रूते। पुरा पूर्वं प्रजापतेर्यदगम्यागमनमपरिमितसामर्थ्योपेतत्वात्कृतं तथा वयं न चकृम। नाकुर्म। वयमृतानि सत्यानि वदंतो ब्रुवंतोऽनृतमसत्यं कद्ध कदा खलु नूनं निश्चितं रपेम। वदेम। न कदाचिदपीत्यर्थः। अगम्यागमनं न कुर्म इति यावत्। अपि चाप्सु। अंतरिक्षनामैतत्। अंतरिक्षे स्थितो गंधर्वो गवां रश्मीनामुदकानां वा धारयितादित्योऽप्यांतरिक्षस्था सा प्रसिद्धा योषादित्यस्य भार्या सरण्यूश्च नौ नावावयोर्नाभिरुत्पत्तिस्थानं। मातापितरावित्यर्थः। तत्तस्मात्कारणान्नावावयोर्जामि बांधवमुत्कृष्टं। एवं सत्यावयोरगम्यागमनरूपत्वात्कर्तुमयुक्तं तस्मादेतन्न करोमीत्यभिप्रायः॥

गर्भे नु नौ जनिता दंपती कर्देवस्त्वष्टा सविता विश्वरूपः।
नकिरस्य प्र मिनंति व्रतानि वेद नावस्य पृथिवी उत द्यौः ॥५॥
गर्भे। नु। नौ। जनिता। दंपती इति दंऽपती। कः। देवः। त्वष्टा। सविता। विश्वऽरूपः।
नकिः। अस्य। प्र। मिनंति। व्रतानि। वेद। नौ। अस्य। पृथिवी। उत। द्यौः ॥५॥

त्वष्टा रूपाणां कर्ता सविता सर्वेषां शुभाशुभस्य प्रेरको विश्वरूपः सर्वात्मको देवो दानादिगुणयुक्तो जनिता जनयिता प्रजापतिर्गर्भे नु गर्भावस्थायामेव नावावां दंपती जायापती कः। कृतवान् एकोदरे सहवासित्वात्। अस्य प्रजापतेर्व्रतानि कर्माणि नकिः प्र मिनंति। न केचित्प्रहिंसंति। न लोपयंतीत्यर्थः। अतः कारणाद्गर्भावस्थायामेवावयोः प्रजापतिकृते दंपतित्वे सति संभोगं कुर्वित्यर्थः। अपि च नावावयोरस्येदं मातुरुदरे सहवासजनितं दंपतित्वं पृथिवी भूमिर्वेद। जानाति। उतापि च द्यौर्द्युलोकोऽपि जानाति॥ ॥६॥

को अ॒स्य वे॑द प्रथ॒मस्याह्नः॒ क ईं॑ ददर्श॒ क इ॒ह प्र वो॑चत्।
बृ॒हन्मि॒त्रस्य॒ वरु॑णस्य॒ धाम॒ कदु॑ ब्रव आहनो॒ वीच्या॒ नॄन्॥६॥
कः। अ॒स्य। वे॒द॒। प्र॒थ॒मस्य॑। अह्नः॑। कः। ई॒म्। द॒द॒र्श॒। कः। इ॒ह। प्र। वो॒च॒त्।
बृ॒हत्। मि॒त्रस्य॑। वरु॑णस्य। धाम॑। कत्। ऊं॒ इति॑। ब्रवः॒। आ॒ह॒नः॒। वीच्या॑। नॄन्॥६॥

प्रथमस्याह्नः संबंध्यस्येदमन्योन्यसंगमनं को वेद। जानाति। प्रथमेऽहनि यत्क्रियते तदनुमानमाश्रित्य न कश्चिदपि ज्ञातुं शक्नोतीत्यर्थः। इहास्मिन्प्रदेशे प्रत्यक्षतः क ईमिदं संगमनं ददर्श। पश्यति। कः प्र वोचत्। प्रख्यापयति। न कोऽपीत्यर्थः। मित्रस्य वरुणस्य मित्रावरुणयोर्बृहन्महद्धाम स्थानमहोरात्रं यदस्ति तत्र नॄन्मनुष्यान् वीच्या नरकेण हे आहन आहंतर्मर्यादया हिंसितः। स्वकृतशुभाशुभकर्मापेक्षया मनुष्यादिप्राणिनां नरकपातेन स्वर्गप्रापणेन निग्रहानुग्रहयोः कर्तरित्यर्थः। एवंभूत हे यम त्वं कदु ब्रवः। किं वा ब्रवीषि॥

य॒मस्य॑ मा य॒म्यं१॒॑ काम॒ आग॑न्त्समा॒ने योनौ॑ सह॒शेय्या॑य।
जा॒येव॒ पत्ये॑ त॒न्वं॑ रिरिच्यां॒ वि चि॑द्वृहेव॒ रथ्ये॑व च॒क्रा॥७॥
य॒मस्य॑। मा॒। य॒म्य॑म्। काम॑ः। आ। अ॒ग॒न्। स॒मा॒ने। योनौ॑। स॒ह॒ऽशेय्या॑य।
जा॒याऽइ॑व। पत्ये॑। त॒न्व॑म्। रि॒रि॒च्या॒म्। वि। चि॒त्। वृ॒हे॒व॒। रथ्या॑ऽइव। च॒क्रा॥७॥

यमस्य तव कामोऽभिलाषो यम्यं यमीं मा मां प्रत्यागन्। आगच्छतु। ममोपरि तव यमस्य संभोगेच्छा जायतामित्यर्थः। किमर्थं। समाने योनावेकस्मिन् स्थाने शय्याख्ये सहशेय्याय सहशयनार्थं। तदनंतरं पूर्णमनोरथा सती जायेव पत्ये यथा भार्या पत्युरर्थाय परया प्रीत्या विश्वस्ता सती रतिकामा स्वशरीरं प्रकाशयति एवं तन्वमात्मीयं शरीरं रिरिच्यां। विविच्यां। त्वदर्थं प्रकाशयेयमित्यर्थः। किंच। चिदिति पूरणः। वि वृहेव॥ वृह्र उद्यमने॥ धर्मार्थकामान्विविधमुद्यच्छावः। तत्र दृष्टांतः। रथ्येव चक्रा रथस्यावयवभूते चक्रे यथा रथमुद्यच्छतस्तद्वत्॥

न ति॑ष्ठन्ति॒ न नि मि॑षन्त्ये॒ते दे॒वानां॒ स्पश॑ इ॒ह ये चर॑न्ति।
अ॒न्येन॒ मदा॑हनो याहि॒ तूयं॒ तेन॒ वि वृ॑ह॒ रथ्ये॑व च॒क्रा॥८॥
न। ति॒ष्ठ॒न्ति॒। न। नि। मि॒ष॒न्ति॒। ए॒ते। दे॒वाना॑म्। स्पश॑ः। इ॒ह। ये। चर॑न्ति।
अ॒न्येन॑। मत्। आ॒ह॒नः॒। या॒हि॒। तूय॑म्। तेन॑। वि। वृ॒ह॒। रथ्या॑ऽइव। च॒क्रा॥८॥

यम्या प्रख्यातो यमः पुनराह। इहास्मिँल्लोके देवानां संबंधिनो ये स्पशोऽहोरात्रादयश्चाराश्चरंति सर्वेषां शुभाशुभलक्षणकर्मप्रत्यवेक्षणार्थं परिभ्रमंति एते चाराः क्षणमात्रमपि चरणव्यापाररहिता न तिष्ठंति। न नि मिषंति। मेषणं न कुर्वंति। शुभमशुभं वा यः करोति तं निरीक्षंते चेत्यर्थः। हे आहनो ममापह्नंत्र्यसह्यभाषणेन दुःखयित्रि त्वं मत्तोऽन्येन त्वत्सदृशेन सह तूयं क्षिप्रं याहि। संगच्छ। गत्वा च तेन वि वृह। धर्मार्थकामानुद्यच्छ। तत्र दृष्टांतः। रथ्येव चक्रा यथा रथावयवभूते चक्रे रथमुद्यच्छतस्तद्वत्॥

रात्रीभिरस्मा अहभिर्दशस्येत्सूर्यस्य चक्षुर्मुहुरुन्मिमीयात् ।
दिवा पृथिव्या मिथुना सबंधू यमीर्यमस्य बिभृयादजामि ॥९॥
रात्रीभिः । अस्मै । अहऽभिः । दशस्येत् । सूर्यस्य । चक्षुः । मुहुः । उत् । मिमीयात् ।
दिवा । पृथिव्या । मिथुना । सबंधू इति सऽबंधू । यमीः । यमस्य । बिभृयात् । अजामि ॥९॥

रात्रिभिरहभिरहोरात्रयोरस्मै यमाय कल्पितं भागं सर्वो यजमानो दशस्येत् । प्रयच्छतु । सूर्यस्य संबंधि चक्षुस्तेजो मुहुर्मुहुरस्मै यमायोन्मिमीयात् । उदेतु । दिवा पृथिव्या द्यावापृथिवीभ्यां सह मिथुना मिथुनौ सबंधू समानबंधू अहोरात्रे अस्मै यमाय । एतज्ज्ञात्वेयं यमीर्यमस्याजाम्यभ्रातरं बिभृयात् । धारयतु । यत्नेन परिगृह्णात्वित्यर्थः ॥

आ घा ता गच्छानुत्तरा युगानि यत्र जामयः कृणवन्नजामि ।
उप बर्बृहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मत् ॥१०॥
आ । घ । ता । गच्छान् । उत्ऽतरा । युगानि । यत्र । जामयः । कृणवन् । अजामि ।
उप । बर्बृहि । वृषभाय । बाहुं । अन्यं । इच्छस्व । सुऽभगे । पतिं । मत् ॥१०॥

यत्र येषु कालेषु जामयो भगिन्योऽजाम्यभ्रातरं पतिं कृणवन् करिष्यंति ता तान्युत्तराणि युगानि कालविशेषा आ गच्छान् । आ गमिष्यंति । घेति पूरणः । यस्मादेवं तस्माद्धे सुभगे त्वमिदानीं मत्तोऽन्यं पतिं भर्तारमिच्छस्व । कामयस्व । तदनंतरं वृषभाय तव योनौ रेतः सेक्त्रे पुरुषायात्मीयं बाहुमुप बर्बृहि । शयनकाल उपबर्हणं कुरु ॥ ॥७॥

किं भ्रातासद्यदनाथं भवाति किमु स्वसा यन्निर्ऋतिर्निगच्छात् ।
काममूता बह्वे३तद्रपामि तन्वा मे तन्वं१ सं पिपृग्धि ॥११॥
किं । भ्राता । असत् । यत् । अनाथं । भवाति । किं । ऊं इति । स्वसा । यत् ।
निःऽऋतिः । निऽगच्छात् ।
कामऽमूता । बहु । एतत् । रपामि । तन्वा । मे । तन्वं । सं । पिपृग्धि ॥११॥

यमी यमेन प्रत्याख्याता पुनराह । यद्यस्मिन्भ्रातरि सति स्वस्रादिकमनाथं नाथरहितं भवति स भ्राता किमसत् । किं भवति । न भवतीत्यर्थः । किंच यस्यां भगिन्यां सत्यां भ्रातरं निर्ऋतिर्दुःखं निगच्छात् नियमेन गच्छति प्राप्नोति सा स्वसा किमु । किं वा भवति । भ्रातृभगिन्योश्च परस्परं प्रीतिर्येन केनचिदुपायेनावश्यं कार्येत्यभिप्रायः । साहं काममूता कामेन मूर्छिता सती बहु नानाप्रकारमेतदीदृशमुक्तं वक्ष्यमाणं च रपामि । प्रलपामि । एतज्ज्ञात्वा मे मम तन्वा शरीरेण तन्वं शरीरं सं पिपृग्धि । संपर्चय । संभोगेन संश्लेषय । मां सम्यग्भुंक्ष्वेत्यर्थः ॥

न वा उ ते तन्वा तन्वं१ सं पपृच्यां पापमाहुर्यः स्वसारं निगच्छात् ।
अन्येन मत्प्रमुदः कल्पयस्व न ते भ्राता सुभगे वष्ट्येतत् ॥१२॥
न । वै । ऊं इति । ते । तन्वा । तन्वं । सं । पपृच्यां । पापं । आहुः । यः । स्वसारं । निऽगच्छात् ।
अन्येन । मत् । प्रऽमुदः । कल्पयस्व । न । ते । भ्राता । सुऽभगे । वष्टि । एतत् ॥१२॥

यमो यमीं प्रत्युक्तवान्। हे यमि ते तव तन्वा शरीरेण तन्वमात्मीयं शरीरं न वै सं पपृच्यां। नैव संपर्चयामि। नैवाहं त्वां संभोक्तुमिच्छामीत्यर्थः। यो भ्राता स्वसारं भगिनीं निगच्छात् नियमेनोपगच्छति। संभुंक्त इत्यर्थः। तं पापं पापकारिणमाहुः। शिष्टा वदंति। एतज्ज्ञात्वा हे सुभगे सुष्ठु भजनीये हे यमि त्वं मत्तोऽन्येन त्वद्योग्येन पुरुषेण सह प्रमुदः संभोगलक्षणान्प्रहर्षान्कल्पयस्व। समर्थय। ते तव भ्राता यम एतदीदृशं त्वया सह मैथुनं कर्तुं न वष्टि। न कामयते। नेच्छति॥

बतो बतासि यम नैव ते मनो हृदयं चाविदाम।
अन्या किल त्वां कक्ष्येव युक्तं परि ष्वजाते लिबुजेव वृक्षं॥१३॥
बतः। बत। असि। यम। न। एव। ते। मनः। हृदयं। च। अविदाम।
अन्या। किल। त्वां। कक्ष्याऽइव। युक्तं। परि। स्वजाते। लिबुजाऽइव। वृक्षं॥१३॥

यमी प्रत्युवाच। हे यम त्वं बतो दुर्बलोऽसि। बतेति निपातः खेदानुकंपयोः। अनुकंप्यश्चासि। ते त्वदीयं मनो मनोगतं संकल्पं हृदयं च बुद्धिगतमध्यवसायं च नैवाविदाम। वयं न जानीम एव। मत्तोऽन्या काचित्स्त्री त्वां परि ष्वजाते किल। तत्र दृष्टांतद्वयमुच्यते। कक्ष्येव युक्तं यथा कक्ष्या रज्जुर्युक्तमात्मना संबद्धमश्वं परिष्वजते तद्वत्। लिबुजेव वृक्षं यथा लिबुजा व्रततिर्गाढं वृक्षं परिष्वजते तद्वच्च। अन्यस्यां स्त्रियामासक्तस्त्वं मां परिष्वंक्तुं नेच्छसीत्यर्थः॥

अन्यमू षु त्वं यम्यन्य उ त्वां परि ष्वजाते लिबुजेव वृक्षं।
तस्य वा त्वं मन इच्छा स वा तवाधा कृणुष्व संविदं सुभद्रां॥१४॥
अन्यं। ऊं इति। सु। त्वं। यमि। अन्यः। ऊं इति। त्वां। परि। स्वजाते। लिबुजाऽइव। वृक्षं।
तस्य। वा। त्वं। मनः। इच्छ। सः। वा। तव। अध। कृणुष्व। संऽविदं। सुऽभद्रां॥१४॥

यमः पुनरप्याह। हे यमि त्वमन्यमु अन्यं पुरुषमेव सु सुष्ठु परिष्वज। अन्य उ अन्योऽपि पुरुषस्त्वां परि ष्वजाते। तत्र दृष्टांतः। लिबुजेव वृक्षं यथा वल्ली गाढं वृक्षं परिष्वजते तद्वत्। तथा सति। वाशब्दः समुच्चये। त्वं तस्य च पुरुषस्य मन इच्छ। कामय। तस्य त्वं वशवर्तिनी भवेत्यर्थः। स च पुरुषस्तव मन इच्छतु। अधाथ परस्परवशवर्तित्वानंतरं त्वं तेन सह सुभद्रां सुकल्याणीं संविदं परस्परसंभोगसुखसंवित्तिं कृणुष्व। कुरुष्व॥ ॥८॥

वृषेति नवर्चमेकादशं सूक्तमांगिरेर्हविर्धानस्यार्षमाग्नेयं। सप्तम्याद्यास्तिस्रस्त्रिष्टुभः शिष्टा जगत्यः। तथा चानुक्रांतं। वृषा नवांगिरेर्हविर्धान आग्नेयं तु त्रित्रिष्टुबंतमिति॥ गतः सूक्तविनियोगः॥

वृषा वृष्णे दुदुहे दोहसा दिवः पयांसि यह्वो अदितेरदाभ्यः।
विश्वं स वेद वरुणो यथा धिया स यज्ञियो यजतु यज्ञियाँ ऋतून्॥१॥
वृषा। वृष्णे। दुदुहे। दोहसा। दिवः। पयांसि। यह्वः। अदितेः। अदाभ्यः।
विश्वं। सः। वेद। वरुणः। यथा। धिया। सः। यज्ञियः। यजतु। यज्ञियान्। ऋतून्॥१॥

वृषाकृतिद्वारेण वृष्टेर्वर्षिता यह्वो महानदाभ्यः केनाप्यहिंस्योऽग्निरदितेरक्षीणयागक्रियस्य वृष्णो यज्ञद्वारेण स्तुतीनां हविषां वा वर्षितुर्यजमानस्यार्थाय दोहसा दोहनेन महता प्रक्षारणेन दिवः सकाशात्पयांसि वृष्टिलक्षणान्युदकानि दुदुहे। दोग्धि। प्रक्षारयति। किंच यथा वरुण आदित्यो धियात्मानुरूपया प्रज्ञया विश्वं सर्वं वेद जानाति तथा सोऽयमग्निर्जानातीत्यर्थः। यज्ञियो यज्ञार्हो यज्ञियान् यज्ञार्हानृतून्यजतु। पूजयतु॥

रपद्गंधर्वीरप्या च योषणा नदस्य नादे परि पातु मे मनः ।
इष्टस्य मध्ये अदितिर्नि धातु नो भ्राता नो ज्येष्ठः प्रथमो वि वोचति ॥२॥
रपत् । गंधर्वीः । अप्या । च । योषणा । नदस्य । नादे । परि । पातु । मे । मनः ।
इष्टस्य । मध्ये । अदितिः । नि । धातु । नः । भ्राता । नः । ज्येष्ठः । प्रथमः । वि । वोचति ॥२॥

रपद्रपितवत्यग्निगुणानुक्तवती गंधर्वीर्गंधर्वस्य स्त्र्यप्याद्भिः संस्कृता योषणाकृतिलक्षणा स्त्री च । अग्निं तर्पितवतीति शेषः । नदस्य । स्तोतृणामेतत् । स्तोतुर्मे मम स्वभूतं मनो नादे स्तुतिलक्षणे शब्दे परि पातु । अग्निः सम्यग्रक्षतु । अहं समाहितमना भूत्वा सम्यक् स्तुतिं करोमीत्यर्थः । किंचादितिरखंडनीयोऽग्निर्नोऽस्मानिष्टस्य यागस्य मध्ये नि धातु । निदधातु । नितरां स्थापयतु । प्रथमः सर्वेषां यजमानानां मुख्यो नोऽस्माकं ज्येष्ठो भ्राता वि वोचति । विशेषेण ब्रवीति । स्तौतीत्यर्थः । नाहमेव केवलो यजनशीलः किंतु सर्व एवास्मत्कुलीनो देवयागप्रिय इत्यर्थः ॥

सो चिन्नु भद्रा क्षुमती यशस्वत्युषा उवास मनवे स्वर्वती ।
यदीमुशंतमुशतामनु क्रतुमग्निं होतारं विदथाय जीजनन् ॥३॥
सो इति । चित् । नु । भद्रा । क्षुऽमती । यशस्वती । उषाः । उवास । मनवे । स्वःऽवती ।
यत् । ईं । उशंतं । उशतां । अनु । क्रतुं । अग्निं । होतारं । विदथाय । जीजनन् ॥३॥

भद्रा भजनीया क्षुमती शब्दवती यशस्वत्यन्नवती कीर्तिमती वा सो चित् सैव प्रसिद्धोषा मनवे मनुष्याय यजमानाय स्वर्वत्यादित्यवती सती नु क्षिप्रमुवास । उषितवती । उदितवतीत्यर्थः । कदोदितवतीति उच्यते । यद्यदोशंतं स्तुतिं हविश्च कामयमानमुशतां यष्टुं कामयमानानां संबंधिनं होतारं देवानामाह्वातारं होमनिष्पादकं वेमेनमग्निमनु क्रतुं स्तुतिकर्मणः पश्चाद्विदथाय यजनीयाय यज्ञार्थं जीजनन् । ऋत्विग्यजमाना जनयंतीत्यर्थः । तदोदितवतीति संबंधः ॥

अध त्यं द्रप्सं विभ्वं विचक्षणं विराभरदिषितः श्येनो अध्वरे ।
यदी विशो वृणते दस्ममार्या अग्निं होतारमध धीरजायत ॥४॥
अध । त्यं । द्रप्सं । विऽभ्वं । विऽचक्षणं । विः । आ । अभरत् । इषितः । श्येनः । अध्वरे ।
यदि । विशः । वृणते । दस्मं । आर्याः । अग्निं । होतारं । अध । धीः । अजायत ॥४॥

अधाथानंतरं श्येनः श्येनाख्यो विः पक्ष्यध्वरे याग इषितोऽभिप्रेषितो विभ्वं महांतं विचक्षणं सर्वस्य विशेषेण द्रष्टारं त्यं तं प्रसिद्धं द्रप्सं नात्यल्पं नातिबहुलं सोममाभरत् । आहृतवान् । अपि च यदि यदार्या अभिगमनीयं तं व्रजंतो विशो यजमाना मनुष्या दस्मं दर्शनीयं शत्रूणामुपक्षपयितारं वा होतारमग्निं वृणते प्रार्थयंते अध तदा धीर्यागादिक्रियाजायत । यज्वभिः प्रतायत इत्यर्थः ॥

सदासि रण्वो यवसेव पुष्यते होत्राभिरग्ने मनुषः स्वध्वरः ।
विप्रस्य वा यच्छशमान उक्थ्यं१ वाजं ससवाँ उपयासि भूरिभिः ॥५॥
सदा । असि । रण्वः । यवसाऽइव । पुष्यते । होत्राभिः । अग्ने । मनुषः । सुऽअध्वरः ।
विप्रस्य । वा । यत् । शशमानः । उक्थ्यं । वाजं । ससऽवान् । उपऽयासि । भूरिऽभिः ॥५॥

हे अग्ने त्वं सदा सततं रण्वोऽसि। रमणीयो भवसि। तत्र दृष्टांतः। यवसेव पुष्यते यथा यवसानि तृणानि च पुष्टिं कुर्वते इत्यश्वगोमहिषादिचतुष्पदाय सर्वदा रमणीयानि भवंति तद्वत्। अपि च हे अग्ने मनुषो मनुष्यस्य स्वभूतैर्होत्राभिः। होत्रेति यज्ञनामैतत्। यज्ञैः स्वध्वरः शोभनयज्ञो भवेति शेषः। विप्रस्य वा स्तोतुर्वा यवस्य यजमानस्य वा स्वभूतमुक्थ्यं स्तोत्रं शंसमानः प्रशंसन् वाजं हविर्लक्षणमन्नं ससवान् संभजमानश्च भूरिभिर्बहुभिर्देवैः सहोपयासि उपगच्छसि ॥ ॥५॥

उदी॑रय पि॒तरा॑ जा॒र आ भग॒मिय॑क्षति हर्य॒तो हृ॒त्त इ॑ष्यति ।
विव॑क्ति॒ वह्नि॑ः स्वप॒स्यते॑ म॒खस्त॑वि॒ष्यते॒ असु॑रो॒ वेप॑ते म॒ती ॥६॥
उत्। ई॒र॒य॒। पि॒तरा॑। जा॒रः। आ। भग॑म्। इय॑क्षति। ह॒र्य॒तः। हृ॒त्तः। इ॒ष्य॒ति॒।
विव॑क्ति। वह्नि॑ः। सु॒ऽअ॒प॒स्यते॑। म॒खः। त॒वि॒ष्यते॑। असु॑रः। वेप॑ते। म॒ती ॥६॥

हे अग्ने त्वदीयं ज्योतिः पितरा पितरौ सर्वप्राणिनां मातापितृभूते द्यावापृथिव्यौ प्रत्युन्नमय। तत्र दृष्टांतः। आकार उपमार्थे। रात्रेर्नक्षत्रादिदीप्तीनां च जरयितृत्वाज्जार आदित्यः। स यथा द्यावापृथिव्यौ प्रति भगं भजनीयं ज्योतिरुन्नमयति तद्वत्। हर्यतो यागं कामयमानान्प्रतीयक्षति। यजमानो यष्टुमिच्छति। हृत्तो हृदयेन चेष्यति। इषिरयं गत्यर्थः शुद्धोऽप्युपसर्गपूर्वो द्रष्टव्यः। अधीष्यति देवान्यष्टुमधिगच्छति। विवक्ति। विवक्ति। शस्त्रलक्षणाः स्तुतीर्वक्तुमिच्छति। वह्निर्वोढा स्तुतीनां देवान्प्रति प्रापयिता होता च स्वपस्यते। शोभनमात्मीयं कर्म कर्तुमिच्छति। मखः। यज्ञनामैतत्। अत्र तत्प्रयोक्ताध्वर्युरुच्यते। स च तविष्यति। तविषिर्वृद्ध्यर्थः। स चात्रांतर्णीतसनर्थश्च द्रष्टव्यः। तुतुविषति। स्तोत्रलक्षणाः स्तुतीर्वर्धयितुमिच्छतीत्यर्थः। असुरः प्राणवान् प्रज्ञावान्वा। ब्रह्मेति शेषः। मती मत्या बुद्ध्या वेपते। कर्मवैगुण्याद्भिभ्यत्कंपते। हे अग्ने यतो यजमानः सर्वर्त्विजश्च स्वस्वकर्म कर्तुं त्वामागच्छंति अतस्त्वं शीघ्रमुन्नमयेत्यर्थः ॥

यस्ते॑ अग्ने सुम॒तिं मर्तो॑ अ॒क्षत्सह॑सः सूनो॒ अति॒ स प्र शृ॑ण्वे ।
इषं॒ दधा॑नो॒ वह॑मानो॒ अश्वै॒रा स द्यु॒माँ अम॑वान्भूषति॒ द्यून् ॥७॥
यः। ते॒। अ॒ग्ने॒। सु॒ऽम॒तिम्। मर्तः॑। अक्ष॑त्। सह॑सः। सू॒नो॒ इति॑। अति॑। सः। प्र। शृ॒ण्वे॒।
इष॑म्। दधा॑नः। वह॑मानः। अश्वैः॑। आ। सः। द्यु॒ऽमान्। अम॑ऽवान्। भू॒ष॒ति॒। द्यून् ॥७॥

हे सहसः सूनो बलस्य पुत्राग्ने त्वदीयां सुमतिं शोभनामनुग्राहिकां बुद्धिं यो मर्तो मनुष्यो यजमानोऽक्षत् अश्नुते। अनुग्रहशीलं त्वां स्तुतिभिर्हविर्भिश्च परिचरतीत्यर्थः। स यजमानोऽति प्र शृण्वे। सर्वाँल्लोकानतीत्य प्रकर्षेण श्रूयते। प्रख्यातो भवतीत्यर्थः। कीदृशः। इषमन्नं दधानोऽर्थिभ्यः प्रयच्छन् अश्वैर्वहमानः। किंच स एव द्युमान्दीप्तिमान् शरीरपतनानंतरं द्युस्थानवान्वामवान्बलवान्वा द्यून्। द्युरित्यहर्नाम ॥ कालाध्वनोरत्यंतसंयोग इत्येषा द्वितीया ॥ आदित्यकर्तृकाण्यहानि। आचंद्रार्कमित्यर्थः। भूषति। भवति ॥

महाव्रते संस्थिते मरुत्वतीये यदग्न एषेत्यनया चतुर्गृहीतमाज्यं जुहुयात्। तथैव पंचमारण्यके सूत्रितं। यदग्न एषा समितिर्भवाति। ऐ० आ० ५. १. १.। इति ॥

यद॑ग्न ए॒षा समि॑ति॒र्भवा॑ति दे॒वी दे॒वेषु॑ यज॒ता य॑जत्र ।
रत्ना॑ च॒ यद्वि॒भजा॑सि स्वधावो भा॒गं नो॒ अत्र॒ वसु॑मन्तं वीतात् ॥८॥
यत्। अ॒ग्ने॒। ए॒षा। स॒म्ऽइ॑तिः। भवा॑ति। दे॒वी। दे॒वेषु॑। य॒ज॒ता। य॒ज॒त्र॒।
रत्ना॑। च॒। यत्। वि॒ऽभजा॑सि। स्व॒धा॒ऽवः॒। भा॒गम्। नः॒। अत्र॑। वसु॑ऽमन्तम्। वी॒ता॒त् ॥८॥

हे यजत्र यष्टव्याग्ने यद्यदेषा समितिरस्मत्कर्तृका स्तुतिसंहतिर्यजता यजतेषु यष्टव्येषु देवेषु मध्ये देवी द्योतमाना भवाति। यष्टव्या देवा अस्माभिः स्तूयंत इज्यंते चेत्यर्थः। हे स्वधावो हविर्लक्षणान्नवन्नग्ने त्वं यद्यदा रत्ना च रत्नानि रमणीयानि धनानि स्तोतृभ्यो यष्टृभ्यश्च विभजासि विभजसि अत्र तदानीं तथा नोऽस्मान्प्रति वसुमंतं धनवंतं नानाधनावयवभूतं भागमंशं वीतात्॥ वी गत्यादिषु। तुह्योस्तातङ्ङाशिष्यन्यतरस्यां। पा॰ ७. १. ३५.। इति हेः स्थाने तातङ्। अंतर्णीतण्यर्थश्चात्र द्रष्टव्यः॥ वयय। आगमय। अस्मभ्यं प्रयच्छेत्यर्थः॥

श्रुधी नो अग्ने सदने सधस्थे युक्ष्वा रथममृतस्य द्रवित्नुं।
आ नो वह रोदसी देवपुत्रे माकिर्देवानामप भूरिह स्याः॥९॥
श्रुधि। नः। अग्ने। सदने। सधऽस्थे। युक्ष्व। रथं। अमृतस्य। द्रवित्नुं।
आ। नः। वह। रोदसी इति। देवपुत्रे इति देवऽपुत्रे। माकिः। देवानां। अप।
भूः। इह। स्याः॥९॥

हे अग्ने सधस्थे सहस्थाने सर्वदेवतासाधारणे सदने यज्ञगृहे स्थितः सन्नोऽस्मदीयं वचनं श्रुधि। शृणु। किं तद्वचनं उच्यते। अमृतस्य देवपानस्य मधुनो द्रवित्नुं द्रावकं रथमात्मीयं युक्ष्व। आह्वानार्थं देवान्प्रति गमनायाश्वैः संयुक्ष्व। संयुक्तेन रथेन गत्वा नोऽस्माकं यज्ञं प्रति देवपुत्रे देवस्य प्रजापतेर्दुहितरौ यद्वा देवाः पुत्रा ययोस्ते रोदसी द्यावापृथिव्यावा वह। प्रापय। देवानां मध्ये कश्चिद्देवोऽप भूरपभविता अस्मद्यज्ञादपगंता माकिः स्यात्। त्वं चेहास्मिन्यज्ञे स्याः। संनिहितो भव॥ ॥१०॥

द्यावेति नवर्चं द्वादशं सूक्तमांगेर्हविर्धानस्यार्षं त्रैष्टुभमाग्नेयं। द्यावेत्यनुक्रांतं॥ गतो विनियोगः॥

द्यावा ह क्षामा प्रथमे ऋतेनाभिश्रावे भवतः सत्यवाचा।
देवो यन्मर्तान्यजथाय कृण्वन् सीदद्धोता प्रत्यङ् स्वमसुं यन्॥१॥
द्यावा। ह। क्षामा। प्रथमे इति। ऋतेन। अभिऽश्रावे। भवतः। सत्यऽवाचा।
देवः। यत्। मर्तान्। यजथाय। कृण्वन्। सीदत्। होता। प्रत्यङ्। स्वं। असुं। यन्॥१॥

सत्यवाचा सत्यवाचौ सत्यवादिन्यौ प्रथमे प्रधानभूते द्यावा क्षामा द्युक्षामे द्यावापृथिव्यावृतेन सत्यभूतेन देवयजनेन सहाभिश्रावे। आभिमुख्येन श्रूयत इत्यभिश्राव आह्वानं। तस्मिन्नस्मद्यज्ञनिमित्तेऽग्नेः संबंधिन्याह्वाने भवतः॥ लोडर्थे लट्॥ भवतां। यद्यदा देवो द्योतमानोऽग्निर्यजथाय यज्ञाय मर्तान्मनुष्यान् कृण्वन्प्रेरयन् प्रत्यङाह्वानार्थं देवानां प्रत्यंचिता स्वमसुमात्मीयं ज्वालालक्षणं प्राणं यन् प्राप्नुवन् होता देवानामाह्वाता सीदत् वेद्यां निषीदति। तदास्मद्यजनकाले द्यावापृथिवी प्रमुखोऽग्निराह्वयत्वित्यर्थः॥

देवो देवान्परिभूर्ऋतेन वहा नो हव्यं प्रथमश्चिकित्वान्।
धूमकेतुः समिधा भाऋजीको मंद्रो होता नित्यो वाचा यजीयान्॥२॥
देवः। देवान्। परिऽभूः। ऋतेन। वह। नः। हव्यं। प्रथमः। चिकित्वान्।
धूमऽकेतुः। संऽइधा। भाःऽऋजीकः। मंद्रः। होता। नित्यः। वाचा। यजीयान्॥२॥

देवो द्योतमानोऽग्निस्त्वं देवानिंद्रादीन्परिभूराह्वानहविर्नयनद्वारेण परिभूः परिगृह्णन्नृतेन यज्ञेन सह नोऽस्माकं हव्यं हविर्वह। प्रापय। कीदृशस्त्वं। प्रथमो देवानां मुख्यः चिकित्वान् सर्वं जानन् धूमकेतुर्धूमस्य

वर्ता वा धूमध्वजो वा धूमप्रज्ञानो वा समिधा समिंधनेन दीपनेन भास्वजीक ऋजुदीप्तिः । ऊर्ध्वज्वलन इत्यर्थः । मंद्रः स्तुत्यः होताह्वाता नित्यो ध्रुवो वाधा यजीयानतिशयेन यष्टा च ॥

स्वावृग्देवस्यामृतं यदी गोरतो जातासो धारयंत उर्वी ।
विश्वे देवा अनु तत्ते यजुर्गुर्दुहे यदेनी दिव्यं घृतं वाः ॥३॥
स्वावृक् । देवस्य । अमृतं । यदि । गोः । अतः । जातासः । धारयंते । उर्वी इति ।
विश्वे । देवाः । अनु । तत् । ते । यजुः । गुः । दुहे । यत् । एनी । दिव्यं । घृतं । वारिति वाः ॥३॥

देवस्याग्नेः स्वावृक् स्वार्जनममृतमुदकं स्वतेजसः सकाशाद्यदि यदोत्पद्यते तदातोऽस्मान्नोदकाज्जातास उत्पन्ना ओषधय उर्वी द्यावापृथिव्यौ धारयंति । विश्वे देवाः सर्वे स्तोतारस्ते तव संबंधि तद्यजुरुदकस्य तद्दानमनु गुः । अनुगायंति । एनी श्वेता दीप्तिर्दिव्यं दिवि भवं घृतं क्षरयद्वा वृष्टिलक्षणं यदुदकं दुहे दोग्धि ॥

अर्चामि वां वर्धायापो घृतस्नू द्यावाभूमी शृणुतं रोदसी मे ।
अहा यद्द्यावोऽसुनीतिमयन्मध्वा नो अत्र पितरा शिशीतां ॥४॥
अर्चामि । वां । वर्धाय । अपः । घृतस्नू इति घृतऽस्नू । द्यावाभूमी इति । शृणुतं ।
रोदसी इति । मे ।
अहा । यत् । द्यावः । असुऽनीतिं । अयन् । मध्वा । नः । अत्र । पितरा । शिशीतां ॥४॥

हे अग्ने त्वमपो मदीयं यज्ञरूपं कर्म वर्धाय । प्रोत्सर्पिते सति हे घृतस्नू वृष्ट्युदकस्य प्रसवित्र्यौ हे द्यावाभूमी द्यावापृथिव्यौ वां युवामर्चामि ॥ अर्च स्तुतौ ॥ स्तौमि । हे रोदसी द्यावापृथिव्यौ युवां मे मदीयं स्तोत्रं शृणुतं । यद्यस्मिन्नहा । अहःशब्दसामर्थ्यादहोरात्रसाध्यं कर्मोच्यते ॥ सुपां सुलुगिति सप्तम्येकवचनस्याजादेशः ॥ अहन्यहोरात्रसाध्यकर्मणि द्यावः स्तोतारोऽसुनीतिं । असुः प्रज्ञा । तया नीयत इत्यसुनीतिः स्तुतिः । तामयन् गच्छंति अत्रास्मिन्कर्मणि पितरा सर्वस्य मातापितृभूते द्यावापृथिव्यौ नोऽस्मान्वृष्ट्युदकेन शिशीतां । स्नानपानादिना संस्कुरुतां ॥

किं स्विन्नो राजा जगृहे कदस्याति व्रतं चकृमा को वि वेद ।
मित्रश्चिद्धि ष्मा जुहुराणो देवाञ्छ्लोको न यातामपि वाजो अस्ति ॥५॥
किं । स्वित् । नः । राजा । जगृहे । कत् । अस्य । अति । व्रतं । चकृम । कः । वि । वेद ।
मित्रः । चित् । हि । स्म । जुहुराणः । देवान् । श्लोकः । न । यातां । अपि । वाजः । अस्ति ॥५॥

किंस्विच्छब्दो वितर्कार्थे । किंवा राजा दीप्यमानोऽग्निर्नोऽस्माकं स्वभूतानि हवींषि स्तुतीश्च जगृहे परिगृह्णीयात् किंवास्याग्नेरति व्रतमतिपूजितं परिचरणाख्यं कर्म चकृम वयं क्रियास्म । कर्मवैगुण्याद्भीतस्य पूर्वार्धं एतद्वचनमुक्तं । उत्तरार्धं इदानीं तन्निराक्रियते । हि स्मेतीमौ पूरणौ । चिदित्युपमार्थे । जुहुराणः स्निग्धमाहूयमानो मित्रः स्निग्धो यथागच्छेत् तथा । नेति संप्रत्यर्थे । श्लोकोऽस्मदीया स्तुतिलक्षणा वाग्देवानिंद्रादीन्यातां । गच्छतु । अपि वाजो हविराख्यं चान्नं यदस्ति तदपि देवान्प्रति गच्छतु । देवाः स्तुतिं हविश्च प्रतिगृह्णंत्वित्यर्थः ॥ ॥११॥

दुर्मंत्वत्रामृतस्य नाम सलक्ष्मा यद्विषुरूपा भवाति ।
यमस्य यो मनवते सुमंत्वग्ने तमृष्व पाह्यप्रयुच्छन् ॥६॥

दुःऽमंतु । अत्र । अमृतस्य । नाम । सऽलक्ष्मा । यत् । विषुऽरूपा । भवाति ।
यमस्य । यः । मनवते । सुऽमंतु । अग्ने । तं । ऋष्व । पाहि । अप्रऽयुच्छन् ॥ ६ ॥

यस्मिन्देवा विदथे मादयंते विवस्वतः सदने धारयंते ।
सूर्ये ज्योतिरदधुर्मास्य१क्तून्परि द्योतनिं चरतो अजस्रा ॥ ७ ॥
यस्मिन् । देवाः । विदथे । मादयंते । विवस्वतः । सदने । धारयंते ।
सूर्ये । ज्योतिः । अदधुः । मासि । अक्तून् । परि । द्योतनिं । चरतः । अजस्रा ॥ ७ ॥

यस्मिन्नग्नौ यज्ञस्य प्रधानांशे सति देवा इंद्रादयो विदथे यज्ञे मादयंते हविषात्मानं तर्पयंति तृप्यंति वा । अपि च विवस्वतो मनुष्यस्य यजमानस्य स्वभूते सदने वेद्याख्ये स्थाने धारयंते । आत्मानं स्थापयंति च । किंच सूर्ये ज्योतिरहराख्यं तेजोऽदधुः । स्थापितवंतः । मासि चंद्रमस्यक्तून्रात्रीः स्थापितवंतः । तदनंतरमजस्रानुपक्षीणौ सूर्याचंद्रमसौ द्योतनिं दीप्तिं परि चरतः । परिगच्छतः । सर्वत्र प्राप्नुतः ॥

यस्मिन्देवा मन्मनि संचरंत्यपीच्ये३ न वयमस्य विद्म ।
मित्रो नो अत्रादितिरनागान्त्सविता देवो वरुणाय वोचत् ॥ ८ ॥
यस्मिन् । देवाः । मन्मनि । संऽचरंति । अपीच्ये । न । वयं । अस्य । विद्म ।
मित्रः । नः । अत्र । अदितिः । अनागान् । सविता । देवः । वरुणाय । वोचत् ॥ ८ ॥

देवा इंद्रादयो यस्मिन्नग्नौ मन्मनि ज्ञानभूते ज्ञानवत्सर्वप्रकाशके सति संचरंति स्वाधिकारे संप्रवर्तंते अपीच्येऽंतर्हिते स्थितमग्नेः स्वरूपं वयं न विद्म । तत्त्वतो न जानीमः । अत्रास्मिन्यज्ञेऽंगभावाय वर्तमानो मित्रो वरुणाय सर्वेषां पापानां निवारयित्रेऽग्नये नोऽस्माननागानपापान्वोचत् । ब्रवीतु । तथादितिर्देवमाता सविता सर्वस्य प्रेरको देवश्च ब्रवीतु ॥

श्रुधी नो अग्ने सदने सधस्थे युक्ष्वा रथममृतस्य द्रवित्नुं ।
आ नो वह रोदसी देवपुत्रे माकिर्देवानामप भूरिह स्याः ॥ ९ ॥
श्रुधि । नः । अग्ने । सदने । सधऽस्थे । युक्ष्व । रथं । अमृतस्य । द्रवित्नुं ।
आ । नः । वह । रोदसी इति । देवपुत्रे इति देवऽपुत्रे । माकिः । देवानां । अप ।
भूः । इह । स्याः ॥ ९ ॥

श्रुधी न इत्येषा नवमी पूर्वसूक्ते व्याख्याता ॥ ॥ १२ ॥

युजे वामिति पंचर्चं त्रयोदशं सूक्तं । अदितेः पुत्रस्य विवस्वत आर्षं । हविर्धानाख्ये ये द्वे शकटे तद्देवत्यमिदं । अंत्या जगती शिष्टास्त्रिष्टुभः । तथा चानुक्रांतं । युजे पंच विवस्वानादित्यो हाविर्धानं जगत्यंतमिति ॥ गतः सूक्तविनियोगः ॥ हविर्धानप्रवर्तने युजे वामित्येका । सूत्रितं च । अंतरा वर्त्मपादयोर्युजे वां ब्रह्म पूर्व्यं नमोभिः । आ॰ ४. ९. । इति ॥

युजे वां ब्रह्म पूर्व्यं नमोभिर्वि श्लोक एतु पथ्येव सूरेः ।
शृण्वंतु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः ॥ १ ॥

युजे। वां। ब्रह्म। पूर्व्यं। नमःऽभिः। वि। श्लोकः। एतु। पथ्याऽइव। सूरेः।
शृण्वंतु। विश्वे। अमृतस्य। पुत्राः। आ। ये। धामानि। दिव्यानि। तस्थुः ॥१॥

हे हविर्धानशकटे वां युवामहं पूर्व्यं पूर्वस्मिन्काले भवं। अनादिकालप्रवृत्तमित्यर्थः। एवंभूतं ब्रह्म मंत्रं। उच्चार्येति शेषः। नमोभिः सोमादिहविर्लक्षणैरन्नैर्युजे। युनज्मि। युवयोरुपरि सोमादिकमारोप्य पत्नीशालातो हविर्धानं प्रति युवां नयामीत्यर्थः। एवंभूतयोर्युवयोः श्लोकः शब्दो व्येतु। विश्वान्देवान्प्रति विविधं गच्छतां। तत्र दृष्टांतः। पथ्येव सूरेः यथा स्तोतुः स्वभूता पथ्या परिणामसुखावहाहुतिर्विश्वान्देवान्प्रति विविधं गच्छति तद्वत्। अमृतस्यामरणधर्मणः प्रजापतेः पुत्रा विश्वे देवा एवंभूतं शब्दं शृण्वंतु ये देवा दिव्यानि दिवि भवानि धामानि स्थानान्या तस्थुः अधिष्ठितवंतः। ते शृण्वंत्वित्यर्थः॥

अत्रैव हविर्धानप्रवर्तने यमे इवेत्येषा। सूचितं च। यमे इव यतमाने यदैतमधि द्वयोरद्धा उक्थ्यं वच इत्यर्धर्च आरमेत्। आ० ४. ९.। इति॥

यमे इव यतमाने यदैतं प्र वां भरन्मानुषा देवयंतः।
आ सीदतं स्वमु लोकं विदाने स्वासस्थे भवतमिंदवे नः ॥२॥

यमे इवेति यमेऽइव। यतमाने इति। यत्। ऐतं। प्र। वां। भरन्। मानुषाः। देवऽयंतः।
आ। सीदतं। स्वं। ऊं इति। लोकं। विदाने इति। स्वासस्थे इति सुऽआसस्थे। भवतं।
इंदवे। नः ॥२॥

यमे इव यथा सहोत्पन्ने अपत्ये संचरतः तथा यतमाने गमनहविर्धारणादिस्वाधिकारकर्मणि प्रवर्तमाने हविर्धानशकटे युवां यद्यदैतं हविर्धानस्थानं प्रतिगच्छतः तदा देवयंतो देवकामा मानुषा यजमाना वां युवां प्र भरन्। प्रभरंति। किंच युवां स्वमु लोकमात्मीयमेव हविर्धानाख्यं स्थानं विदाने जानती आ सीदतं। ततो नोऽस्माकमिंदवे सोमार्थं स्वासस्थे शोभननिवासस्थाने भवतं॥

पंच पदानि रुपो अन्वरोहं चतुष्पदीमन्वेमि व्रतेन।
अक्षरेण प्रति मिम एतामृतस्य नाभावधि सं पुनामि ॥३॥

पंच। पदानि। रुपः। अनु। अरोहं। चतुःऽपदीं। अनु। एमि। व्रतेन।
अक्षरेण। प्रति। मिमे। एतां। ऋतस्य। नाभौ। अधि। सं। पुनामि ॥३॥

रुपो यष्टॄणां स्वर्गमारोपयितुर्यज्ञस्यांगत्वेन संबंधीनि पंचसंख्याकानि धानासोमपशुपुरोडाशाज्याख्यानि पदानि वृष्टिहेतुत्वेन देवान्प्रति गंतॄणि हवींष्यन्वरोहं। अनुरोहामि। शकटयोः स्थापनवहनानंतरं करणं करोमीत्यर्थः। किंच चतुष्पदीं चतुर्भिः पादैर्युक्तां त्रिष्टुबादिच्छंदस्कां क्रियां व्रतेन प्रयोगकर्मणान्वेमि। अनुगच्छामि। यथाकालं प्रयुनज्मीत्यर्थः। अक्षरेण प्रणवाख्येनैतामुपस्थितां प्रतिगरक्रियां प्रति मिमे। निर्मिमे। अपि चर्तस्य यज्ञस्य। अधीति सप्तम्यर्थानुवादी। नाभौ नाभिभूते वेद्याख्ये स्थाने सं पुनामि। संशोधयामि। दशापवित्रेण सोमं संस्करोमीत्यर्थः॥

देवेभ्यः कमवृणीत मृत्युं प्रजायै कममृतं नावृणीत।
बृहस्पतिं यज्ञमकृण्वत ऋषिं प्रियां यमस्तन्वं१ प्रारिरेचीत् ॥४॥

देवेभ्यः। कं। अवृणीत। मृत्युं। प्रऽजायै। कं। अमृतं। न। अवृणीत।
बृहस्पतिं। यज्ञं। अकृण्वत। ऋषिं। प्रियां। यमः। तन्वं। प्र। अरिरेचीत् ॥४॥

देवेभ्यो देवानां मृत्युं मारयितारं कं स्वपुरुषमवृणीत । प्रार्थयति । प्रयुंक्ते । किंच प्रजायै देवव्यतिरिक्तायाः मनुष्यादिकायाः प्रजाया अमृतममारकमविनाशकं कं वा स्वपुरुषं नावृणीत । न प्रयुंक्ते । हविर्धारणक्रियायां प्रवृत्तायां सत्यां पूर्वोक्तानां सर्वेषां स्थितिरवश्यंभावित्वान्न कंचिदपि विनाशकं स्वपुरुषं यमो निरूपयतीत्यर्थः । अपि च बृहस्पतिं बृहतां देवानां हविर्धारणेन पालकं बृहतां मंत्राणां स्वामिनं ऋषिं सर्वस्य दृष्टादृष्टफलस्य द्रष्टारं यज्ञमकृण्वत । ऋत्विग्यजमानाः कुर्वंति । अपि च यमः प्रियां तन्वमस्मदीयमिष्टं शरीरं प्रारिरेचीत् । धातूनामनेकार्थत्वाद्रिचिरत्र परिहारार्थे वर्तते । प्ररेचयति । मृत्योः सकाशात्परिहरति । कर्मवैगुण्यजनितदोषभावादस्माकं जीवितं नापहरतीत्यर्थः ॥

सप्त क्षरंति शिशवे मरुत्वते पित्रे पुत्रासो अप्यवीवतन्नृतं ।
उभे इदस्योभयस्य राजत उभे यतेते उभयस्य पुष्यतः ॥५॥
सप्त । क्षरंति । शिशवे । मरुत्वते । पित्रे । पुत्रासः । अपि । अवीवतन् । ऋतं ।
उभे इति । इत् । अस्य । उभयस्य । राजतः । उभे इति । यतेते इति । उभयस्य । पुष्यतः ॥५॥

मरुत्वते । मरुतः स्तोतारः । स्तुतिद्वारेण तद्वते पित्रे ऋत्विजां पितृभूताय शिशवे शंसनीयाय हविर्धानशकटयोः सुखासीनभूताय सोमाय सप्त छंदांसि क्षरंति । स्तुतित्वेन गच्छंति । अपि च पुत्रासोऽपि सोमस्य पुत्रभूता ऋत्विजोऽप्यृतं सत्यभूतं स्तोत्रमवीवतन् । संगमयंति । सद्गुणग्राहिणीं स्तुतिं कुर्वंतीत्यर्थः । उभे इद्धे एव हविर्धानशकटे अस्योभयस्य देवजातस्य मनुष्यजातस्य च राजतः । ईशाते । उभे एव शकटे यतेते । कर्मानुष्ठाने प्रयत्नं कुरुतः । उभयस्य देवजातस्य मनुष्यजातस्य च पुष्यतः । हविर्धारणद्वारेण पुष्टिं कुरुत इत्यर्थः ॥ ॥१३॥

परेयिवांसमिति षोडशर्चं चतुर्दशं सूक्तं विवस्वतः पुत्रस्य यमस्यार्षं । अंगिरसो नः पितरो नवग्वा इति षष्ठ्या अंगिरःपित्रथर्वभृगुलक्षणा लिंगोक्ता देवताः । प्रेहीत्याद्यास्तिस्रो लिंगोक्तदेवताकाः पितृदेवताका वा । अति द्रव सारमेयावित्यादिकस्तृचः सरमापुत्रौ यौ श्वानौ परलोकमार्गमभितः स्थितौ तद्देवताकः । शिष्टा यमदेवत्याः । यमाय सोममिति त्रयोदश्याद्या अनुष्टुभः । यमाय मधुमत्तममित्येषा बृहती । आदितो द्वादश त्रिष्टुभः । तथा चानुक्रांतं । परेयिवांसं षोळश यमो यामं षष्ठी लिंगोक्तदेवता परास्व तिस्रः पित्र्या वा तृचः श्वभ्यां परा अनुष्टुभो बृहत्युपांत्येति ॥ गतः सूक्तविनियोगः ॥ महापितृयज्ञे यमयागाख्या याज्या । सूत्रितं च । इमं यम प्रस्तरमा हि सीदेति द्वे परेयिवांसं प्रवतो महीरनु । आ॰ २.१९. । इति ॥

परेयिवांसं प्रवतो महीरनु बहुभ्यः पंथामनुपस्पशानं ।
वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्य ॥१॥
परेयिऽवांसं । प्रऽवतः । महीः । अनु । बहुऽभ्यः । पंथां । अनुऽपस्पशानं ।
वैवस्वतं । संऽगमनं । जनानां । यमं । राजानं । हविषा । दुवस्य ॥१॥

हे मदीयांतरात्मन् यजमान वा त्वं राजानं पितॄणां स्वामिनं यमं हविषा पुरोडाशादिना दुवस्य । परिचर । कीदृशं । प्रवतः प्रकृष्टकर्मवतो भूलोकवर्तिभोगसाधनं पुण्यमनुष्ठितवतः पुरुषान्महीस्तत्तद्भोगोचितभूप्रदेशविशेषाननु परेयिवांसं क्रमेण मरणादूर्ध्वं प्रापितवंतं तथा बहुभ्यः स्वर्गार्थिभ्यः पुण्यकृद्भ्यः पुण्यकृतार्थे पंथां स्वर्गस्योचितं मार्गमनुपस्पशानमबाधमानं । पापिन एव पुरुषान् स्वर्गमार्गबाधेन नरकं प्रापयति न तु पुण्यकृत इत्यर्थः । वैवस्वतं विवस्वतः सूर्यस्य पुत्रं जनानां पापिनां संगमनं गंतव्यस्थानरूपं ॥

यमो नो गातुं प्रथमो विवेद नैषा गव्यूतिरपभर्तवा उ ।
यत्रा नः पूर्वे पितरः परेयुरेना जज्ञानाः पथ्या३ अनु स्वाः ॥२॥

यमः। नः। गातुं। प्रथमः। विवेद। न। एषा। गव्यूतिः। अपऽभर्तवै। ऊं इति।
यत्र। नः। पूर्वे। पितरः। पराऽईयुः। एना। जज्ञानाः। पथ्याः। अनु। स्वाः ॥२॥

प्रथमः सर्वेषां मुख्यो यमो नोऽस्माकं प्रजानां गातुं शुभाशुभनिमित्तं विवेद। जानाति। एषा गव्यूतिर्नापभर्तवा उ। अतिशयज्ञानयोगाद्यमस्य न केनचिदपहर्तुमपनेतुं शक्यत इत्यर्थः। यत्र यस्मिन्मार्गे नोऽस्माकं पूर्वे पितरः परेयुः एनानेन मार्गेण गच्छंतो जज्ञाना जाताः सर्वे स्वाः स्वभूताः पथ्याः स्वकर्ममार्गभूता गतीरनु गच्छंति ॥

आभिमारुते मातली कव्यैरित्येषा धाय्या। सूत्रितं च। इमं यम प्रस्तरमा हि सीद मातली कव्यैर्यमो अंगिरोभिरुदीरतामवर उत्परासः। आ० ५. २०.। इति ॥

मातली कव्यैर्यमो अंगिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः।
यांश्च देवा वावृधुर्ये च देवान्स्वाहान्ये स्वधयान्ये मदंति ॥३॥
मातली। कव्यैः। यमः। अंगिरःऽभिः। बृहस्पतिः। ऋक्वऽभिः। ववृधानः।
यान्। च। देवाः। ववृधुः। ये। च। देवान्। स्वाहा। अन्ये। स्वधया। अन्ये। मदंति ॥३॥

मातली। मातलिरिंद्रस्य सारथिः। तद्वानिंद्रो मातली। स कव्यैः कव्यभाग्भिः पितृभिः सह ववृधानो वर्धमानो भवति। यमश्चांगिरोभिः पितृविशेषैः सह वर्धमानो भवति। ---। तत्र देवा इंद्रादयो यांश्च कव्यभागादीन्पितॄन्ववृधुः वर्धयंति ये च कव्यभागादयः पितरो देवानिंद्रादीन्वर्धयंति तेषां मध्येऽन्य इंद्रादयः स्वाहा मदंति। स्वाहाकारेण हृष्यंति। अन्ये पितरः स्वधया स्वधाकारेण हृष्यंति ॥

महापितृयज्ञे यमस्येमं यमेत्यादिके द्वे अनुवाक्ये। इमं यम प्रस्तरमा हि सीदेति द्वे। आ० २. १९.। इति हि सूत्रितं ॥ सैषाभिमारुतेऽपि धाय्या। सूत्रं पूर्वमेवोदाहृतं ॥

इमं यम प्रस्तरमा हि सीदांगिरोभिः पितृभिः संविदानः।
आ त्वा मंत्राः कविशस्ता वहंत्वेना राजन्हविषा मादयस्व ॥४॥
इमं। यम। प्रऽस्तरं। आ। हि। सीद। अंगिरःऽभिः। पितृऽभिः। संऽविदानः।
आ। त्वा। मंत्राः। कविऽशस्ताः। वहंतु। एना। राजन्। हविषा। मादयस्व ॥४॥

हे यम अंगिरोभिरेतन्नामकैः पितृभिः संविदान ऐकमत्यं गतस्त्वमिमं प्रस्तरं विस्तीर्णं यज्ञविशेषमा सीद। आगत्योपविश। हि यस्मादेवं तस्मात्कविशस्ता विद्वद्भिर्ऋत्विग्भिः प्रयुक्ता मंत्रास्त्वा त्वामा वहंतु। हे राजन् एनैतेन हविषा तुष्टो मादयस्व। यजमानं हर्षय ॥

अंगिरोभिरा गहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व।
विवस्वंतं हुवे यः पिता तेऽस्मिन्यज्ञे बर्हिष्या निषद्य ॥५॥
अंगिरःऽभिः। आ। गहि। यज्ञियेभिः। यम। वैरूपैः। इह। मादयस्व।
विवस्वंतं। हुवे। यः। पिता। ते। अस्मिन्। यज्ञे। बर्हिषि। आ। निऽसद्य ॥५॥

हे यम वैरूपैर्विविधरूपयुक्तैर्वैरूपसामप्रियैर्वा यज्ञियेभिर्यज्ञयोग्यैरंगिरोभिः सहा गहि। आगच्छ। आगत्य चेहास्मिन्यज्ञे मादयस्व। यजमानं हर्षय। यो विवस्वांस्ते तव पितास्ति अस्मिन्यज्ञे तं विवस्वंतं हुवे। आह्वयामि। स चास्तीर्णे बर्हिष्या निषद्योपविश्य यजमानं हर्षयतु ॥ ॥१४॥

अंगिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः ।
तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥ ६॥
अंगिरसः । नः । पितरः । नवऽग्वाः । अथर्वाणः । भृगवः । सोम्यासः ।
तेषां । वयं । सुऽमतौ । यज्ञियानां । अपि । भद्रे । सौमनसे । स्याम ॥ ६॥

अंगिरसोऽंगिरोनामका अथर्वाणोऽथर्वनामका भृगवो भृगुनामकाश्च नोऽस्माकं पितरो नवग्वा अभिनवगमनयुक्ताः । यद्वा । नूतनवत्प्रीतिजनका इत्यर्थः । ते च सोम्यासः सोममर्हंतीति सोम्याः । यज्ञियानां यज्ञार्हाणां तेषां सुमतावनुग्रहयुक्तायां बुद्धौ वयं स्याम । सर्वदा तिष्ठेम । अपि च सौमनसे भद्रे सौमनसस्य कारणे कल्याणे फले स्याम । सर्वदा तिष्ठेम ॥

सत्रमध्ये दीक्षितस्य मरणे प्रेहीत्याद्याः पंचर्चस्तृतीयावर्जिता होत्रा शंसनीयाः । सूत्रितं च । प्रेहि प्रेहि पथिभिः पूर्व्येभिरिति पंचानां तृतीयामुद्धरेत् । आ॰ ६.१०. । इति ॥

प्रेहि प्रेहि पथिभिः पूर्व्येभिर्यत्रा नः पूर्वे पितरः परेयुः ।
उभा राजाना स्वधया मदंता यमं पश्यासि वरुणं च देवं ॥ ७॥
प्र । इहि । प्र । इहि । पथिऽभिः । पूर्व्येभिः । यत्र । नः । पूर्वे । पितरः । पराऽईयुः ।
उभा । राजाना । स्वधया । मदंता । यमं । पश्यासि । वरुणं । च । देवं ॥ ७॥

यत्र यस्मिन्स्थाने नोऽस्माकं पूर्वे पुरातनाः पितरः पितामहादयः परेयुः पूर्व्येभिः पूर्वस्मिन्काले भवैः । अनादिकालप्रवृत्तैरित्यर्थः । पथिभिर्मार्गैर्हे मत्पितः तत्स्थानं प्रेहि । प्रगच्छ । शीघ्रं गच्छ । गत्वा च स्वधयामृतान्नेन मदंतौ तृप्यंतौ राजाना राजानावुभोभौ यमं देवं द्योतमानं वरुणं च पश्यासि । पश्य ॥

सं गच्छस्व पितृभिः सं यमेनेष्टापूर्तेन परमे व्योमन् ।
हित्वायावद्यं पुनरस्तमेहि सं गच्छस्व तन्वा सुवर्चाः ॥ ८॥
सं । गच्छस्व । पितृऽभिः । सं । यमेन । इष्टापूर्तेन । परमे । विऽओमन् ।
हित्वाय । अवद्यं । पुनः । अस्तं । आ । इहि । सं । गच्छस्व । तन्वा । सुऽवर्चाः ॥ ८॥

हे मदीय पितः ततस्त्वं परम उत्कृष्टे व्योमन्व्योमनि स्वर्गाख्ये स्थाने स्वभूतैः पितृभिः सह सं गच्छस्व । इष्टापूर्तेन श्रौतस्मार्तदानफलेन सं गच्छस्व । तत इष्टापूर्तेन सहागम्यावद्यं पापं हित्वा परित्यज्यास्तं व्रियमाणाख्यं गृहमेहि । आगच्छ । ततः सुवर्चाः । तृतीयार्थे प्रथमा । सुवर्चसा शोभनदीप्तियुक्तेन तन्वा स्वशरीरेण सं गच्छस्व ॥

पैतृमेधिके कर्मणि श्मशानायतनं प्रोक्षत्यपेत वीतेति । सूत्रितं च । गर्तोदकेन शमीशाखया त्रिः प्रसव्यमायतनं परिव्रजन् प्रोक्षत्यपेत वीत वि च सर्पतातः । आ॰ गृ॰ ४. २. १०. । इति ॥

अपेत वीत वि च सर्पतातोऽस्मा एतं पितरो लोकमक्रन् ।
अहोभिरद्भिरक्तुभिर्व्यक्तं यमो ददात्यवसानमस्मै ॥ ९॥
अप । इत । वि । इत । वि । च । सर्पत । अतः । अस्मै । एतं । पितरः । लोकं । अक्रन् ।
अहःऽभिः । अत्ऽभिः । अक्तुऽभिः । विऽअक्तं । यमः । ददाति । अवऽसानं । अस्मै ॥ ९॥

श्मशाने पूर्वं स्थिता हे पिशाचादयः अतोऽस्मान्मृतयजमानदहनस्थानादपेत । अपगच्छत । वीत । विशेषेण गच्छत । वि सर्पत च । इदं स्थानं परित्यज्य नानाभावेन दूरतरं देशं गच्छतेत्यर्थः । पितरोऽस्मै मृतयजमानस्यार्थायैतं लोकमिदं दहनस्थानमक्रन् । यमस्याज्ञयान्वकुर्वन् । यमोऽप्यहोभिर्दिवसैरद्भिरभ्युक्षणोदकैरक्तुभी रात्रिभिर्व्यक्तं संगतं । शुद्धिनिमित्तैः कालोदकादिभिः शोधितमित्यर्थः । अवसानं दहनस्थानमस्मै मृतयजमानस्यार्थाय ददाति । दत्तवान् ॥

अनुस्तरण्या वृक्कौ पार्श्वयोराम्रफलाकृती । तावुद्धृत्य प्रेतस्य हस्तयोर्निदधात्यति द्रव सारमेयाविति द्वाभ्यां । सूचितं च । वृक्कावुद्धृत्य पाण्योरादध्यादति द्रव सारमेयौ श्वानौ । आ० गृ० ४. ३. २०. । इति ॥

अति द्रव सारमेयौ श्वानौ चतुरक्षौ शबलौ साधुना पथा ।
अथा पितॄन्त्सुविदत्राँ उपेहि यमेन ये सधमादं मदंति ॥१०॥
अति । द्रव । सारमेयौ । श्वानौ । चतुःऽअक्षौ । शबलौ । साधुना । पथा ।
अथ । पितॄन् । सुऽविदत्रान् । उप । इहि । यमेन । ये । सधऽमादं । मदंति ॥१०॥

हे अग्ने साधुना पथा समीचीनेन मार्गेण श्वानावुभावति द्रव । अतिक्रम्य गच्छ । यमसंबंधिनौ यौ श्वानौ प्रेतस्य बाधकौ तौ परित्यज्य समीचीनेन मार्गेण प्रेतं नयेत्यर्थः । कीदृशौ श्वानौ । सारमेयौ । सरमा नाम काचित्प्रसिद्धा देवशुनी । तस्याः पुत्रौ चतुरक्षौ उपरिभागे पुनरप्यक्षिद्वयं ययोस्तादृशौ । अथ शोभनमार्गेण गमनानंतरं ये पितरो यमेन सधमादं सहर्षं मदंति प्राप्नुवंति तान्सुविदत्रान् सुष्ठभिज्ञान्पितॄनुपेहि । उपगच्छ ॥ ॥१५॥

यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ ।
ताभ्यामेनं परि देहि राजन्त्स्वस्ति चास्मा अनमीवं च धेहि ॥११॥
यौ । ते । श्वानौ । यम । रक्षितारौ । चतुःऽअक्षौ । पथिरक्षी इति पथिऽरक्षी ।
नृऽचक्षसौ ।
ताभ्यां । एनं । परि । देहि । राजन् । स्वस्ति । च । अस्मै । अनमीवं । च । धेहि ॥११॥

हे राजन् हे यम ते त्वदीयौ यौ श्वानौ विद्येते ताभ्यां हे राजन् यम एनं प्रेतं परि देहि । रक्षार्थं प्रयच्छ । कीदृशौ श्वानौ । रक्षितारौ यमगृहस्य रक्षकौ चतुरक्षावक्षिचतुष्टययुक्तौ पथिरक्षी मार्गस्य रक्षकौ नृचक्षसौ मनुष्यैः ख्याप्यमानौ । श्रुतिस्मृतिपुराणाभिज्ञाः पुरुषास्तौ प्रख्यापयंति । ताभ्यां श्वभ्यां दत्त्वास्मै प्रेताय स्वस्ति च क्षेममप्यनमीवं च रोगाभावमपि धेहि । संपादय ॥

उरूणसावसुतृपा उदुंबलौ यमस्य दूतौ चरतो जनाँ अनु ।
तावस्मभ्यं दृशये सूर्याय पुनर्दातामसुमद्येह भद्रं ॥१२॥
उरुऽनसौ । असुऽतृपौ । उदुंबलौ । यमस्य । दूतौ । चरतः । जनान् । अनु ।
तौ । अस्मभ्यं । दृशये । सूर्याय । पुनः । दातां । असुं । अद्य । इह । भद्रं ॥१२॥

यमस्य संबंधिनौ दूतौ श्वानौ जनाँ अनु प्राणिनो लक्षीकृत्य सर्वत्र चरतः । कीदृशौ । उरुणसौ दीर्घनासिकायुक्तौ असुतृपौ परकीयान्प्राणान् स्वीकृत्य तैस्तृप्यंतौ उदुंबलावुरुबलौ विस्तीर्णबलौ । तावुभौ दूतौ सूर्याय दृशये सूर्यस्य दर्शनार्थमद्य दिन इह कर्मणि भद्रमसुं समीचीनं प्राणं पुनरस्मभ्यं दातां । अदत्तां ॥

यमाय सोमं सुनुत यमाय जुहुता हविः । यमं ह यज्ञो गच्छत्यग्निदूतो अरंकृतः ॥१३॥
यमाय । सोमं । सुनुत । यमाय । जुहुत । हविः । यमं । ह । यज्ञः । गच्छति । अग्निऽदूतः ।
अरंऽकृतः ॥१३॥

हे ऋत्विजः यमाय यमदेवतार्थं सोमं सुनुत । लतात्मकं सोममभिषुणुत । तथा यमार्थं हविर्जुहुत । अग्निर्दूतो यस्मिन्यज्ञे सोऽयमग्निदूतः । अग्नेर्दूतत्वमन्यत्राम्नातं । अग्निर्देवानां दूत आसीत् । तै॰ सं॰ २. ५. ८. ५. । इति । अरंकृतो बहुभिर्द्रव्यैरलंकाररूपैर्युक्तः तादृशो यज्ञो यमं ह यममेव गच्छति ॥

यमाय घृतवद्धविर्जुहोत प्र च तिष्ठत । स नो देवेष्वा यमद्दीर्घमायुः प्र जीवसे ॥१४॥
यमाय । घृतऽवत् । हविः । जुहोत । प्र । च । तिष्ठत । सः । नः । देवेषु । आ । यमत् ।
दीर्घं । आयुः । प्र । जीवसे ॥१४॥

हे ऋत्विजः यूयं यमाय घृतवदाज्येन संयुक्तं हविः पुरोडाशादिकं जुहोत । जुहुत । प्र च तिष्ठत । यमं यूयमुपतिष्ठध्वं च । देवेषु मध्ये स यमो देवः प्र जीवसे प्रकृष्टजीवनार्थं नोऽस्माकं दीर्घमायुरा यमत् । प्रयच्छतु ॥

यमाय मधुमत्तमं राज्ञे हव्यं जुहोतन ।
इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः ॥१५॥
यमाय । मधुमत्ऽतमं । राज्ञे । हव्यं । जुहोतन ।
इदं । नमः । ऋषिऽभ्यः । पूर्वऽजेभ्यः । पूर्वेभ्यः । पथिकृत्ऽभ्यः ॥१५॥

हे ऋत्विजः यमाय राज्ञे मधुमत्तममतिशयेन मधुरं हव्यं पुरोडाशादिकं हविर्जुहोतन । जुहुत । पूर्वजेभ्यः सृष्ट्यादावुत्पन्नेभ्यः अत एव पूर्वेभ्योऽस्मत्तः पूर्वभाविभ्यः पथिकृद्भ्यः शोभनमार्गकारिभ्य ऋषिभ्य इदं प्रत्यक्षं यथा भवति तथा नमोऽस्तु ॥

त्रिकद्रुकेभिः पतति षळुर्वीरेकमिद्बृहत् ।
त्रिष्टुब्गायत्री छंदांसि सर्वा ता यम आहिता ॥१६॥
त्रिऽकद्रुकेभिः । पतति । षट् । उर्वीः । एकं । इत् । बृहत् ।
त्रिऽस्तुप् । गायत्री । छंदांसि । सर्वा । ता । यमे । आऽहिता ॥१६॥

त्रिकद्रुकेभिः । द्वितीयार्थे तृतीयैषा । त्रिकद्रुकान् । ज्योतिर्गौरायुरिति त्रयो यागविशेषास्त्रिकद्रुका उच्यंते । तान्प्रत्यंगभावाय संरक्षणार्थं च पतति । यमस्तान् प्राप्नोति । षट्संख्याका उर्वीर्भूमीः कृताकृतप्रत्यवेक्षणाय प्राप्नोति । ताश्चोर्व्यः शाखांतरमंत्रे समाम्नाताः । षण्मोर्वीरंहसस्पांतु द्यौश्च पृथिवी चापश्चौषधयश्चोर्क्सूनृता चेति । एकमिदेकमेव बृहद्महज्जगद्यमस्य प्रतिपालनीयः प्राप्नोति । किंच यानि त्रिष्टुब्गायत्र्यादीनि छंदांसि संति सर्वाणि तानि छंदांसि यम आहितानि । ऋत्विग्भिः स्तुतित्वेनावस्थितानि ॥ ॥१६॥

उदीरतामिति चतुर्दशर्चं पंचदशं सूक्तं । अत्रानुक्रम्यते । उदीरतां षळूना शंखः पित्र्यं जगत्येकादशी । यामायनाः परे पंचेति वचनाद्यमपुत्रः शंखाख्य ऋषिः । अग्निष्वात्ता इत्येषा जगती शिष्टास्त्रिष्टुभः । पितरो देवता ॥ गतः सूक्तविनियोगः ॥ अष्टकायामुदीरतामवर इत्याद्या अष्टावृचो होमार्थाः । सूत्रितं च । उदीरतामवर उत्परास इत्यष्टाभिर्हुत्वा । आ॰ गृ॰ २. ४. ६. । इति ॥ महापितृयज्ञे पितरः सोमवंत इत्यस्यानुवाक्यो-

दीरतामित्येषा। सूचितं च। पितरोऽग्निष्वात्ता यम उदीरतामवर उत्परासः। आ० २. १९.। इति ॥ आग्नि-मारुतेऽप्येषा धाय्या। सूचितं च। मातली कव्यैर्यमो अंगिरोभिरुदीरतामवर उत्परासः। आ० ५. २०.। इति ॥

उदी॑रता॒मव॑र॒ उत्परा॑स॒ उन्म॑ध्य॒माः पि॒तरः॑ सो॒म्यासः॑।
असुं॒ य ई॒युर॑वृ॒का ऋ॑त॒ज्ञास्ते नो॑ऽवंतु पि॒तरो॒ हवे॑षु ॥१॥
उत्। ई॒र॒तां॒। अव॑रे। उत्। परा॑सः। उत्। म॒ध्य॒माः। पि॒तरः॑। सो॒म्यासः॑।
असुं॑। ये। ई॒युः। अ॒वृ॒काः। ऋ॒त॒ऽज्ञाः। ते। नः॒। अ॒व॒न्तु॒। पि॒तरः॑। हवे॑षु ॥१॥

त्रिविधाः पितर उत्तमा मध्यमा अधमाश्चेति। यथाविधं श्रौतं कर्मानुष्ठाय पितृत्वं प्राप्ता उत्तमाः। स्मार्तकर्ममात्रपरा मध्यमाः। अत्रापि कैश्चित्संस्कारैर्विकला अधमाः। एतदेवाभिप्रेत्य ये अग्निदग्धा ये अनग्निदग्धा इत्यादिमंत्र आम्नातः। तेष्ववरे निकृष्टा उदीरतां। उत्तमं हविः प्राप्नुवंतु। परास उत्तमाः पितर उदीरतां। मध्यमाः पितरश्चोदीरतां। ते सर्वेऽप्यस्मद्विषये सोम्यासः सोम्या अनुग्रहपराः संतु। ये पितरोऽवृका वृकवदरण्यश्ववदस्मासु हिंसामकुर्वंत ऋतज्ञा अस्मदनुष्ठितं यज्ञं जानंतोऽसुमस्मत्प्राणमीयुः रक्षितुं प्राप्ताः ते पितरो हवेष्वस्मदीयेष्वाह्वानेषु नोऽस्मानवंतु। रक्षंतु ॥

महापितृयज्ञे पितरो बर्हिषद इत्यस्येदं पितृभ्य इति द्वितीयानुवाक्या। सूत्रं तु पूर्वमेवोदाहृतं। आ० २. १९.॥ इदं पितृभ्य इत्येषा धाय्या। सूचितं च। आहं पितॄन्त्सुविदत्राँ अवित्सीदं पितृभ्यो नमो अस्त्वद्य स्वादुष्किलायमिति चतस्रः। आ० ५. २०.। इति ॥

इ॒दं पि॒तृभ्यो॒ नमो॑ अस्त्व॒द्य ये पूर्वा॑सो॒ य उप॑रास ई॒युः।
ये पार्थि॑वे॒ रज॒स्या निष॑त्ता॒ ये वा॑ नू॒नं सु॑वृ॒जना॑सु वि॒क्षु ॥२॥
इ॒दं। पि॒तृऽभ्यः॑। नमः॑। अ॒स्तु॒। अ॒द्य। ये। पूर्वा॑सः। ये। उप॑रासः। ई॒युः।
ये। पार्थि॑वे। रज॑सि। आ। निऽस॑त्ताः। ये। वा॒। नू॒नं। सु॒ऽवृ॒जना॑सु। वि॒क्षु ॥२॥

पूर्वासो यजमानोत्पत्तेः पूर्वमुत्पन्ना ज्येष्ठभ्रातृपितामहादयो य ईयुः पितृलोकं प्राप्ताः। ये चान्य उपरासो यजमानजन्मन उपर्युत्पन्नाः कनिष्ठभ्रातृस्वपुत्रादय ईयुः पितृलोकं प्राप्ताः। येऽप्यन्ये पार्थिवे पृथिवीसंबंधिनि रजसि रजोगुणकार्येऽस्मिन्कर्मण्या निषत्ता हविः स्वीकर्तुमागत्योपविष्टाः। ये वा केचिदन्ये बंधुवर्गरूपाः पितरो विक्षु बंधुरूपासु प्रजास्वा निषत्ताः श्राद्धादिस्वीकारायागत्योपविष्टाः। कीदृशीषु विक्षु। सुवृजनासु। वृज्यते परित्यज्यते दारिद्र्यमनेनेति वृजनं धनं। शोभनं वृजनं यासां ताः सुवृजनाः। तादृशीषु। धनसमृद्ध्या श्राद्धादिकर्मपरास्वित्यर्थः। सर्वेभ्य उक्तेभ्यः पितृभ्योऽद्यास्मिन्कर्मणीदं नमोऽस्तु। अयमाहुतिप्रदानपूर्वको नमस्कारो भवतु ॥

आहं पि॒तॄन्त्सु॑वि॒दत्राँ॑ अवित्सि॒ नपा॑तं च वि॒क्रम॑णं च॒ विष्णोः॑।
ब॒र्हि॒षदो॒ ये स्व॒धया॑ सु॒तस्य॒ भजं॑त पि॒त्वस्त इ॒हाग॑मिष्ठाः ॥३॥
आ। अ॒हं। पि॒तॄन्। सु॒ऽवि॒दत्रा॑न्। अ॒वि॒त्सि॒। नपा॑तं। च॒। वि॒ऽक्रम॑णं। च॒। विष्णोः॑।
ब॒र्हि॒ऽसदः॑। ये। स्व॒धया॑। सु॒तस्य॑। भजं॑त। पि॒त्वः। ते। इ॒ह। आऽग॑मिष्ठाः ॥३॥

अहं यजमानः सुविदत्रान् मदीयां भक्तिं सुष्ठु जानतः पितॄनावित्सि। आभिमुख्येन लब्धवानस्मि। विष्णोर्व्यापिनो यज्ञस्य नपातं च विनाशाभावं च विक्रमणं च विशेषेण प्रवृत्तिं च लब्धवानस्मि। ये पितरो

बर्हिषदो बर्हिषि सीदंति त इहास्मिन्कर्मण्यागमिष्ठाः। अतिशयेनागताः। आदरपूर्वं समागत्य स्वधया पुरोडाशाद्यन्नेन सह सुतस्याभिषुतस्य सोमलक्षणस्य पित्वः पितोरन्नस्य भागं भजंत। सेवंते। उपयुंजते ॥

बर्हिषदः पितर ऊत्य१र्वागिमा वो हव्या चकृमा जुषध्वं।
त आ गतावसा शंतमेनाथा नः शं योररपो दधात ॥४॥
बर्हिऽसदः। पितरः। ऊती। अर्वाक्। इमा। वः। हव्या। चकृम। जुषध्वं।
ते। आ। गत। अवसा। शंऽतमेन। अथ। नः। शं। योः। अरपः। दधात ॥४॥

हे बर्हिषदः। यज्ञे सीदंतीति बर्हिषदः। अत्रापि ये वै यज्वानस्ते पितरो बर्हिषद इत्यत्र श्रुतत्वाद्यागं कृत्वा प्रेत्य पितृलोकं प्राप्ता बर्हिषदः। तादृशा हे पितरः अर्वागर्वाचीनानामस्माकमूती रक्षा भवद्भिः कर्तव्येति शेषः। वो युष्मदर्थमिमा हव्यैतानि हवींषि चकृम। अतस्तानि जुषध्वं। ते हविर्जुष्टवंतो यूयं शंतमेन सुखतमेनावसा रक्षणेन निमित्तभूतेना गत। आभिमुख्येनास्मान्प्राप्नुत। अथानंतरं नोऽस्मभ्यं शं सुखं योर्दुःखवियोगमरपः पापरहितं च दधात। दत्त ॥

महापितृयज्ञे पितरः सोमवंत इत्यस्य याज्योपहूताः पितर इत्येषा। सूत्रितं च। उपहूताः पितरः सोम्यासस्त्वं सोम प्र चिकितो मनीषा। आ० २.१९.। इति ॥

उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु।
त आ गमंतु त इह श्रुवंत्वधि ब्रुवंतु तेऽवंत्वस्मान् ॥५॥
उपऽहूताः। पितरः। सोम्यासः। बर्हिष्येषु। निऽधिषु। प्रियेषु।
ते। आ। गमंतु। ते। इह। श्रुवंतु। अधि। ब्रुवंतु। ते। अवंतु। अस्मान् ॥५॥

सोम्यासः सोम्या अस्मदनुग्रहपराः सोमसंपादिनो वा पितरो बर्हिष्येषु यागार्हेषु प्रियेषु तृप्तिकरेषु निधिषु निधिसदृशेषु हविःषु निमित्तभूतेषु सत्सूपहूता अस्माभिराहूतास्ते पितर आ गमंतु। आगच्छंतु। आगत्य चेहास्मिन्कर्मण्यस्माभिः प्रयुक्ताः स्तुतीः श्रुवंतु। शृण्वंतु। श्रुत्वा चाधि ब्रुवंतु। साधुरयं यजमान इत्यादरेण कथयंतु। ते तादृशाः पितरोऽस्मानवंतु। रक्षंतु ॥ ॥१७॥

आच्या जानु दक्षिणतो निषद्येमं यज्ञमभि गृणीत विश्वे।
मा हिंसिष्ट पितरः केन चिन्नो यद्व आगः पुरुषता कराम ॥६॥
आऽअच्य। जानु। दक्षिणतः। निऽसद्य। इमं। यज्ञं। अभि। गृणीत। विश्वे।
मा। हिंसिष्ट। पितरः। केन। चित्। नः। यत्। वः। आगः। पुरुषता। कराम ॥६॥

पितॄणामयं स्वाभाविको धर्मः अथैनं पितरः प्राचीनावीतिनः सव्यं जान्वाच्य। शत० २.४.२.२.। इति वचनात्। हे पितरः विश्वे सर्वे यूयं जान्वाच्य भूमौ निपात्य दक्षिणतो दक्षिणपार्श्वे निषद्योपविश्येममस्मदीयं यज्ञमभि गृणीत। अभिष्टुत। विशिष्टतृप्तियोगात्परया प्रीत्या सगुणोऽयं यज्ञ इति प्रशंसतेत्यर्थः। अपि च वो युष्माकं यत्किंचित्कर्मवैगुण्यजनितमागोऽपराधं पुरुषता मनुष्यत्वेन हेतुना कराम वयं कृतवंतः हे पितरः तेन केन चिदप्यपराधेन नोऽस्मान्मा हिंसिष्ट ॥

आसीनासो अरुणीनामुपस्थे रयिं धत्त दाशुषे मर्त्याय।
पुत्रेभ्यः पितरस्तस्य वस्वः प्र यच्छत त इहोर्जं दधात ॥७॥

आसीनासः । अरुणीनां । उपऽस्थे । रयिं । धत्त । दाशुषे । मर्त्याय ।
पुत्रेभ्यः । पितरः । तस्य । वस्वः । प्र । यच्छत । ते । इह । ऊर्जं । दधात ॥७॥

अरुणीनामारोचमानानां ज्वालानां वा देवतानां वोपस्थे समीपस्थाने वेद्याख्य आसीनास उपविष्टाः पितरः यूयं दाशुषे हविर्दत्तवते मर्त्याय मनुष्याय यजमानाय रयिं धनं धत्त । दत्त । हे पितरः यूयं तस्य यजमानस्य पुत्रेभ्यो वस्वो वसु धनं प्र यच्छत । ते तादृशा यूयमिहास्मिन्नस्मदीये कर्मण्यूर्जं धनं दधात । निधत्त ॥

ये नः पूर्वे पितरः सोम्यासोऽनूहिरे सोमपीथं वसिष्ठाः ।
तेभिर्यमः संरराणो हवींष्युशन्नुशद्भिः प्रतिकाममत्तु ॥८॥
ये । नः । पूर्वे । पितरः । सोम्यासः । अनुऽऊहिरे । सोमऽपीथं । वसिष्ठाः ।
तेभिः । यमः । संऽरराणः । हवींषि । उशन् । उशत्ऽभिः । प्रतिऽकामं । अत्तु ॥८॥

सोम्यासः सोमसंपादिनो वसिष्ठा वसुतमाः छतात्छादना धनवत्तमा वा नोऽस्माकं ये पूर्वे पितरः सोमपीथं सोमपानमनूहिरे आनुपूर्व्येण देवेभ्यश्च पितृभ्यश्च प्राप्नुवंतः । दत्तवंत इत्यर्थः । उशन् पितृभिः सह संभोगं कामयमानो यमः पितृपतिरुशद्भिर्यमेन सह संभोगं कामयमानैस्तेभिस्तैरस्मदीयैः पितृभिः सह रराणो रममाणो हवींष्यस्माभिर्दत्तानि प्रतिकामं कामं कामं प्रत्यत्तु । यानि यानि हवींषि कामयते तानि तानि भक्षयत्वित्यर्थः ॥

महापितृयज्ञेऽग्नेः कव्यवाहनस्य ये तातृषुरित्येषा प्रथमानुवाक्या । सूत्रितं च । ये तातृषुर्देवत्रा जेहमाना-स्त्वदग्ने काव्या त्वन्मनीषाः । आ० २. १९. । इति ॥

ये तातृषुर्देवत्रा जेहमाना होत्राविदः स्तोमतष्टासो अर्कैः ।
आग्ने याहि सुविदत्रेभिरर्वाङ् सत्यैः कव्यैः पितृभिर्घर्मसद्भिः ॥९॥
ये । ततृषुः । देवऽत्रा । जेहमानाः । होत्राऽविदः । स्तोमऽतष्टासः । अर्कैः ।
आ । अग्ने । याहि । सुऽविदत्रेभिः । अर्वाङ् । सत्यैः । कव्यैः । पितृऽभिः । घर्मसत्ऽभिः ॥९॥

देवत्रा देवाञ्जेहमानाः क्रमेण गच्छंतः । क्रमेण देवत्वं प्राप्ता इत्यर्थः । होत्राविदो यज्ञान्सम्यक्कर्तुं वेदितारोऽर्कैरर्चनीयैः स्तोत्रैः स्तोमतष्टासः स्तोमानां च सम्यक्कर्तारो ये पितरस्तातृषुः तृष्यंति हे अग्ने त्वं तैः पितृभिरर्वाङस्मदभिमुख आ याहि । आगच्छ । कीदृशैः । सुविदत्रेभिः सुविदत्रैः सत्यैरविसंवादिभिः कव्यैः । कव्यं नाम पितृदेवत्यं हविः । तत्संबंधिभिः । यद्वा । कव्यैः कविभिर्मेधाविभिः ॥ स्वार्थिको यत् ॥ घर्मसद्भिर्यज्ञसादिभिः ॥

ये सत्यासो हविरदो हविष्पा इंद्रेण देवैः सरथं दधानाः ।
आग्ने याहि सहस्रं देववंदैः परैः पूर्वैः पितृभिर्घर्मसद्भिः ॥१०॥
ये । सत्यासः । हविःऽअदः । हविःऽपाः । इंद्रेण । देवैः । सऽरथं । दधानाः ।
आ । अग्ने । याहि । सहस्रं । देवऽवंदैः । परैः । पूर्वैः । पितृऽभिः । घर्मसत्ऽभिः ॥१०॥

सत्यासः सत्या ये पितरो हविरदो भक्षणयोग्यस्य हविषोऽत्तारो भक्षयितारो हविष्पाः पानयोग्यस्य हविषः पातार इंद्रेण देवैः सरथं समानमेकं तुल्यं वा रथं दधानाः ॥ तदर्थे शानच् ॥ गमनाय सदा

धारयंति हे अग्ने तैः पितृभिः सह आ याहि । आगच्छ । कीदृशः । सहस्रं । तृतीयार्थे प्रथमा । सहस्रेण । बहुभिरित्यर्थः । देववंदैर्देवसंबंधिभिः स्तोत्रैर्युक्तः । परैः परकालीनैः पूर्वैः पूर्वकालीनैर्घर्मसद्भिर्यज्ञसादिभिर्महावीरसादिभिरादित्यसादिभिर्वा ॥ ॥१८॥

महापितृयज्ञे पितरोऽग्निष्वात्ता इत्यस्याग्निष्वात्ताः पितर इत्येषा प्रथमानुवाक्या । सूत्रितं च । अग्निष्वात्ताः पितर एह गच्छत ये चेह पितरो ये च नेह । आ॰ २. १९. । इति ॥

अग्निष्वात्ताः पितर एह गच्छत सदःसदः सदत सुप्रणीतयः ।
अत्ता हवींषि प्रयतानि बर्हिष्यथा रयिं सर्ववीरं दधातन ॥११॥
अग्निऽस्वात्ताः । पितरः । आ । इह । गच्छत । सदःऽसदः । सदत । सुऽप्रनीतयः ।
अत्त । हवींषि । प्रऽयतानि । बर्हिषि । अथ । रयिं । सर्वऽवीरं । दधातन ॥११॥

अग्निष्वात्ता अग्निना स्वादिता एतन्नामकाः पितरः यूयमिहास्मिन्पितृकर्मण्या गच्छत । आगत्य च हे सुप्रणीतयोऽभिपूजितप्रणयनाः यूयं सदः सदस्तत्तत्स्थानं सदत । सीदत । तत्र तत्र स्थाने यथेष्टमुपविशतेत्यर्थः । उपविश्य च बर्हिष्यासादितानि प्रयतानि सुचि हवींष्यत्त । भक्षयत । अथानंतरं सर्ववीरं सर्वैर्वीरैः पुत्रपौत्रैरुपेतं रयिं धनं दधातन । अस्मभ्यं दत्त ॥

महापितृयज्ञे वषट्कारक्रियायां त्वमग्न ईळित इत्येषा स्विष्टकृतो याज्या । सूत्रितं च । योऽग्निः कव्यवाहनस्त्वमग्न ईळितो जातवेद इति संयाज्ये । आ॰ २. १९. । इति ॥

त्वमग्न ईळितो जातवेदोऽवाड्ढव्यानि सुरभीणि कृत्वी ।
प्रादाः पितृभ्यः स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवींषि ॥१२॥
त्वं । अग्ने । ईळितः । जातऽवेदः । अवाट् । हव्यानि । सुरभीणि । कृत्वी ।
प्र । अदाः । पितृऽभ्यः । स्वधया । ते । अक्षन् । अद्धि । त्वं । देव । प्रऽयता । हवींषि ॥१२॥

हे जातवेदः । जातं सर्वं जगद्वेत्तीति जातवेदाः । तथाविध हे अग्ने ईळितोऽस्माभिः स्तुतस्त्वं हव्यान्यस्मदीयानि हवींषि सुरभीणि सुगंधीनि कृत्वी कृत्वावाट् । वहनं कृतवानसि । कृत्वा च पितृभ्यः प्रादाः । ते च पितरः स्वधया स्वधाकारेण दत्तं हविरक्षन् । अदंतु । हे देव त्वमपि प्रयता प्रयत्नसंपादितानि हवींष्यद्धि । भक्षय ॥

महापितृयज्ञे ये चेहेति द्वितीयानुवाक्या । सूत्रमुक्तं ॥

ये चेह पितरो ये च नेह यांश्च विद्म याँ उ च न प्रविद्म ।
त्वं वेत्थ यति ते जातवेदः स्वधाभिर्यज्ञं सुकृतं जुषस्व ॥१३॥
ये । च । इह । पितरः । ये । च । न । इह । यान् । च । विद्म । यान् । ऊं इति । च । न । प्रऽविद्म ।
त्वं । वेत्थ । यति । ते । जातऽवेदः । स्वधाभिः । यज्ञं । सुऽकृतं । जुषस्व ॥१३॥

ये च पितर इहास्मत्समीपे वर्तंते ये चेह न संति । यांश्च पितॄन्विद्म संनिकृष्टत्वाज्जानीमः याँ उ च नापि च न प्रविद्म विप्रकृष्टत्वाद्वयं न विजानीमः । यति ते यावंतस्ते भवंति तान्सर्वान्यथोक्तान् हे जातवेद उत्पन्नसर्ववस्तुविषयज्ञानाग्ने त्वं वेत्थ । जानासि । स्वधाभिर्हविर्लक्षणैरन्नैः सुकृतं साधु कृतं यज्ञं जुषस्व । प्रीत्या गृहाण ॥

पूर्वोक्त एव यागे ये अग्निदग्धा इत्येषा याज्या । सूत्रितं च । ये अग्निदग्धा ये अनग्निदग्धा इमं यम प्रस्तरमा हि सीदेति द्वे । आ॰ २.१९. । इति ॥

ये अ॒ग्नि॒द॒ग्धा ये अन॑ग्निदग्धा॒ मध्ये॑ दि॒वः स्व॒धया॑ मा॒दय॑न्ते ।
तेभि॑ः स्व॒राळसु॑नीतिमे॒तां य॑थाव॒शं त॒न्वं॑ कल्पयस्व ॥१४॥
ये । अ॒ग्नि॒ऽद॒ग्धाः । ये । अन॑ग्निऽदग्धाः । मध्ये॑ । दि॒वः । स्व॒धया॑ । मा॒दय॑न्ते ।
तेभि॑ः । स्व॒ऽराट् । असु॑ऽनीतिं । ए॒तां । य॒था॒ऽव॒शं । त॒न्वं॑ । क॒ल्प॒य॒स्व॒ ॥१४॥

ये पितरोऽग्निदग्धा अग्निना भस्मीकृताः । श्मशानं प्राप्ता इत्यर्थः । ये च पितरोऽनग्निदग्धाः श्मशानकर्म न प्राप्ता मध्ये दिवो द्युलोकस्य मध्ये स्वधया हविर्लक्षणेनान्नेन मादयंते तृप्यंति हे अग्ने स्वराट् स्वकर्मोपभोगेन दीप्यमानस्तैस्तैः पितृभिः सहितः सन्नसुनीतिं प्राणानां विषयेषु नेतारमस्मत्पित्र्यंतरात्मानमेतां तन्वमेतद्देवताशरीरं यथावशं यथाकामं कल्पयस्व । समर्थयस्व । ग्रासयेत्यर्थः ॥ ॥१९॥

मैनमिति चतुर्दशर्चं षोडशं सूक्तं । यमपुत्रस्य दमनस्यार्षं । आदितो दश त्रिष्टुभः ततस्ततस्रोऽनुष्टुभः । अग्निर्देवता । तथा चानुक्रांतं । मैनं दमन आग्नेयं चतुरनुष्टुबंतमिति ॥ दीक्षितमरण आद्याः षडृचः शंसनीयाः । सूत्रितं च । मैनमग्ने वि दहो माभि शोच इति षट् पूषा त्वेतश्च्यावयतु प्र विद्वान् । आ॰ ६.१०. । इति ॥ दह्यमानस्य प्रेतस्योपस्थानेऽप्येताः शंसनीयाः ॥

मैन॑मग्ने॒ वि द॑हो॒ माभि शो॑चो॒ मास्य॒ त्वचं॑ चिक्षिपो॒ मा शरी॑रं ।
य॒दा शृ॒तं कृ॒णवो॑ जातवेदोऽथेमेनं॒ प्र हि॑णुतात्पि॒तृभ्यः॑ ॥१॥
मा । ए॒नं॒ । अ॒ग्ने॒ । वि । द॒हः॒ । मा । अ॒भि । शो॒चः॒ । मा । अ॒स्य॒ । त्वचं॑ । चि॒क्षि॒पः॒ ।
मा । शरी॑रं ।
य॒दा । शृ॒तं । कृ॒णवः॑ । जा॒त॒ऽवे॒दः॒ । अथ॑ । ई॒ । ए॒नं॒ । प्र । हि॒णु॒ता॒त् । पि॒तृऽभ्यः॑ ॥१॥

हे अग्ने एनं प्रेतं मा वि दहः । विशेषेण दग्धं भस्मीभूतं मा कुरु । माभि शोचः । अभितः शोकेन संतापेन युक्तं मा कुरु । अस्य त्वचं मा चिक्षिपः । इतस्ततो विक्षिप्तां मा कुरु । शरीरमपि विक्षिप्तं मा कुरु । हे जातवेदोऽग्ने यदा त्वं शृतं पक्वं सुदग्धं कृणवः करिष्यसि अथ तदानीमीमेनं प्रेतं पितृभ्यः प्र हिणुतात् । पितृसमीपे प्रेरय ॥

शृ॒तं य॒दा कर॑सि जातवेदोऽथेमेनं॒ परि॑ दत्तात्पि॒तृभ्यः॑ ।
य॒दा गच्छा॒त्यसु॑नीतिमे॒तामथा॑ दे॒वानां॑ वश॒नीर्भ॑वाति ॥२॥
शृ॒तं । य॒दा । कर॑सि । जा॒त॒ऽवे॒दः॒ । अथ॑ । ई॒ । ए॒नं॒ । परि॑ । द॒त्ता॒त् । पि॒तृऽभ्यः॑ ।
य॒दा । गच्छा॑ति । असु॑ऽनीतिं । ए॒तां । अथ॑ । दे॒वानां॑ । व॒श॒ऽनीः । भ॒वा॒ति॒ ॥२॥

हे जातवेदः यदा प्रेतशरीरं शृतं पक्वं करसि करिष्यसि अथैं तदानीमेवैनं प्रेतं पितृभ्यः परि दत्तात् । प्रयच्छ । यदायं प्रेत एतामग्निना कृतामसुनीतिं प्राणस्य नयनं प्राणप्रेरणं गच्छाति प्राप्नोति अथ तदानीमेव देवानां वशनीर्देवानां वशं प्रापितो भवति ॥

सूर्यं॒ चक्षु॑र्गच्छतु॒ वात॑मा॒त्मा द्यां च॑ गच्छ पृथि॒वीं च॒ धर्म॑णा ।
अ॒पो वा॑ गच्छ॒ यदि॒ तत्र॑ ते हि॒तमोष॑धीषु॒ प्रति॑ तिष्ठा॒ शरी॑रैः ॥३॥

सूर्यं । चक्षुः । गच्छतु । वातं । आत्मा । द्यां । च । गच्छ । पृथिवीं । च । धर्मणा ।
अपः । वा । गच्छ । यदि । तत्र । ते । हितं । ओषधीषु । प्रति । तिष्ठ । शरीरैः ॥३॥

हे प्रेत ते त्वदीयं चक्षुरिंद्रियं सूर्यं गच्छतु । प्राप्नोतु । आत्मा प्राणो वातं बाह्यं वायुं गच्छतु । अपि च त्वमपि धर्मणा सुकृतेन तत्फलं भोक्तुं द्यां च । अत्र चशब्दो विकल्पार्थे । द्युलोकं वा पृथिवीं च पृथिवीं वा गच्छ । प्राप्नुहि । अपो वांतरिक्षलोकं गच्छ । प्राप्नुहि । तत्रांतरिक्षे हितं स्थापितं ते तव कर्मफलमोषधीषु शरीरैः शरीरावयवैः प्रति तिष्ठ ॥

अजो भागस्तपसा तं तपस्व तं ते शोचिस्तपतु तं ते अर्चिः ।
यास्ते शिवास्तन्वो जातवेदस्ताभिर्वहैनं सुकृतामु लोकं ॥४॥

अजः । भागः । तपसा । तं । तपस्व । तं । ते । शोचिः । तपतु । तं । ते । अर्चिः ।
याः । ते । शिवाः । तन्वः । जातऽवेदः । ताभिः । वह । एनं । सुऽकृतां । ऊं इति ।
लोकं ॥४॥

अजो जननरहितः शरीरेंद्रियादिभागव्यतिरिक्तोऽंतरपुरुषलक्षणो यो भागोऽस्ति हे अग्ने ते त्वदीयेन तपसा तापनेन तं तादृशं भागं तपस्व । तप्तं कुरु । तथा ते तव शोचिः शोकहेतुर्ज्वालाविशेषस्तं भागं तपतु । संस्करोतु । अपि च ते तवार्चिर्भासको ज्वालाविशेषस्तं भागं तपतु । संस्करोतु । तपःशोचिरर्चिःशब्दानां संतापतारतम्येन भेदः । हे जातवेदः ते तव यास्तन्वो मूर्तयः शिवाः सुखहेतवो न तु तापप्रदाः ताभिरिनं तनूभिः प्रेतं सुकृतां शोभनकर्मकारिणां लोकं स्थानं वह । प्रापय । उशब्दः पूरणः ॥

अव सृज पुनरग्ने पितृभ्यो यस्त आहुतश्चरति स्वधाभिः ।
आयुर्वसान उप वेतु शेषः सं गच्छतां तन्वा जातवेदः ॥५॥

अव । सृज । पुनः । अग्ने । पितृऽभ्यः । यः । ते । आऽहुतः । चरति । स्वधाभिः ।
आयुः । वसानः । उप । वेतु । शेषः । सं । गच्छतां । तन्वा । जातऽवेदः ॥५॥

हे अग्ने यः प्रेतः पुमानाहुतस्त्वयि मंत्रेण समर्पितः सन् स्वधाभिः स्वधाकारसमर्पितैरुदकादिभिः सह चरति तं प्रेतं पितृभ्यः पितृप्राप्त्यर्थं पुनरव सृज । भूयः प्रेरय । अयं प्रेत आयुर्जीवनं वसान आच्छादयन् । आयुषा युक्त इत्यर्थः । शेषः शिष्यमाणमस्थिलक्षणं यजनीयं शरीरमुप वेतु । उपगच्छतु । हे जातवेदः तव प्रसादात्तन्वा शरीरेण सं गच्छतां । संगतो भवतु ॥ ॥२०॥

यत्ते कृष्णः शकुन आतुतोद पिपीलः सर्प उत वा श्वापदः ।
अग्निष्टद्विश्वादगदं कृणोतु सोमश्च यो ब्राह्मणाँ आविवेश ॥६॥

यत् । ते । कृष्णः । शकुनः । आऽतुतोद । पिपीलः । सर्पः । उत । वा । श्वापदः ।
अग्निः । तत् । विश्वऽअत् । अगदं । कृणोतु । सोमः । च । यः । ब्राह्मणान् । आऽविवेश ॥६॥

हे मृतशरीर ते तव संबंधि यदंगं कृष्णः शकुनः काकाख्य आतुतोद । आङीषदर्थे । ईषत्तुन्नवान् । तथा पिपीलः पिपीलिका वा सर्पो वोत वापि वा श्वापदश्च शृगालादिः । एतेषामन्यतमो यदि तुन्नवानित्यर्थः । विश्वात् सर्वस्मात्तस्मात्तादृशमंगमगदं कृणोतु । दोषरहितं करोतु । संस्करोत्वित्यर्थः । तथा सोमश्च देवतारूप ओषधिरूपो वा संस्करोतु । यः सोमो ब्राह्मणानृत्विगादीनाविवेश प्रविष्टवान् ॥

अनुस्तरण्या वपया प्रेतस्य मुखमग्नेर्वर्मेत्यनया प्रोर्णुयात्। सूचितं च। अनुस्तरण्या वपामुत्खिद्य शिरोमुखं प्रच्छादयेदग्नेर्वर्म परि गोभिर्व्ययस्वेति। आ॰ गृ॰ ४. ३. १९.। इति ॥

अग्नेर्वर्म परि गोभिर्व्ययस्व सं प्रोर्णुष्व पीवसा मेदसा च।
नेत्त्वा धृष्णुर्हरसा जर्हृषाणो दधृग्विधक्ष्यन्पर्यङ्खयाते ॥७॥

अग्नेः। वर्म। परि। गोभिः। व्ययस्व। सं। प्र। ऊर्णुष्व। पीवसा। मेदसा। च।
न। इत्। त्वा। धृष्णुः। हरसा। जर्हृषाणः। दधृक्। विऽधक्ष्यन्। परिऽअंखयाते ॥७॥

हे प्रेत अग्नेः स्वभूतं वर्म ज्वालालक्षणं कवचं गोभिरनुस्तरणीगोचर्मणा परि व्ययस्व। परितः संवृणु। किंच पीवसा स्थूलेन मेदसा मांसेन सम्यक् प्रोर्णुष्व। आच्छादय। एवं कृते सति हरसा तेजसा धृष्णुर्धर्षणशीलो जर्हृषाणोऽत्यर्थं हृष्यन् दधृग्धृष्टः प्रगल्भः ॥ ऋत्विगित्यादिना दधृक्शब्दो निपातितः ॥ विधक्ष्यन् विविधं भस्मीकरिष्यन् एवंभूतोऽग्निस्त्वा त्वां नेत्पर्यङ्खयाते। नैव सर्वतो विस्तारयति ॥ अखिर्गत्यर्थाल्लेट्यडागमः ॥

इममग्ने चमसमित्यनया प्रणीताप्रणयनमनुमंत्रयते। सूचितं च। इममग्ने चमसं मा वि जिह्वर इति प्रणीताप्रणयनमनुमंत्रयते। आ॰ गृ॰ ४. ३. २४.। इति ॥

इममग्ने चमसं मा वि जिह्वरः प्रियो देवानामुत सोम्यानां।
एष यश्चमसो देवपानस्तस्मिन्देवा अमृता मादयंते ॥८॥

इमं। अग्ने। चमसं। मा। वि। जिह्वरः। प्रियः। देवानां। उत। सोम्यानां।
एषः। यः। चमसः। देवऽपानः। तस्मिन्। देवाः। अमृताः। मादयंते ॥८॥

हे अग्ने इमं चमसं प्रणीताप्रणयनं मा वि जिह्वरः। मा विचालीः। यश्चमसो देवानामिंद्रादीनां प्रिय उतापि च सोम्यानां सोमार्हाणां पितॄणां प्रियः। किंच य एष चमसो देवपानः। देवाः पिबंत्यस्मिन्निति। देवपानस्थानीयो भवति तस्मिंश्चमसेऽमृता मरणवर्जिता देवाः पितरश्च मादयंते। हविषेश हृष्टा भवंति ॥

क्रव्यादमग्निं प्र हिणोमि दूरं यमराज्ञो गच्छतु रिप्रवाहः।
इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन् ॥९॥

क्रव्यऽअदं। अग्निं। प्र। हिणोमि। दूरं। यमऽराज्ञः। गच्छतु। रिप्रऽवाहः।
इह। एव। अयं। इतरः। जातऽवेदाः। देवेभ्यः। हव्यं। वहतु। प्रऽजानन् ॥९॥

आहिताग्निमरण एतदादिके द्वे ऋचावौपासनोद्वासने विनियुक्ते। तत्र प्रथमायाः पूर्वार्धेन दक्षिणस्यां दिशि चतुष्पथादावौपासनाग्निं निरस्यति। उत्तरेण शांतिकर्मार्थमादत्ते। आ॰ गृ॰ ४. ६. ॥ क्रव्यादं। क्रव्यमामिषं। तस्यात्तारं तीव्रमग्निं दूरं विप्रकृष्टदेशे प्र हिणोमि। प्रगमयामि ॥ हि गतौ स्वादिः ॥ रिप्रवाहः। रिप्रं पापं। तस्य वोढा सोऽग्निर्यमराज्ञो यमो राजा येषां तान्यमराजकानन्यप्रदेशाग्निच्छतु। प्राप्नोतु। अथ शांतिकर्मार्थमुपासन इतरः क्रव्यादादन्यो जातवेदा जातानां वेदिता जातधनो वा प्रजानन् सर्वैर्विज्ञायमानोऽग्निरिहैव देशे देवेभ्यो देवार्थं हव्यं हवनयोग्यं हविर्वहतु। प्रापयतु ॥

यो अग्निः क्रव्यात्प्रविवेश वो गृहमिमं पश्यन्नितरं जातवेदसं।
तं हरामि पितृयज्ञाय देवं स घर्ममिन्वात्परमे सधस्थे ॥१०॥

यः। अग्निः। क्रव्यऽअत्। प्रऽविवेश। वः। गृहं। इमं। पश्यन्। इतरं। जातऽवेदसं।
तं। हरामि। पितृऽयज्ञाय। देवं। सः। घर्मं। इन्वात्। परमे। सधऽस्थे ॥१०॥

यः क्रव्यादोऽग्निर्देवो युष्माकं गृहिणां गृहं प्रविवेश प्रविष्टवान् तं क्रव्यादं देवं हरामि। गृहाद्बहिर्निष्क्रामयामीत्यर्थः। किमर्थं। पितृयज्ञाय तदर्थं। किं कुर्वन्। इममितरं तस्मादन्यं हव्यवाहं जातवेदसं पश्यन् पर्यालोचयन्। तथा सति क्रव्यादात्परोऽग्निः परम उत्कृष्टे सधस्थे सहस्थाने घर्मं यज्ञमिन्वात्। प्राप्नोतु। पितृभिर्घर्मपैः सहेति शेषः॥ ॥२१॥

महापितृयज्ञे वषट्कारक्रियायां यो अग्निः कव्यवाहन इत्येषा स्विष्टकृतो याज्या। सूचितं च। यो अग्निः कव्यवाहनस्त्वमग्न ईळितो जातवेद इति संयाज्ये। आ॰ २. १९.। इति॥

यो अग्निः क्रव्यवाहनः पितॄन्यक्षदृतावृधः।
प्रेदु हव्यानि वोचति देवेभ्यश्च पितृभ्य आ ॥११॥

यः। अग्निः। क्रव्यऽवाहनः। पितॄन्। यक्षत्। ऋतऽवृधः।
प्र। इत्। ऊं इति। हव्यानि। वोचति। देवेभ्यः। च। पितृऽभ्यः। आ ॥११॥

कव्यवाहनः कव्यस्य हविषो वोढा योऽग्निः पितॄनृतावृध ऋतस्य यज्ञस्योदकस्य वा वर्धयितॄन् सत्येन वृद्धान्वा देवान्। एतत्पितृविशेषणं वास्तु। तान्यक्षत् यजति॥ यजेर्लेटि सिब्बहुलमगमः॥ सोऽग्निर्हव्यानि हवींषि प्र वोचतु। पितृयज्ञे प्रब्रवीतु। युष्मदर्थं मयानीतानीति। इदु पूरणौ। केभ्यः। देवेभ्यश्च पितृभ्यश्च। आकारः समुच्चये॥

महापितृयज्ञ उशंतस्त्वेत्येषा सामिधेनी। सूत्र्यते हि। उशंतस्त्वा नि धीमहीत्येतां चिरनवानं ताः सामिधेन्यः। आ॰ २. १९.। इति॥

उशंतस्त्वा नि धीमह्युशंतः समिधीमहि।
उशन्नुशत आ वह पितॄन्हविषे अत्तवे ॥१२॥

उशंतः। त्वा। नि। धीमहि। उशंतः। सं। इधीमहि।
उशन्। उशतः। आ। वह। पितॄन्। हविषे। अत्तवे ॥१२॥

हे अग्ने उशंतः कामयमाना वयं त्वा त्वां नि धीमहि। कर्मार्थं स्थापितवंतः। उशंतो वयं समिधीमहि। संदीपयामः। त्वमप्युशन् कामयमानो हविरादिकमुशत आगंतुकामान्पितॄनस्मिन्यज्ञ आ वह। हविषेऽस्माभिः दत्तं हविरत्तवेऽत्तुं॥ अदेस्तुमर्थे तवेन्प्रत्ययः। क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानसंज्ञा॥

यं त्वमग्ने समदहस्तमु निर्वापया पुनः। कियांब्वत्र रोहतु पाकदूर्वा व्यल्कशा ॥१३॥

यं। त्वं। अग्ने। सम्ऽअदहः। तं। ऊं इति। निः। वापय। पुनरिति। कियांबु। अत्र।
रोहतु। पाकऽदूर्वा। विऽअल्कशा ॥१३॥

हे अग्ने त्वं पितृदहनकाले यं देशं समदहः पुरा सम्यग्दग्धवानसि॥ तिङि चोदात्तवतीति समो निघातः॥ तमु तमेव पुनर्निर्वापय। अथास्मिन्देशे कियांबु कियत्प्रमाणमुदकं यस्मिन् तत्पुष्करिण्यादिकं रोहतु। उत्पद्यतां। किंच व्यल्कशा विविधशाखा पाकदूर्वा परिपक्वदूर्वा चोत्पद्यतां॥

अस्थिसंचयने चीरोदकेन शमीशाखया त्रिः प्रसव्यं श्मशानायतनं प्रोक्षति शीतिके शीतिकावतीत्यनया।

सूचितं च । क्षीरोदकेन शमीशाखया त्रिः प्रसव्यं परिव्रजन्प्रोक्षति शीतिके शीतिकावतीति । आ॰ गृ॰ ४. ५. ३. । इति ॥

शीतिके शीतिकावति ह्लादिके ह्लादिकावति ।
मंडूक्या३ सु सं गम इमं स्व१ग्निं हर्षय ॥१४॥
शीतिके । शीतिकाऽवति । ह्लादिके । ह्लादिकाऽवति ।
मंडूक्या । सु । सं । गमः । इमं । सु । अग्निं । हर्षय ॥१४॥

हे शीतिके शैत्ययुक्ते हे शीतिकावति । शीतिकाः शैत्ययुक्ता ओषधयः । ताभिस्तद्वति हे ह्लादिक आह्लादयित्रि हे ह्लादिकावत्याह्लादकफलयुक्तैर्वृक्षैस्तद्वति हे पृथिवि मंडूक्या मंडूकस्त्रिया वृष्टिप्रियया सु सुष्ठु सं गमः । संगच्छस्व ॥ गमेर्लुङि व्यत्ययेन परस्मैपदं ॥ तत इममग्निं सु सुष्ठु हर्षय ॥ ॥२२॥ ॥१॥

द्वितीयेऽनुवाके त्रयोदश सूक्तानि । तत्र त्वष्टा दुहित्र इत्येतच्चतुर्दशर्चं प्रथमं सूक्तं । यमपुत्रो देवश्रवा नामर्षिः । आदितो द्वादश त्रिष्टुभः । त्रयोदशीचतुर्दश्यावनुष्टुभौ । यद्वा । त्रयोदशी पुरस्ताद्बृहती । आदितो द्वयोः सरण्यूर्देवता । पूषा त्वेत इत्याद्याश्चतस्रः पूषदेवत्याः । सरस्वतीं देवयंत इत्याद्यास्तिस्रः सरस्वतीदेवताकाः । आपो अस्मानित्याद्याः पंचर्चोऽब्देवताकाः । तत्र द्रप्सश्चस्कंदेत्याद्यास्तिस्रः सोमदेवत्या वा । अथ चानुक्रांतं । त्वष्टा देवश्रवा द्वे सरण्यूदेवते पौष्ण्यश्चतस्रः सारस्वत्यस्तिस्रः पंचाप्यो द्रप्सस्तिस्रः सौम्यो वांत्ये अनुष्टुभावुपांत्या पुरस्ताद्बृहती वेति ॥ गतः सूक्तविनियोगः ॥ अत्रेतिहासमाचक्षते । त्वष्टृनामकस्य देवस्य सरण्यूस्त्रिशिराश्चेति स्त्रीपुंसात्मकमपत्यद्वयमभूत् । ततस्त्वष्टा सरण्यूनामिकां पुत्रीं विवस्वते प्रायच्छत् । ततस्तस्यां विवस्वतः सकाशाद्यमयम्यौ विजज्ञाते । ततः कदाचिदात्मसदृशां देवजनितायाः स्त्रियः समीपे तदपत्यद्वयं निधाय स्वयमाश्वं रूपं कृत्वोत्तरान्कुरून्प्रतिजगाम । अथ विवस्वानेतां स्त्रियं सरण्यूमिति मत्वा तामरंसीत् । तस्यां मनुर्नाम राजर्षिरजायत । ततो विवस्वानेषा सरण्यूर्न भवतीति विज्ञाय स्वयमप्यश्वो भूत्वा तामश्वरूपिणीं प्रायासीत् । ततः संक्रीडमानयोस्तयोः स्वभूतं रेतः पृथिव्यां पपात । अथ सा गर्भकामनया तत्पतितं रेत आजघ्रौ । ततस्तस्याः सकाशान्नासत्यो दस्रश्चेत्युभावश्विनावजायेतामिति ॥

त्वष्टा दुहित्रे वहतुं कृणोतीतीदं विश्वं भुवनं समेति ।
यमस्य माता पर्युह्यमाना महो जाया विवस्वतो ननाश ॥१॥
त्वष्टा । दुहित्रे । वहतुं । कृणोति । इति । इदं । विश्वं । भुवनं । सं । एति ।
यमस्य । माता । परिऽउह्यमाना । महः । जाया । विवस्वतः । ननाश ॥१॥

त्वष्टेतन्नामको देवो दुहित्रे । षष्ठ्यर्थे चतुर्थी । दुहितुः सरण्यूनामिकाया वहतुं वहनं विवाहं ॥ एधिवह्योश्चतुः । उ॰ १.७९. । इति वहेश्चतुप्रत्ययः ॥ तं कृणोति । करोति । इत्येतेन हेतुनेदं विश्वं सर्वं भुवनं भूतजातं समेति । तं विवाहं समागमत् । पर्युह्यमाना विवस्वतोढ्व्या यमस्य यम्याश्च माता महो महतो विवस्वतो जाया भार्या सरण्यूर्ननाश । उत्तरान्कुरून्प्रति नष्टा । अगच्छदित्यर्थः ॥

अपागूहन्नमृतां मर्त्येभ्यः कृत्वी सवर्णामददुर्विवस्वते ।
उताश्विनावभरद्यत्तदासीदजहादु द्वा मिथुना सरण्यूः ॥२॥
अप । अगूहन् । अमृतां । मर्त्येभ्यः । कृत्वी । सऽवर्णां । अददुः । विवस्वते ।
उत । अश्विनौ । अभरत् । यत् । तत् । आसीत् । अजहात् । ऊं इति । द्वा । मिथुना । सरण्यूः ॥२॥

अमृतां मरणधर्मरहितामेतां सरण्यूं मर्त्येभ्यो मनुष्येभ्यस्तदुत्पत्त्यर्थमपागूहन्। अपगूहितवंतः। संवृतवंतः। देवा उपनीतवंत इत्यर्थः। किंच सवर्णां सरण्यूसदृशीमन्यां स्त्रियं कृत्वी कृत्वा तस्मै विवस्वते देवा अददुः। प्रायच्छन्। उतापि च साश्वरूपिणी सरण्यूस्तदाश्विनावभरत्। स्वोदरे गर्भभूतौ धारितवती। यद्यदा तज्जायापतिभ्यामश्वरूपात्मना संभोगकाले रेतः पतितमासीत् तदाश्विनौ जनयामासेत्यर्थः। तथा सरण्यूः सरण्यवत्येतन्नामिका द्वा मिथुना द्वौ मिथुनौ यमयम्यावजहात्। त्यक्तवती। जनितवतीत्यर्थः। यद्वा। सरण्यूरेतन्नामिका मध्यमस्थाना देवता मध्यममपिं माध्यमिकां वाचं चोत्पादितवती॥

दीक्षितमरणे पूषा त्वेत इत्याद्यास्तस्रः शंसनीयाः। सूचितं च। पूषा त्वेतश्च्यावयतु प्र विद्वानिति चतस्रः। आ० ६.१०.। इति॥

पूषा त्वेतश्च्यावयतु प्र विद्वाननष्टपशुर्भुवनस्य गोपाः।
स त्वैतेभ्यः परि ददत्पितृभ्योऽग्निर्देवेभ्यः सुविदत्रियेभ्यः॥३॥
पूषा। त्वा। इतः। च्यवयतु। प्र। विद्वान्। अनष्टऽपशुः। भुवनस्य। गोपाः।
सः। त्वा। एतेभ्यः। परि। ददत्। पितृऽभ्यः। अग्निः। देवेभ्यः। सुऽविदत्रियेभ्यः॥३॥

पूषा पोषयितैतन्नामको देवस्त्वा त्वामितोऽस्माद्देशाल्लोकात्प्र च्यावयतु। प्रकर्षेणोत्तमलोकं गमयतु। कीदृशः। विद्वानस्मत्कृततां विजानानः अनष्टपशुरविनश्वरपशुयुक्तः। यस्मिन्सर्वे पशवस्तिष्ठंति न तु नश्यंतीत्यर्थः। भुवनस्य भूतजातस्य गोपा गोपायिता। किंच प्रक्रमय्य स पूषैतेभ्यः पितृभ्यस्त्वा त्वां परि ददत्। परिप्रयच्छतु। तथाग्निश्च सुविदत्रियेभ्यः। सुविदत्रं ज्ञानं धनं वा। तदर्हाः सुविदत्रियाः॥ छांदसो घप्रत्ययः॥ शोभनज्ञानेभ्यः सुधनेभ्यो वा देवेभ्यस्त्वां प्रयच्छतु। तेषां लोके स्थापयत्वित्यर्थः॥

आयुर्विश्वायुः परि पासति त्वा पूषा त्वा पातु प्रपथे पुरस्तात्।
यत्रासते सुकृतो यत्र ते ययुस्तत्र त्वा देवः सविता दधातु॥४॥
आयुः। विश्वऽआयुः। परि। पासति। त्वा। पूषा। त्वा। पातु। प्रऽपथे। पुरस्तात्।
यत्र। आसते। सुऽकृतः। यत्र। ते। ययुः। तत्र। त्वा। देवः। सविता। दधातु॥४॥

विश्वायुः सर्वान्नः सर्वत्र गमनशीलो वायुः॥ वकारलोपश्छांदसः॥ वायुः। यद्वा॥ छंदसीण इत्युणप्रत्यये वृद्धौ च कृतायां रूपं॥ गंता वायुः। त्वा त्वां परि पासति। परिपातु। पूषानुज्ञया परितो रक्षतु॥ पा रक्षणे। लेटि सिप्यडागमः॥ प्रपथे प्रकृष्टे मार्गे स्वर्गे पुरस्तात्सर्वेषां प्रथममेव वर्तमानः पूषा स्वयमेव त्वा त्वां प्रमितं यजमानं पातु। रक्षतु। सुकृतः पुण्यकर्माणो यत्र यस्मिन्देश आसते तिष्ठंति यत्र वा ते सुकृतो ययुः प्राप्ताः तत्र तस्मिन्स्थाने देवो दीप्यमानः सविता सर्वस्य स्वस्वकर्मणि प्रेरक एतन्नामको देवस्त्वा त्वां दधातु। निदधातु॥

एकादशिनस्य पौष्णस्य पशोर्हविषः पूषेमा इत्यनुवाक्या। पूषेमा आशा अनु वेद सर्वाः शुक्रं ते अन्यद्यजतं ते अन्यत्। आ० ३.७.। इति हि सूचितं॥

पूषेमा आशा अनु वेद सर्वाः सो अस्माँ अभयतमेन नेषत्।
स्वस्तिदा आघृणिः सर्ववीरोऽप्रयुच्छन्पुर एतु प्रजानन्॥५॥
पूषा। इमाः। आशाः। अनु। वेद। सर्वाः। सः। अस्मान्। अभयऽतमेन। नेषत्।
स्वस्तिऽदाः। आघृणिः। सर्वऽवीरः। अप्रऽयुच्छन्। पुरः। एतु। प्रऽजानन्॥५॥

पूषा देव इमा सर्वा आशाः प्राच्याद्या दिशोऽनु वेद । आनुपूर्व्येण जानाति । इमाः सुखेन गंतव्या असुखेनेति वैवमनुक्रमेण जानातीत्यर्थः । एवं सत्यस्मान् । प्रमिते यजमानो ब्रवीति पुत्रमुखेन याजकमुखेन वा । अस्मानभयतमेनात्यंतं भयरहितेन मार्गेण नेषत् । नयतु । कथं । स्वस्तिदाः कल्याणस्य दाताघृणिरागतदीप्तियुक्तः सर्ववीरः सर्वैर्वीरैः कर्मणि समर्थैर्ऋत्विग्भिरुपेतोऽप्रयुच्छन्नप्रमाद्यन् प्रजानन्नस्माकं फलाफले विजानानः सन् पुर एतु । अस्माकं पुरस्ताद्गच्छतु । यथास्माकं भयं न भवति तथा गच्छत्वित्यर्थः ॥ ॥२३॥

एकादशिनस्य पौष्णस्य पशोः पुरोडाशस्य प्रपथे पथामिति याज्या । सूचितं च । प्रपथे पथामजनिष्ट पूषा पथस्पथः परिपतिं वचस्या । आ॰ ३.७. । इति ॥

प्रपथे पथामजनिष्ट पूषा प्रपथे दिवः प्रपथे पृथिव्याः ।
उभे अभि प्रियतमे सधस्थे आ च परा च चरति प्रजानन् ॥६॥
प्रऽपथे । पथां । अजनिष्ट । पूषा । प्रऽपथे । दिवः । प्रऽपथे । पृथिव्याः ।
उभे इति । अभि । प्रियतमे इति प्रियऽतमे । सधस्थे इति सधऽस्थे । आ । च ।
परा । च । चरति । प्रऽजानन् ॥६॥

पथामंतरिक्षगमनहेतुभूतानां मार्गाणां मध्ये प्रपथे यः प्रकृष्टः पंथास्ति तत्र पूषाजनिष्ट । प्रादुरभूत् । पुण्यकर्मणां सुगतिप्रापणार्थमवस्थित इति भावः । तथा दिवो द्युलोकस्य च मार्गाणां मध्ये प्रपथे प्रकृष्टे मार्गे जातः । तथा पृथिव्याः प्रपथे प्रकृष्टे मार्गे मनुष्याणां तत्तत्कर्मणि प्रवर्तनार्थं प्रादुर्भूत इत्यर्थः । सोऽयं पूषा प्रियतमे सर्वस्येष्टतमे सधस्थे सर्वेषां सहावस्थानभूते उभे द्यावापृथिव्यावभिलक्ष्य चरति । आभिमुख्येन चरति । सुकृतिनां सुकृतफलप्रदर्शनायानुकूलं चरतीत्यर्थः । तथा परा चरति । दुष्कर्मणां प्रतिकूलं गच्छति । किं कुर्वन् । प्रजानन् अनेनेदं कर्म कृतमस्य कर्मण इदं फलमित्यविशेषेण जानानः ॥

व्यूळ्हस्य दशरात्रस्य तृतीये छंदोमे प्रउगशस्त्रे सारस्वततृचस्य सरस्वतीं देवयंत इत्येषाद्या । सूत्र्यते हि । प्र ब्रह्माणो अंगिरसो नक्षंत सरस्वतीं देवयंतो हवंते । आ॰ ८.११. । इति ॥

सरस्वतीं देवयंतो हवंते सरस्वतीमध्वरे तायमाने ।
सरस्वतीं सुकृतो अह्वयंत सरस्वती दाशुषे वार्यं दात् ॥७॥
सरस्वतीं । देवऽयंतः । हवंते । सरस्वतीं । अध्वरे । तायमाने ।
सरस्वतीं । सुऽकृतः । अह्वयंत । सरस्वती । दाशुषे । वार्यं । दात् ॥७॥

देवयंतो देवान्यष्टुं स्तोतुं च कामयमाना यजमानाः सरस्वतीमेतन्नामिकां मध्यमस्थानदेवतां हवंते । कर्मावयवत्वायाह्वयंति । तथा तायमाने स्तुतिभिर्हविर्भिश्च विस्तीर्यमाणेऽध्वरे यज्ञे सरस्वतीं यजंतीति शेषः । सुकृतः पुण्यकर्माणः सरस्वतीमह्वयंत । फलप्रदानाय ह्वयंते । यत एवमतः कारणात्सरस्वती देवी दाशुषे हवींषि दत्तवते यजमानाय वार्यं वरणीयं कर्मफलं दात् । प्रयच्छतु ॥

सरस्वति या सरथं ययाथ स्वधाभिर्देवि पितृभिर्मदंती ।
आसद्यास्मिन्बर्हिषि मादयस्वानमीवा इष आ धेह्यस्मे ॥८॥
सरस्वति । या । सऽरथं । ययाथ । स्वधाभिः । देवि । पितृऽभिः । मदंती ।
आऽसद्य । अस्मिन् । बर्हिषि । मादयस्व । अनमीवाः । इषः । आ । धेहि ।
अस्मे इति ॥८॥

हे सरस्वति हे देवि या त्वं सरथं पितृभिः सह समानेन रथेन युक्तं यथा भवति तथा ययाथ। अस्मदीयं यज्ञं प्राप्नासि। किं कुर्वती। पितृभिः सह स्वधाभिर्हविर्लक्षणैरन्नैर्मदंती माद्यंती यज्ञं गच्छसीति संबंधः। सा त्वं बर्हिष्यस्मिन्वेदिस्तरणे यज्ञ आसद्योपविश्य मादयस्व। हविर्भिस्तृप्ता भव। आत्मानं तर्पय वा। ततस्तृप्ता सती त्वमनमीवाः। अमीवा रोगः। तद्वर्जितान्यारोग्यजननानीषोऽन्नान्यस्मे अस्मभ्यमा धेहि। पर्याप्तं प्रयच्छ॥

सर॑स्वतीं॒ यां पि॒तरो॑ ह॒वंते॑ दक्षि॒णा य॒ज्ञम॑भि॒नक्ष॑माणाः ।
स॒ह॒स्रा॒र्घमि॒ळो अत्र॑ भा॒गं रा॒यस्पोषं॒ यज॑मानेषु धेहि ॥९॥
सर॑स्वतीं । यां । पि॒तरः॑ । ह॒वंते॑ । द॒क्षि॒णा । य॒ज्ञं । अ॒भि॒ऽनक्ष॑माणाः ।
स॒ह॒स्र॒ऽअ॒र्घं । इ॒ळः । अत्र॑ । भा॒गं । रा॒यः । पोषं॑ । यज॑मानेषु । धे॒हि॒ ॥९॥

यां त्वां सरस्वतीं पितरो हवंते आह्वयंति। कीदृशाः। दक्षिणा॥ दक्षिणादाजित्याच्प्रत्ययः। पा॰ ५.३.३६.॥ दक्षिणत आगत्य यज्ञमभिनक्षमाणा अभितो गच्छंतो व्याप्नुवंतः। अत्रास्मिन्यज्ञे सहस्रार्घं बहुभिः पूजनीयमुपयोज्यमिळोऽन्नस्य भागं रायो धनस्य पोषं पुष्टिं च यजमानेषु त्वं धेहि। स्थापय॥

अवभृथस्नान आपो अस्मानित्येषा। सूचितं च। तत आचम्याप्नवंत आपो अस्मान्मातरः शुंधयंतु। आ॰ ६.१३.। इति॥ दशमेऽहनि वपामार्जनेऽप्येषा। सूचितं च। इदमापः प्र वहतेत्येतस्याः स्थान आपो अस्मान्मातरः शुंधयंतु। आ॰ ८.१२.। इति॥

आपो॑ अ॒स्मान्मा॒तरः॑ शुंधयंतु घृ॒तेन॑ नो घृत॒प्वः॑ पुनंतु ।
विश्वं॒ हि रि॒प्रं प्र॒वहं॑ति दे॒वीरुदिदा॑भ्यः शुचि॒रा पू॒त ए॑मि ॥१०॥
आपः॑ । अ॒स्मान् । मा॒तरः॑ । शुं॒ध॒य॒न्तु॒ । घृ॒तेन॑ । नः॒ । घृ॒त॒ऽप्वः॑ । पु॒नं॒तु॒ ।
विश्वं॑ । हि । रि॒प्रं । प्र॒ऽवहं॑ति । दे॒वीः॑ । उत् । इत् । आ॒भ्यः॒ । शुचिः॑ । आ । पू॒तः । ए॒मि॒ ॥१०॥

मातरो जगतो मातृस्थानीया आपोऽस्माञ्शुंधयंतु। प्रोक्षणेन शोधयंतु। तथा घृतप्वः। घृतमुदकं। तेनान्यान्पुनंतीति। तास्तथोक्ता आपः। यद्वा। घृतप्वः। घृतं गव्यं। तेन पुनंति। तथा ब्राह्मणं। घृतेन नो घृतप्वः पुनंतीति तद्वै सुपूतं यद्घृतेन पूयत इति। ता आपो घृतेन प्रत्यक्षेणोदकेन नोऽस्मान्पुनंतु। हि यस्माद्देवीर्देव्यो देवनशीला आपो विश्वं सर्वं रिप्रं पापं प्रवहंति पुरुषसकाशात्प्रगमयंति। अपनयंतीति यावत्। अनंतरमाभ्योऽद्भ्य आ पूत आभिमुख्येन शुद्धः सन् स्तोताहमुदेमि। उद्गच्छामि। ऊर्ध्वं स्वर्गं गच्छामीत्यर्थः॥ ॥२४॥

सुत्येऽहनि द्रप्सश्चस्कंदेत्यादिके द्वे विप्रुड्ढोमार्थे। सूचितं च। द्रप्सश्चस्कंदेति द्वाभ्यां विप्रुड्ढोमौ हुत्वा। आ॰ ५.२.। इति॥ स्कन्नहविरभिमर्शनेऽपि द्रप्स इत्येषा। आहुतिर्बहिष्परिधि यदि स्कंदेत् तदानीमाग्नीध्रोऽनया जुहुयात्। स्कन्नमभिमृशेदिति प्रकृत्य सूचितं। द्रप्सश्चस्कंदेत्याहुतिश्चेद्बहिष्परिध्याग्नीध्र एनां जुहुयात्। आ॰ ३.१३.। इति॥

द्र॒प्सश्च॑स्कंद प्रथ॒माँ अनु॒ द्यूनि॒मं च॒ योनि॒मनु॒ यश्च॒ पूर्वः॑ ।
स॒मा॒नं योनि॒मनु॑ सं॒चरं॑तं द्र॒प्सं जु॑हो॒म्यनु॑ स॒प्त होत्राः॑ ॥११॥
द्र॒प्सः । च॒स्कं॒द॒ । प्र॒थ॒मान् । अनु॑ । द्यून् । इ॒मं । च॒ । योनिं॑ । अनु॑ । यः । च॒ । पूर्वः॑ ।
स॒मा॒नं । योनिं॑ । अनु॑ । सं॒ऽचरं॑तं । द्र॒प्सं । जु॒हो॒मि॒ । अनु॑ । स॒प्त । होत्राः॑ ॥११॥

द्रप्सोऽभिषूयमाणस्य सोमस्य रसः प्रथमान् पूर्वभाविनः पार्थिवाँल्लोकान् द्यून् दीप्यमानान्द्युलोकांश्चानु

लक्षीकृत्य चस्कंद। स्कन्नवान्। गतवान्। तदेवाह। इमं परिदृश्यमानं योनिं स्थानभूतं लोकं च यश्चास्मात्पूर्वो ऽस्ति तमनुगतवान्। समानं साधारणं योनिं द्यावापृथिवीलक्षणं स्थानमनु संचरंतं सम्यग्गच्छंतं द्रप्सं सोमरसं विप्रुड्रूपेणं सप्त होत्राः सप्तसंख्याका विप्रुड्ढोमस्य कर्तारो होतृप्रभृतयो वयमन्वानुपूर्व्येण जुहोमि। जुहुमः। यद्वा। होत्राः सप्तहोतृभिः क्रियमाणा यागक्रिया होत्राः। ता अनु पश्चादध्वर्युरहं जुहोमि। यद्वा। द्रुतगामित्वाद्द्रप्स आदित्य उच्यते। स आदित्यः पृथिवीं च दिवं च गच्छति समानं योनिमंतरिक्षं लक्षीकृत्य। सम्यक्चरंतं तं द्रप्समादित्यमुद्दिश्य सप्त होत्राः सप्तसंख्याका दिशः। यस्यां दिशि सूर्यो वर्तते तद्व्यतिरिक्ताः सप्तसंख्याका दिशः। अनु पश्चाज्जुहोमि। यत्र यत्र वर्तते तां तां दिशं द्रव्यत्वेन प्रयच्छामि। प्रतिष्ठापयामीत्यर्थः। अत्र वाजसनेयकं। असौ वा आदित्यो द्रप्सः स दिवं च पृथिवीं च स्कंदतीमं च योनिमनु यश्च पूर्व इतीमं च लोकममुं चेत्येतत् समानं योनिमनु संचरंतमिति समानं ह्येष एतं योनिमनु संचरति द्रप्सं जुहोम्यनु सप्त होत्रा इत्यसौ वा आदित्यो द्रप्सो दिशः सप्त होत्रा अमुं तदादित्यं दिक्षु प्रतिष्ठापयति। शत॰ ७. ४. १. २०.। इति ॥

यस्ते॑ द्र॒प्सः स्कंद॑ति॒ यस्ते॑ अं॒शुर्बा॒हुच्यु॑तो धि॒षणा॑या उ॒पस्था॑त्।
अ॒ध्व॒र्योर्वा॒ परि॑ वा॒ यः प॒वित्रा॒त्तं ते॑ जुहोमि॒ मन॑सा॒ वष॑ट्कृतं ॥१२॥
यः। ते॒। द्र॒प्सः। स्कंद॑ति। यः। ते॒। अं॒शुः। बा॒हुऽच्यु॑तः। धि॒षणा॑याः। उ॒पऽस्था॑त्।
अ॒ध्व॒र्योः। वा॒। परि॑। वा॒। यः। प॒वित्रा॑त्। तं। ते॒। जु॒हो॒मि॒। मन॑सा। वष॑ट्ऽकृतं ॥१२॥

हे सोम ते त्वदीयो यो द्रप्सो रसः स्कंदति अधिषवणचर्मणोऽन्यत्र गच्छति। यश्च ते त्वदीयोंऽशू रसादितरः सन् स्कंदति। बाहुच्युतोऽध्वर्योर्बाहुभ्यां प्रच्युतः सन् स्कंदति। यद्वा। बाहुवत्साधनभूता ग्रावाणः। तैः प्रच्युतोऽभिषुतः सन् धिषणायाः। धिषणेत्यधिषवणफलकनाम। प्रत्येकविवक्षयैकवचनं। अधिषवणफलकयोरुपस्थात्समीपस्थात्प्रदेशादन्यत्र गच्छति। तथाध्वर्योर्वाभिषुण्वतोऽध्वर्योर्हस्तात्स्कंदति। वापि वा पवित्राद्दशापवित्रात्परिस्कंदति। तं सर्वं द्रप्सं ते त्वदीयं रसं मनसांतःकरणेन स्तोत्रेण वा सह वषट्कृतं वषट्कारेण स्वाहाकारेण कृतं जुहोमि। अग्नौ प्रक्षिपामि ॥

यस्ते॑ द्र॒प्सः स्क॒न्नो यस्ते॑ अं॒शुर॒वश्च॒ यः प॒रः स्रु॒चा।
अ॒यं दे॒वो बृह॒स्पतिः॒ सं तं सिं॑चतु॒ राध॑से ॥१३॥
यः। ते॒। द्र॒प्सः। स्क॒न्नः। यः। ते॒। अं॒शुः। अ॒वः। च॒। यः। प॒रः। स्रु॒चा।
अ॒यं। दे॒वः। बृह॒स्पतिः॑। सं। तं। सि॒ञ्च॒तु॒। राध॑से ॥१३॥

हे सोम ते त्वदीयो यो द्रप्सो रसोऽन्यत्र स्कन्नो गतो यश्च त्वदीयस्तव कारणभूतोंऽशुर्लताखंडो रसादितरो भवति स्रुचा पात्रविशेषेण गृहीतः सोमोऽवोऽवस्तात्स्कंदते परः परस्ताद्वातिरिक्तो भवति तमिमं सोममयं बृहस्पतिरेतन्नामको देवः सं सिंचतु। सम्यक् प्रचारयतु। किमर्थं। राधसेऽस्माकं धनार्थं। स्कन्ने हि सोमे प्रजापश्वादिकमपस्कन्नं भवति खलु ॥

पय॑स्वती॒रोष॑धयः॒ पय॑स्वन्माम॒कं वचः॑।
अ॒पां पय॑स्व॒दित्पय॒स्तेन॑ मा स॒ह शुं॑धत ॥१४॥
पय॑स्वतीः। ओष॑धयः। पय॑स्वत्। माम॒कं। वचः॑।
अ॒पां। पय॑स्वत्। इत्। पयः॑। तेन॑। मा॒। स॒ह। शुं॒ध॒त॒ ॥१४॥

इयं प्रत्यक्षकृता। हे आपः ओषधयः पयस्वतीः पयस्वत्यो वृष्टिलक्षणेनोदकेन सारवत्यो भवंति। मामकं मदीयं वचो वचनं वृष्टिप्रार्थनवचनं पयस्वत्सारवद्भवति। किं बहुना। यच्चेह किंचिदपामुदकानां पयः क्षीरवत्सारभूतं यदस्ति तत्सर्वं पयस्वत्सारवदेव। तेनोदकसारेण सह मा मां शुंधत। यूयं शोधयत। आपो अद्यान्वचारिषं रसेन समगस्महि। ऋ॰ १. २३. २३.। इति निगमांतरं ॥ ॥२५॥

परं मृत्यो इति चतुर्दशर्चं द्वितीयं सूक्तं। यमपुत्रस्य संकुसुकस्यार्षं। एकादशी प्रस्तारपंक्तिः। आद्यौ जागतौ ततो द्वौ गायत्रौ। प्रस्तारपंक्तिः पुरतः। पिं॰ ३. ४०.। इति। त्रयोदशी जगती चतुर्दश्यनुष्टुप्। शिष्टास्त्रिष्टुभः। तत्रादौ चतस्रो मृत्युदेवत्याः। पंचमी धातृदेवताका। षष्ठी त्वष्टृदेवत्या। सप्तम्याद्याः शिष्टाः पितृमेधाभिधायिन्यः। अतस्तद्देवताकाः। अंत्या त्वनिरुक्तत्वात्प्राजापत्या वा। तथा चानुक्रांतं। परं मृत्यो संकुसुकश्चतस्रो मृत्युदेवताः परा धात्री परा त्वाष्ट्री पराः पितृमेधा एकादशी प्रस्तारपंक्तिर्जगत्युपांत्यांत्यानुष्टुप् प्राजापत्या वा सानिरुक्तेति ॥

परं मृत्यो अनु परेहि पंथां यस्ते स्व इतरो देवयानात्।
चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् ॥१॥
परं। मृत्यो इति। अनु। परा। इहि। पंथां। यः। ते। स्वः। इतरः। देवऽयानात्।
चक्षुष्मते। शृण्वते। ते। ब्रवीमि। मा। नः। प्रऽजां। रिरिषः। मा। उत। वीरान् ॥१॥

हे मृत्यो सर्वेषां मारकैतन्नामक देव परमन्यं पंथां पंथानमन्वानुपूर्व्येण परेहि। पराङ्मुखो गच्छ। यजमानादिति शेषः। कोऽसौ पंथाः। ते तव स्वः स्वभूतः देवयानात्। देवा अनेन मार्गेण गच्छंतीति देवयानो देवमार्गः। तस्मादितरो यः पंथास्तं प्रगच्छ। न केवलमतः परागच्छ अपि तु चक्षुष्मते दर्शनवते शृण्वते सर्वं। अप्रतिहतसर्वेंद्रियविज्ञानायेत्यर्थः। ते तुभ्यं ब्रवीमि। कथयामि। नोऽस्माकं प्रजां दुहितृदौहित्रात्मिकां मा रिरिषः। मा हिंसीः। उतापि च वीरान्पुत्रपौत्रादीन्मा हिंसीः। तत्परागमनेन रक्षेत्यर्थः ॥

मृत्योः पदं योपयंतो यदैत द्राघीय आयुः प्रतरं दधानाः।
आप्यायमानाः प्रजया धनेन शुद्धाः पूता भवत यज्ञियासः ॥२॥
मृत्योः। पदं। योपयंतः। यत्। ऐत। द्राघीयः। आयुः। प्रऽतरं। दधानाः।
आऽप्यायमानाः। प्रऽजया। धनेन। शुद्धाः। पूताः। भवत। यज्ञियासः ॥२॥

हे मृतस्य ज्ञातयः मृत्योः परागच्छतस्तस्य पदं। पद्यतेऽस्मिन्निति पदं पितृयाणः। तं योपयंतो विमोहयंतः परिवर्जयंतो यद्यस्मादैत देवयानीयपथा गतवंतः तस्माद्द्राघीयो दीर्घतरमायुर्जीवनं प्रतरं प्रकृष्टतरमत्यर्थं दधाना धारयंतो भवथ। किंच हे यज्ञियासो यज्ञार्हा यज्ञसंपादिनो यजमानाः प्रजया पुत्रपौत्रादिकया धनेन गवाश्वादिकेन चाप्यायमाना वर्धमानाः संतः शुद्धा जन्मांतरसंचितदुरितक्षयाच्छुद्धा भवत। पूता वर्तमानजन्मोपचितदुरितक्षयाच्च पूता भवत ॥

पैतृमेधिके कर्मण्यमात्या इमे जीवा वि मृतैरिति सव्यावृतो व्रजंति। सूत्रितं च। इमे जीवा वि मृतैरिति सव्यावृतो व्रजंति। आ॰ गृ॰ ४. ४. ९.। इति ॥

इमे जीवा वि मृतैराववृत्रन्नभूद्भद्रा देवहूतिर्नो अद्य।
प्रांचो अगाम नृतये हसाय द्राघीय आयुः प्रतरं दधानाः ॥३॥
इमे। जीवाः। वि। मृतैः। आ। अववृत्रन्। अभूत्। भद्रा। देवऽहूतिः। नः। अद्य।
प्रांचः। अगाम। नृतये। हसाय। द्राघीयः। आयुः। प्रऽतरं। दधानाः ॥३॥

इमे जीवा जीवंतः पुरुषा मृतैः पित्रादिभिः। तेभ्य इत्यर्थः। व्यावर्त्तन्। व्यावृत्ता भवंतु। एते न म्रियंतामिति भावः। किंचाद्यास्मिन्दिने नोऽस्माकमशौचे विकृष्टे देवहूतिः देवानामाह्वानं यत्र स देवहूतिः पितृमेधाख्यो यज्ञो भद्रा कल्याणोऽभूत्। भवतु। तत उत्तरं वयं प्रांचः प्राङ्मुखांचना अगाम। गच्छेम। प्रत्यंच इति भावः। नृतये नर्तनाय कर्मणि गात्रविक्षेपाय। स्वकर्मानुष्ठानायेति भावः। हसाय हसनाय पुत्रादिभिः सह क्रीडनाय। कीदृशा वयं। द्राघीय आयुः प्रतरं दधानाः॥

इमं जीवेभ्यः परिधिं दधामि मैषां नु गादपरो अर्थमेतं।
शतं जीवंतु शरदः पुरूचीरंतर्मृत्युं दधतां पर्वतेन ॥४॥
इमं। जीवेभ्यः। परिऽधिं। दधामि। मा। एषां। नु। गात्। अपरः। अर्थं। एतं।
शतं। जीवंतु। शरदः। पुरूचीः। अंतः। मृत्युं। दधतां। पर्वतेन ॥४॥

अनया जीवरक्षार्थं पाषाणं परिधिरूपेण स्थापयंति। जीवेभ्यो जीवद्भ्यः पुत्रपौत्रादिभ्यस्तेषां रक्षणार्थमेवं परिधिं मृत्योः परिधानभूतं पाषाणं दधामि। निदधामि। तत एषां जीवतां मध्येऽपरोऽन्य एतमिममर्थं॥ अर्तेरिदं रूपं॥ गंतव्यं मरणाख्यं मार्गं नु क्षिप्रं मा गात्। मा गच्छतु। एतदर्थं परिधिं स्थापयामीति संबंधः। किंच पुरूचीर्बह्वंचना बहुगमनाः शतं शरद एतत्संख्याकान्वर्षाञ्जीवंतु। स्वस्वप्राणान्धारयंतु। तथा पर्वतेन शिलोच्चयेन मृत्युं सर्वेषां मारकमेतन्नामकमंतर्दधतां। अंतर्हितं कुर्वंतु। यथा नागच्छति तथा कुर्वतामित्यर्थः॥

यथाहान्यनुपूर्वं भवंति यथ ऋतव ऋतुभिर्यंति साधु।
यथा न पूर्वमपरो जहात्येवा धातरायूंषि कल्पयैषां ॥५॥
यथा। अहानि। अनुऽपूर्वं। भवंति। यथा। ऋतवः। ऋतुऽभिः। यंति। साधु।
यथा। न। पूर्वं। अपरः। जहाति। एव। धातः। आयूंषि। कल्पय। एषां ॥५॥

यथा येन प्रकारेणाहान्यहोरात्रात्मकानि दिनान्यनुपूर्वं पूर्वपूर्वमनुक्रमेण भवंति परिवर्तंते। यथा चर्तवो वसंतादय ऋतुभिः सह साधु शोभनमविपर्यासेन यंति गच्छंति। यथा च पूर्वं पूर्वकालीनं पितरमपरोऽर्वाक्कालीनः पुत्रो न जहाति न परित्यजति पूर्वमरणेन। एवैवं तेनैवोक्तप्रकारेण हे धातः सर्वेषां धारयितरेतन्नामक देव एषामस्मत्कुलीनानां जीवानामायूंषि जीवनानि कल्पय। समर्थय। कुर्वित्यर्थः॥ ॥२६॥

आ रोहतायुर्जरसं वृणाना अनुपूर्वं यतमाना यति ष्ठ।
इह त्वष्टा सुजनिमा सजोषा दीर्घमायुः करति जीवसे वः ॥६॥
आ। रोहत। आयुः। जरसं। वृणानाः। अनुऽपूर्वं। यतमानाः। यति। स्थ।
इह। त्वष्टा। सुऽजनिमा। सऽजोषाः। दीर्घं। आयुः। करति। जीवसे। वः ॥६॥

हे मृतस्य स्वजनाः पुत्रपौत्रादयः जरसं जरां वृणानाः संभजमाना यूयमायुर्जीवनमा रोहत। अधितिष्ठत। अनुपूर्वमानुपूर्व्येण। अव्ययीभावः। पूर्वो ज्येष्ठः। ज्येष्ठानुपूर्व्या यतमानाः प्रयत्नं कुर्वंतो यूयं यति स्थ यत्संख्याका भवथ॥ यच्छब्दाच्छांदसो डतिः॥ सुजनिमा शोभनजननस्त्वष्टैतन्नामको देवः सजोषा भवद्भिः संगतः सन्निहास्मिन्कर्मणि प्रवृत्तानां वो युष्माकं जीवसे जीवनाय दीर्घं प्रभूतमायुः करति। करोतु॥

इमा नारीरविधवाः सुपत्नीरांजनेन सर्पिषा सं विशंतु।
अनश्रवोऽनमीवाः सुरत्ना आ रोहंतु जनयो योनिमग्रे ॥७॥

इमाः । नारीः । अविधवाः । सुऽपत्नीः । आऽअंजनेन । सर्पिषा । सं । विशंतु ।
अनश्रवः । अनमीवाः । सुऽरत्नाः । आ । रोहंतु । जनयः । योनिं । अग्रे ॥७॥

अविधवाः । धवः पतिः । अविगतपतिकाः । जीवद्भर्तृका इत्यर्थः । सुपत्नीः शोभनपतिका इमा नारीर्नार्य आंजनेन सर्वतोंऽजनसाधनेन सर्पिषा घृतेनाक्तनेत्राः सत्यः सं विशंतु । स्वगृहान्प्रविशंतु । तथानश्रवोऽश्रुवर्जिता अरुदत्योऽनमीवाः । अमीवा रोगः । तद्वर्जिताः । मानसदुःखवर्जिता इत्यर्थः । सुरत्नाः शोभनधनसहिता जनयः । जनयंत्यपत्यमिति जनयो भार्याः । ता अग्रे सर्वेषां प्रथमत एव योनिं गृहमा रोहंतु । आगच्छंतु ॥

देवरादिकः प्रेतपत्नीमुदीर्ष्व नारीत्यनया भर्तृसकाशादुत्थापयेत् । सूचितं च । तामुत्थापयेद्देवरः पतिस्थानीयोऽंतेवासी जरद्दासो वोदीर्ष्व नार्यभि जीवलोकं । आ॰ गृ॰ ४. २. १८. । इति ॥

उदीर्ष्व नार्यभि जीवलोकं गतासुमेतमुप शेष एहि ।
हस्तग्राभस्य दिधिषोस्तवेदं पत्युर्जनित्वमभि सं बभूथ ॥८॥
उत् । ईर्ष्व । नारि । अभि । जीवऽलोकं । गतऽअसुं । एतं । उप । शेषे । आ । इहि ।
हस्तऽग्राभस्य । दिधिषोः । तव । इदं । पत्युः । जनिऽत्वं । अभि । सं । बभूथ ॥८॥

हे नारि मृतस्य पत्नि जीवलोकं जीवानां पुत्रपौत्रादीनां लोकं स्थानं गृहमभिलक्ष्योदीर्ष्व । अस्मात्स्थानादुत्तिष्ठ ॥ ईर गतौ आदादिकः ॥ गतासुमपक्रांतप्राणमेतं पतिमुप शेषे । तस्य समीपे स्वपिषि । तस्मात्त्वमेहि । आगच्छ । यस्मात्त्वं हस्तग्राभस्य पाणिग्राहं कुर्वतो दिधिषोर्गर्भस्य निधातुस्तवास्य पत्युः संबंधादागतमिदं जनित्वं जायात्वमभिलक्ष्य सं बभूथ संभूतासि अनुमरणनिश्चयमकार्षीः तस्मादागच्छ ॥

क्षत्रियस्य धनुर्हस्तादित्यनया धनुः प्रहरेत् । सूत्रितं च । धनुर्हस्तादाददानो मृतस्येति धनुः । आ॰ गृ॰ ४. २ २०. । इति ॥

धनुर्हस्तादाददानो मृतस्यास्मे क्षत्राय वर्चसे बलाय ।
अत्रैव त्वमिह वयं सुवीरा विश्वाः स्पृधो अभिमातीर्जयेम ॥९॥
धनुः । हस्तात् । आऽददानः । मृतस्य । अस्मे इति । क्षत्राय । वर्चसे । बलाय ।
अत्र । एव । त्वं । इह । वयं । सुऽवीराः । विश्वाः । स्पृधः । अभिऽमातीः । जयेम ॥९॥

मृतस्य क्षत्रियस्य हस्ताद्धनुराददानः । किमर्थं । अस्मे अस्माकं क्षत्राय प्रजापालनसमर्थाय बलाय वर्चसे तेजसे बलाय सेनालक्षणाय च धनुराददानोऽहं ब्रवीमीति शेषः । किमिति । त्वमत्रैवास्मिन्स्थान एव भव वयं चेहास्मिँल्लोके सुवीराः सुपुत्रयुक्ता भवंतो विश्वाः सर्वानभिमातीरभिमन्यमानान्स्पृधः संघर्षयितॄन्बाधकाञ्शत्रूञ्जयेम । सहेमहि ॥

दीक्षितमरण उप सर्प मातरमित्याद्याश्चतस्रः शंसनीयाः । सूत्रितं च । उप सर्प मातरं भूमिमेतामिति चतस्रः सोम एकेभ्यः । आ॰ ६. १०. । इति ॥ उप सर्पेत्यनया संचितान्यस्थीनि गर्ते निदध्युः । आ॰ गृ॰ ४. ५. ५. ॥

उप सर्प मातरं भूमिमेतामुरुव्यचसं पृथिवीं सुशेवां ।
ऊर्णम्रदा युवतिर्दक्षिणावत एषा त्वा पातु निर्ऋतेरुपस्थात् ॥१०॥
उप । सर्प । मातरं । भूमिं । एतां । उरुऽव्यचसं । पृथिवीं । सुऽशेवां ।
ऊर्णऽम्रदाः । युवतिः । दक्षिणाऽवते । एषा । त्वा । पातु । निःऽऋतेः । उपऽस्थात् ॥१०॥

मातरं मातृभूतां भूमिमस्माभिर्भूमौ निधीयमानस्त्वमुप सर्प । उपगच्छ । अनुप्रविशेत्यर्थः । कीदृशीं । उरुव्यचसं बहुव्याप्तिकां पृथिवीं विस्तीर्णां सुशेवां सुसुखां । सर्वेषां सुखदात्रीमित्यर्थः । तामुपगच्छ । युवतिर्यौवनान्विता स्त्रीरूपेयं भूमिर्दक्षिणावत ऋत्विग्भ्यो देयत्वेन धनवते यजमानायोर्णम्रदाः । ऊर्णेवोर्णासुक इव मृद्वी भवति । सुकुमारा भवति । न बाधयित्रीत्यर्थः । सैषा पृथिवी निर्ऋतेर्मृत्युदेवताया उपस्थात्समीपस्थानात्त्वा त्वामस्थिरूपं यजमानं पातु । रक्षतु ॥ ॥२७॥

उच्छ्वंचस्वेत्येतया पांसूनवकिरेत् । सूत्र्यते हि । उत्तरया पांसूनवकिरेत् । आ० गृ० ४. ५. ६. । इति ॥

उच्छ्वंचस्व पृथिवि मा नि बाधथाः सूपायनास्मै भव सूपवंचना ।
माता पुत्रं यथा सिचाभ्येनं भूम ऊर्णुहि ॥११॥

उत् । श्वंचस्व । पृथिवि । मा । नि । बाधथाः । सुऽउपायना । अस्मै । भव । सुऽउपवंचना ।
माता । पुत्रं । यथा । सिचा । अभि । एनं । भूमे । ऊर्णुहि ॥११॥

हे पृथिवि उच्छ्वंचस्व । ऊर्ध्वंगतोच्छ्वासमेनं कुरु । अधस्तान्मा क्षथा इत्यर्थः । किंच मा नि बाधथाः । मा संपीडय । तथास्मै यजमानार्थं सूपायना शोभनोपगमना सूपचारिका भवेत्यर्थः । सूपवंचना । उपवंचनं प्रलंभनं । शोभनप्रलंभा सुप्रतिष्ठा भव । अपि च माता पुत्रमात्मीयं बालकं सिचा वस्त्रांतेन यथाच्छादयति तद्वद्धे भूमि एनमस्थिरूपं यजमानं त्वमभ्यूर्णुहि । आभिमुख्येनाच्छादय ॥

उच्छ्वंचमाना पृथिवी सु तिष्ठतु सहस्रं मित उप हि श्रयंतां ।
ते गृहासो घृतश्चुतो भवंतु विश्वाहास्मै शरणाः संत्वत्र ॥१२॥

उत्ऽश्वंचमाना । पृथिवी । सु । तिष्ठतु । सहस्रं । मितः । उप । हि । श्रयंतां ।
ते । गृहासः । घृतऽश्चुतः । भवंतु । विश्वाहा । अस्मै । शरणाः । संतु । अत्र ॥१२॥

पांसुभिः प्रच्छाद्यैतां पठंति । उच्छ्वंचमानास्थिकुंभमवष्टभ्योर्ध्वं गच्छंती पृथिवी सु तिष्ठतु । प्रतिष्ठिता भवतु । किंच सहस्रं सहस्रसंख्याका मितः प्रक्षिप्ताः ॥ मिनोतेरौणादिके कर्मणि क्विपि तुगागमः । ततो जस् ॥ यद्वा । सहस्रं । तृतीयार्थे प्रथमा ॥ मित इति निष्ठांतं रूपं । व्यत्ययेन बहुवचनस्यैकवचनं । स्वरो वृषादित्वाद्द्रष्टव्यः ॥ सहस्रेण संमिता बहुसंख्याकाः । पार्थिवाः पांसव उप श्रयंतां । एनमुपसेवंतां । तं संपरिवार्य तिष्ठंत्वित्यर्थः । हिरवधारणे । तथा ते पांसवोऽस्मै गृहासो गृहा भवंतो घृतश्चुतो घृतस्योदकस्य सर्पिषो वा क्षारयितारो भवंतु । अत्रास्मिँल्लोके विश्वाहा सर्वेष्वहःसु सर्वदास्मा अस्य शरणाः संतु । आश्रयभुता भवंतु ॥

उत्ते स्तभ्नामीति कपालेनास्थीन्यपिदध्यात् । सूत्रितं च । उत्ते स्तभ्नामीति कपालेनापिधाय । आ० गृ० ४. ५. ८. । इति ॥

उत्ते स्तभ्नामि पृथिवीं त्वत्परीमं लोगं निदधन्मो अहं रिषं ।
एतां स्थूणां पितरो धारयंतु तेऽत्रा यमः सादना ते मिनोतु ॥१३॥

उत् । ते । स्तभ्नामि । पृथिवीं । त्वत् । परि । इमं । लोगं । निऽदधत् । मो इति । अहं । रिषं ।
एतां । स्थूणां । पितरः । धारयंतु । ते । अत्र । यमः । सदना । ते । मिनोतु ॥१३॥

हे अस्थिकुंभ त्वत्परि । परिशब्दयोगे पंचमी । तवोपरि ते त्वदीयेन कपालेन पृथिवीमुत्तभ्नामि । प्रतिबध्नामि । यथा पृथिवी तवोपरि मा गच्छति तथापिदधामीत्यर्थः । इमं लोगं कपाललक्षणं लोष्टं निदधदुपरि स्थापयन्नहं मो रिषं । मा हिंसिषं । किंचैतां मया निहितां स्थूणां ते त्वदीयां पृथिव्या धारयित्रीं कपाललक्षणां पितरो धारयंतु । निश्चलां कुर्वंतु । ततस्ते त्वदीयेऽस्मिन्स्थाने यमः पितृपतिः सदनानि स्थानानि मिनोतु । परिच्छिनत्तु । करोत्वित्यर्थः ॥

प्रतीचीने मामहनीष्वाः पर्णमिवा दधुः ।
प्रतीचीं जग्रभा वाचमश्वं रशनया यथा ॥१४॥
प्रतीचीने । मां । अहनि । इष्वाः । पर्णऽइव । आ । दधुः ।
प्रतीचीं । जग्रभ । वाचं । अश्वं । रशनया । यथा ॥१४॥ ॥२८॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये सप्तमाष्टके षष्ठोऽध्यायः ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥
अष्टके सप्तमे षष्ठं व्याख्याय श्रुतिकोविदः । सायणार्यस्ततोऽध्यायं सप्तमं व्याचिकीर्षति ॥

अथ द्वादशानुवाकात्मकस्य दशममंडलस्य द्वितीयेऽनुवाके त्रयोदश सूक्तानि । तत्र नि वर्तध्वमित्यष्टर्चं तृतीयं सूक्तं । अस्य यमपुत्रो मथिताख्य ऋषिर्वरुणपुत्रो भृगुर्वाथवा भार्गवश्च्यवनः । षष्ठी गायत्री शिष्टा अनुष्टुभः । इदमब्देवताकं गोदेवताकं वा । अग्नीषोमा पुनर्वसू इत्यर्धर्चोऽग्नीषोमदेवताकः । तथा चानुक्रांतं । नि वर्तध्वमष्टौ मथितो भृगुर्वा वारुणिर्भार्गवश्च्यवनो वापं गव्यं वानुष्टुभमग्नीषोमीयो द्वितीयोऽर्धर्चः षष्ठी गायत्रीति ॥ गतो विनियोगः ॥

नि वर्तध्वं मानु गातास्मान्त्सिषक्त रेवतीः ।
अग्नीषोमा पुनर्वसू अस्मे धारयतं रयिं ॥१॥
नि । वर्तध्वं । मा । अनु । गात । अस्मान् । सिसक्त । रेवतीः ।
अग्नीषोमा । पुनर्वसू इति पुनःऽवसू । अस्मे इति । धारयतं । रयिं ॥१॥

हे गावो हे आपो वा यूयं नि वर्तध्वं । अस्मान्प्रत्यागच्छत । मानु गात । अस्मद्व्यतिरिक्तं यजमानं मा गच्छत । आगत्य च हे रेवती रेवत्यो धनवत्यो यूयमस्मान्त्सिषक्त । सेचयत । अवगाहत । गोदोहनस्नानपानादिद्वारेण सेवध्वमित्यर्थः । हे पुनर्वसू पुनःपुनर्वस्तारौ स्तोतॄणां यष्टॄणामाच्छादयितारावेतन्नामकौ देवौ युवामस्मे अस्मासु रयिं व्रीह्यादिलक्षणं धनं धारयतं । स्थापयतं ॥

पुनरेना नि वर्तय पुनरेना न्या कुरु । इंद्र एणा नि यच्छत्वग्निरेना उपाजतु ॥२॥
पुनः । एनाः । नि । वर्तय । पुनः । एनाः । नि । आ । कुरु । इंद्रः । एनाः । नि ।
यच्छतु । अग्निः । एनाः । उपऽआजतु ॥२॥

अथ मंत्रद्रष्टा स्वात्मानं प्रतिब्रूते। हे मदीयात्मन् त्वमेना एता अन्यतोऽभिगंत्रीर्गा अपो वा पुनर्नि वर्तय। पुनःपुनर्मदभिमुखीकुरु। तदनंतरमेना एताः पुनर्भूयो भूयो न्या कुरु। नियता आत्मायत्ताः कुरु। किंचेंद्रोऽपि तव सहायभूतः सन्नेना एता नि यच्छतु। त्वदायत्ताः करोतु। अग्निश्चैना एता गा अपो वोपाजतु। उपगमयतु। उपक्षिपतु वा। उपयोग्याः करोत्वित्यर्थः ॥

पुन॑रे॒ता नि व॑र्तंताम॒स्मिन्पु॑ष्यंतु गोप॑तौ। इ॒हैवाग्ने॒ नि धा॑रये॒ह ति॑ष्ठतु॒ या र॒यिः ॥३॥

पुनः॑। ए॒ताः। नि। व॒र्त॒तां॒। अ॒स्मिन्। पु॒ष्य॒तु॒। गोऽप॑तौ। इ॒ह। ए॒व। अ॒ग्ने॒। नि। धा॒र॒य॒। इ॒ह। ति॒ष्ठ॒तु॒। या। र॒यिः ॥३॥

एना एता ईदृश्यो गाव आपो वा पुनर्नि वर्ततां। भूयो भूयो मां प्रत्यागच्छंतु। आगत्य च गोपतौ सास्नादिमतीनां धेनूनां वृष्टिलक्षणानामपां पालकेऽस्मिन्नीदृशे मयि पुष्यंतु। आत्मायत्तत्वेन स्थित्वा पुष्टा भवंतु। पुष्टाः सतीस्ता हे अग्ने त्वमिहैवास्मिन्नेव मयि नि धारय। नियमेन स्थापय। या रयिर्यदपि व्रीह्यादिकं धनमस्ति तदपि धनं गोसहितमिहास्मिन्नेव गोपतौ मयि तिष्ठतु। निवसतु ॥

यन्नि॒यानं॒ न्यय॑नं सं॒ज्ञानं॒ यत्प॒राय॑णं। आ॒वर्त॑नं नि॒वर्त॑नं॒ यो गो॒पा अपि॒ तं हु॑वे ॥४॥

यत्। नि॒ऽयानं॑। नि॒ऽअय॑नं। सं॒ऽज्ञानं॑। यत्। प॒रा॒ऽअय॑नं। आ॒ऽवर्त॑नं। नि॒ऽवर्त॑नं। यः। गो॒पाः। अपि॑। तं। हु॒वे॒ ॥४॥

नियानं ॥ अधिकरणे ल्युट् ॥ नियमेन यांत्यागच्छंति गावोऽत्रेति नियानं गोष्ठाख्यं स्थानं। यत् अस्तीति शेषः। यच्छब्दयोगात्तच्छब्दोऽध्याहर्तव्यः। हुव इति क्रियापदं सर्वत्रानुषज्यते। तत्स्थानं हुवे। आह्वयामि। आह्वानमभिमुखीकरणं तेन चात्र तत्पूर्विका प्रार्थना लक्ष्यते। गोसहितं गोष्ठं प्रार्थय इत्यर्थः। न्ययनं ॥ भावे ल्युट् ॥ नियमेन गृहं प्रति प्राप्तिलक्षणं गमनं यदस्ति तदपि प्रार्थये। निवर्तनं वने चरित्वा गृहं प्रति यदागमनमस्ति तदपि प्रार्थये। योऽपि गोपा गवां पालकोऽस्ति तमपि हुवे। प्रार्थये। सर्वगुणोपेता गाः प्रार्थय इत्यर्थः ॥

य उ॒दान॒ड्व्यय॑नं॒ य उ॒दान॑ट्प॒राय॑णं। आ॒वर्त॑नं नि॒वर्त॑न॒मपि॑ गो॒पा नि व॑र्ततां ॥५॥

यः। उ॒त्ऽआन॑ट्। वि॒ऽअय॑नं। यः। उ॒त्ऽआन॑ट्। प॒रा॒ऽअय॑नं। आ॒ऽवर्त॑नं। नि॒ऽवर्त॑नं। अपि॑। गो॒पाः। नि। व॒र्त॒तां॒ ॥५॥

यो गोपा गोपालो व्ययनं नष्टानां गवामन्वेषणार्थं विविधं गमनमुदानट् व्याप्नोति अनुभवति। यः परायणं परागमनमुदानट् व्याप्नोति। वनं प्रति गवां चरणाय गमनमित्यर्थः। यश्चावर्तनं वनचारिणीभिर्गोभिः सह प्रवर्तनमनुभवति। योऽपि गोपा निवर्तनं गोभिः सह वनाद्गृहं प्रति निर्गमनमनुभवति। सोऽपि गोपालो नि वर्ततां। गोभिः सह वनाद्गृहं प्रति क्षेमेणागच्छतु ॥

आ निं॑वर्त॒ नि व॑र्तय॒ पुन॑र्न इंद्र॒ गा दे॑हि। जी॒वाभि॑र्भुनजामहै ॥६॥

आ। नि॒ऽव॒र्त॒। नि। व॒र्त॒य॒। पुनः॑। नः॒। इं॒द्र॒। गाः। दे॒हि॒। जी॒वाभिः॑। भु॒न॒जा॒म॒है॒ ॥६॥

हे इंद्र त्वमा निवर्त। आनिवर्तस्व। अस्मदभिमुखो भव। ततोऽन्यतो गच्छंतीर्गा नि वर्तय। अस्मदभिमुखीः कुरु। एवं कृत्वा च हे इंद्र त्वं पुनः पश्चान्नोऽस्मभ्यं गा देहि। प्रयच्छ। त्वया दत्ताभिर्जीवाभिश्चिरं जीवंतीभिः सर्वस्य जीवयित्रीभिर्वा गोभिर्भुनजामहै। वयं भुंजीमहि। यद्वा। भुजिरत्रांतर्भावितण्यर्थः। देवपितॄन्संभोजयेमहि ॥

परि वो विश्वतो दध ऊर्जा घृतेन पयसा।
ये देवाः के च यज्ञियास्ते रय्या सं सृजंतु नः ॥७॥
परि। वः। विश्वतः। दधे। ऊर्जा। घृतेन। पयसा।
ये। देवाः। के। च। यज्ञियाः। ते। रय्या। सं। सृजंतु। नः ॥७॥

हे देवाः विश्वतः सर्वतः स्थितान्वो युष्मानूर्जा गोसंबंधिना दधिलक्षणेनान्नेन घृतेनाज्येन पयसा क्षीरेण च परि दधे। संधारयामि। युष्मभ्यं हविर्द्वारेण प्रयच्छामि। न केवलमात्मानं पुष्णामीत्यर्थः। एतज्ज्ञात्वा ये के च देवा यज्ञिया यज्ञार्हाः संति ते देवा नोऽस्मान्रय्या गोलक्षणेन धनेन सं सृजंतु। संयोजयंतु॥

आ निवर्तन वर्तय नि निवर्तन वर्तय।
भूम्याश्चतस्रः प्रदिशस्ताभ्य एना नि वर्तय ॥८॥
आ। निऽवर्तन। वर्तय। नि। निऽवर्तन। वर्तय।
भूम्याः। चतस्रः। प्रऽदिशः। ताभ्यः। एनाः। नि। वर्तय ॥८॥

मंत्रद्रष्टर्षिः स्वात्मानं गाश्च संबोध्याह। हे मदीयात्मन् त्वं गा आ वर्तय। आकारोऽप्यनेनापि संबध्यते। मदभिमुखीः कुरु। स्तुत्या यागेन च ताः प्रसाद्योपनमयेत्यर्थः। हे गावः यूयमपि प्रसाद्यमाना आ निवर्तन। आनिवर्तध्वं। आभिमुख्येनागच्छत। पुनरप्याह। हे मदीयात्मन् त्वं नि वर्तय। गोसंचरणस्थानादपगच्छंतीर्गा इतोऽभिगंत्रीः कुरु। यूयमपि हे गावः निवर्त्यमानाः सत्यो निवर्तन। निवर्तध्वं। इदानीं स्वात्मा गावश्चर्षिं प्रति ब्रुवते। हे ऋषे अहं कुतो गा निवर्तयामीति कुतो वयं निवर्तयामह इत्यात्मना गोभिश्च पृष्टः सन्नाह। भूम्याः पृथिव्याश्चतस्रः प्रदिशश्चतुःसंख्यायुक्ताः प्रकृष्टा या दिशः संति ताभ्यो दिग्भ्य एना गा नि वर्तय। हे आत्मन् मदभिमुखीः कुरु। हे गावः यूयमपि ताभ्यो दिग्भ्यो निवर्तध्वमिति सामर्थ्याल्लभ्यं। यद्वा। अग्न्दैवतपक्षेऽपि सूक्तार्थो यथा घटते तथा योजना कर्तव्या॥ ॥१॥

भद्रमिति दशर्चं चतुर्थं सूक्तं। आद्यैकपदा दशाक्षरा विराट्। अग्निमीळे भुजामित्येषानुष्टुप् नवमी विराट् दशमी त्रिष्टुप् मध्ये षड्गायत्र्यः। इदमादीनां सप्तसूक्तानामिंद्रपुत्रः प्रजापतिपुत्रो वा विमद ऋषिर्वसुक्रपुत्रो वसुकृदाख्यो वा। इदमुत्तरं चाग्नेयं। तथा चानुक्रांतं। सप्तोत्तराण्यैंद्रो विमदः प्राजापत्यो वा वासुक्रो वसुकृद्वा भद्रं दशाग्नेयं तु गायत्रमाद्यैकपदा पाद एव वा शांत्यर्थः परानुष्टुबंत्ये विराट्त्रिष्टुभाविति॥ गतो विनियोगः॥

भद्रं नो अपि वातय मनः ॥१॥
भद्रं नो अपि वातय मनः ॥१॥

हे अग्ने त्वं नोऽस्माकं मनो भद्रं शुभयुक्तमपि वातय। अपिरत्र धात्वर्थानुवादी। आगमय। त्वत्संबंधिस्तोत्रकरणे प्रेरयेत्यर्थः॥

अग्निमीळे भुजां यविष्ठं शासा मित्रं दुर्धरीतुं।
यस्य धर्मन्त्स्व१रेनीः सपर्यंति मातुरूधः ॥२॥
अग्निं। ईळे। भुजां। यविष्ठं। शासा। मित्रं। दुःऽधरीतुं।
यस्य। धर्मन्। स्वः। एनीः। सपर्यंति। मातुः। ऊधः ॥२॥

भुजां हविर्भुजां देवानां मध्ये यविष्ठमह्न्यह्न्यग्निहोत्रादिकर्मार्थं जायमानत्वादतिशयेन युवानं शासानु-

शासनेन मित्रं। यस्मादिदं कर्तव्यमिदं न कर्तव्यमिति सर्वमनुशास्ति तस्मात्सर्वस्य मित्रभूतमित्यर्थः। दुर्धरीतुं दुर्धरणीयं संग्रामे शत्रुभिर्दुर्निवारणीयं एवंभूतमग्निमीळे। स्तौमि। अपि च यस्याग्नेर्धर्मन्धर्मण्यग्निहोत्रादिके कर्मणि स्वर्द्युलोकमादित्यं सर्वं देवजातं वेनीरेन्यः प्रतिगंत्र्य आहुतयः स्तुतयश्च सपर्यंति परिचरंति सेवंते। यद्वा। स्वः सपर्यंतीत्यनयोः सामानाधिकरण्यं। अत्र स्वरित्ययं सर्वशब्दो निपातः। स्वः सर्वे देवा एनीरात्मनः प्रतिगंत्रीराहुतीः स्तुतीश्च सपर्यंति सेवंते। उपजीवंतीत्यर्थः। तत्र दृष्टांतः। लुप्तोपममेतत्। मातुर्गोरूधः क्षीरोपसंहारस्थानं प्रति यथा वत्सा उपजीवंति तद्वत्। तमग्निमीळ इति पूर्वेण संबंधः॥

यमा॒सा कृ॒पनी॑ळं भा॒साके॑तुं व॒र्धयं॑ति। भ्राज॑ते॒ श्रेणि॑दन् ॥३॥

यं। आ॒सा। कृ॒पऽनी॑ळं। भा॒साऽके॑तुं। व॒र्धयं॑ति। भ्राज॑ते। श्रेणि॑ऽदन् ॥३॥

स्तोतारो यष्टारश्चासा स्तुतिहविर्लक्षणेनोपासनेन यमग्निं वर्धयंति। कीदृशं। कृपनीळं कर्मस्थानं। कर्माधारमित्यर्थः। भासाकेतुं ज्वालालक्षणज्ञापकं दीप्तेः कर्तारं वा। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। सोऽग्निः श्रेणिदन् स्तोतृभ्यो यष्टृभ्योऽभीष्टफलसमूहप्रदः शत्रुभ्यो ज्वालापंक्तिप्रदो वा एवंभूतः सन् भ्राजते। भासते॥

अ॒र्यो वि॒शां गा॒तुरे॑ति॒ प्र यदान॑ड्दि॒वो अंता॑न्। क॒वि॒र॒भ्रं दीद्या॑नः ॥४॥

अ॒र्यः। वि॒शां। गा॒तुः। ए॒ति॒। प्र। यत्। आन॑ट्। दि॒वः। अंता॑न्। क॒विः। अ॒भ्रं। दीद्या॑नः ॥४॥

विशां यजमानमनुष्याणामर्यो गंतव्यो गातुर्गमनशीलोऽग्निर्दीद्यानो दीप्यमानो यद्यदेति ऊर्ध्वं गच्छति तदा दिवो द्युलोकस्यांतान्पर्यंतान्कविर्मेधावी सोऽग्निः प्राणट्। प्रकर्षेण व्याप्नोति। अभ्रं मेघोपलक्षितमंतरिक्षं च व्याप्नोति॥

जु॒षद्ध॒व्या मानु॑षस्यो॒र्ध्वस्त॑स्था॒वृभ्वा॑ य॒ज्ञे। मि॒न्वन्त्सद्म॑ पु॒र ए॑ति ॥५॥

जु॒षत्। ह॒व्या। मानु॑षस्य। ऊ॒र्ध्वः। त॒स्थौ॒। ऋभ्वा॑। य॒ज्ञे। मि॒न्वन्। सद्म॑। पु॒रः। ए॒ति॒ ॥५॥

मानुषस्य यजमानस्य यज्ञे यजनीये यागे हव्या हव्यानि हवींषि जुषत्सेवमानोऽग्निर्ऋभ्वोरुभूतो बहुज्वालोपेत ऊर्ध्वस्तस्थौ। उत्तिष्ठति। ऊर्ध्वं ज्वलतीत्यर्थः। अपि चायमग्निः प्राग्वंशादारभ्य सद्म सदनं सौमिकीं वेदिं मिन्वन् परिच्छिंदन् पुरः पुरस्तादुत्तरवेदिशालामुखीयात्प्रणीयमानः सन्नेति। गच्छति॥

स हि क्षेमो॑ ह॒विर्य॒ज्ञः श्रु॒ष्टीद॑स्य गा॒तुरे॑ति। अ॒ग्निं दे॒वा वाशी॑मंतं ॥६॥

सः। हि। क्षेमः॑। ह॒विः। य॒ज्ञः। श्रु॒ष्टी। इत्। अ॒स्य॒। गा॒तुः। ए॒ति॒। अ॒ग्निं। दे॒वाः। वाशी॑ऽमंतं ॥६॥

य उक्तगुणविशिष्टोऽग्निः। हीत्येतदवधारणे। स एवाग्निः क्षेमः कुशलहेतुः। सर्वस्य परिपालनहेतुरित्यर्थः। हविः पुरोडाशादिकं च स एव हविषस्तन्निमित्तत्वात्। यज्ञो यागोऽपि स एव तस्यापि तद्धेतुत्वात्। किंच श्रुष्टीत् क्षिप्रमेवास्याग्नेर्गातुर्गमनशीलोऽधिष्ठात्रात्येति। देवानामाह्वानार्थं गच्छति। गत्वा च प्रत्यागच्छंतं वाशीमंतं स्तुतिलक्षणया वाचोपेतमग्निं प्रति देवा अपि गच्छंतीति शेषः॥ ॥२॥

य॒ज्ञा॒स॒हं॒ दुव॑ इषे॒ऽग्निं पूर्व॑स्य॒ शेव॑स्य। अद्रेः॑ सू॒नुमा॒युमा॑हुः ॥७॥

य॒ज्ञ॒ऽस॒हं॑। दुवः॑। इ॒षे॒। अ॒ग्निं। पूर्व॑स्य। शेव॑स्य। अद्रेः॑। सू॒नुं। आ॒युं। आ॒हुः॒ ॥७॥

यथैकवाक्यतायै यत्तच्छब्दावध्याहार्यौ । अपरार्धर्चः पूर्वं व्याख्येयः । आयुं देवानामाह्वानार्थं दूत्येन गंतारं यमग्निमद्रिः सूनुमश्मनः पुत्रमाहुः त्वमग्नस्त्वमश्मनस्परि । ऋ॰ २. १. १. । इत्येवमाद्यो मंत्रा वदंति । यज्ञसहं यागस्य वोढारं । धारयितारमित्यर्थः । तमग्निमभिलक्ष्य दुवः परिचरणमिषे । इच्छामि । किमर्थं । पूर्वस्य । अत्र पूर्वशब्द उत्कृष्टवाची । उत्कृष्टस्य शेवस्य स्वर्गापवर्गलक्षणसुखस्य प्राप्त्यर्थमिति शेषः ॥

नरो ये के चास्मदा विश्वेत्ते वाम आ स्युः । अग्निं हविषा वर्धंतः ॥८॥
नरः । ये । के । च । अस्मत् । आ । विश्वा । इत् । ते । वामे । आ । स्युरिति स्युः । अग्निं । हविषा । वर्धंतः ॥८॥

नरो नेतारो ये के च ये केचित्पुत्रपौत्रादयोऽस्मदस्माकं संति । आकारः पूरकः । ते पुत्रपौत्रादयो वामे वननीये संभजनीये विश्वेद्विश्वस्मिन्नेव पश्वादिधन आ स्युः । आ समंतान्नवेयुः । उपविशेयुरित्याशास्महे । किं कुर्वंतः । अग्निमंगनादिगुणविशिष्टं देवं हविषा पुरोडाशादिकेन वर्धंतो वर्धयंतः ॥

कृष्णः श्वेतोऽरुषो यामो अस्य ब्रध्न ऋज्र उत शोणो यशस्वान् ।
हिरण्यरूपं जनिता जजान ॥९॥
कृष्णः । श्वेतः । अरुषः । यामः । अस्य । ब्रध्नः । ऋज्रः । उत । शोणः । यशस्वान् ।
हिरण्यऽरूपं । जनिता । जजान ॥९॥

अत्र यच्छब्दमध्याहृत्य योज्यं । यामः । याति गच्छत्यस्मिन्निति यामो रथः प्रजापतिना निर्मितः । कीदृशः । कृष्णोऽसितवर्णः श्वेतः सितवर्णोऽरुष आरोचमानो ब्रध्नो महानृज्र ऋजुगाम्युतापि च शोणो रक्तवर्णो यशस्वान्कीर्तिमान् । यद्वा । यश इति धननाम । हविर्लक्षणेन धनेन युक्तः । हिरण्यरूपं सुवर्णसदृशं तं रथमस्याग्नेरर्थाय जनिता सर्वस्य जगतो जनयिता प्रजापतिर्जजान । जनयामास । अस्मै दत्तवानित्यर्थः । कथमेकस्यैव रथस्य कृष्णादिनानारूपत्वं संभवतीति चेत् अग्नेः सामर्थ्यातिशयेन संभवतीत्यर्थः । यद्वा । हिरण्यरूपमिति रथवाचिना शब्देन सह सामानाधिकरण्यात्कृष्णादिशब्दा द्वितीयांतत्वेन योज्याः । अत्र सर्वगुणोपेतरथवत्तयाग्निः स्तूयत इत्यर्थः ॥

एवा ते अग्ने विमदो मनीषामूर्जो नपादमृतेभिः सजोषाः ।
गिर आ वक्षत्सुमतीरियान इषमूर्जं सुक्षितिं विश्वमाभाः ॥१०॥
एव । ते । अग्ने । विऽमदः । मनीषां । ऊर्जः । नपात् । अमृतेभिः । सऽजोषाः ।
गिरः । आ । वक्षत् । सुऽमतीः । इयानः । इषं । ऊर्जं । सुऽक्षितिं । विश्वं । आ । अभारित्यभाः ॥१०॥

एवमुक्तप्रकारेण हे ऊर्जो नपादोषधिवनस्पतिपितृभूतस्यान्नस्य पौत्र हे अग्ने अमृतेभिरमृतैर्हविर्लक्षणैरन्नैः सजोषाः संगतो विमदो नामर्षिर्मनीषां प्रकृष्टां बुद्धिं कामयमानः संस्ते तुभ्यं गिरः स्तुतिलक्षणा वाच आ वक्षत् । आभिमुख्येनोक्तवान् ॥ वक्तेश्छंदसि लेटि रूपं ॥ ततस्त्वमेतज्ज्ञात्वा सुमतीरियानः शोभनलक्षणा बुद्धीः संगमयन्निषमन्नमूर्जं क्षीरादिकं रसं च सुक्षितिं शोभननिवासं । यद्वा । क्षितयो मनुष्याः । शोभनपुत्रपौत्रादिकं । यत्किंचिद्देयमस्ति तद्विश्वं धनं चाभाः । तस्मै विमदायाहर । देहि ॥ ॥३॥

अग्निं नेत्यष्टर्चं पंचमं सूक्तमास्तारपंक्तिच्छंदस्कं । आद्यौ गायत्रौ पादौ ततो द्वौ जागतौ सास्तारपंक्तिः । ऋषिदेवते पूर्ववत् । तथा चानुक्रांतं । अग्निं नाष्टावास्तारपांक्तमिति ॥ पृष्ठ्यस्य चतुर्थेऽहन्यग्निं न स्ववृक्तिभि-

रित्याज्यं । आ० ७.११.। इति ॥ महाव्रत आग्निमारुते यावतीष्वृक्ष्विळांदं साम स्तुवीरन् तदानीमाद्रित-स्तावत्य ऋचोऽनुरूपार्थाः । सूचितं च । यदीळांदं भूयसीषु चेत् स्तुवीरन्नाग्निं न स्ववृक्तिभिरिति तावतीर-नुरूपः । ऐ० आ० ५. ३. २.। इति ॥

आग्निं न स्ववृ॑क्तिभि॒र्होता॑रं त्वा वृणीमहे ।
य॒ज्ञाय॑ स्ती॒र्णब॑र्हिषे॒ वि वो॒ मदे॑ शी॒रं पा॑व॒कशो॑चिषं॒ विव॑क्षसे ॥१॥
आ । अ॒ग्निं । न । स्ववृ॑क्तिऽभिः । होता॑रं । त्वा॒ । वृ॒णी॒म॒हे॒ ।
य॒ज्ञाय॑ । स्ती॒र्णऽब॑र्हिषे । वि । व॒ः । मदे॑ । शी॒रं । पा॒व॒कऽशो॑चिषं । विव॑क्षसे ॥१॥

हे अग्ने वस्तव स्वभूते विमद एतदाख्य ऋषौ मदीयं स्तुतिः प्रवृत्तास्ति । नेति संप्रत्यर्थे । अतो वयमिदानीं स्ववृक्तिभिः स्वयंकृताभिर्दोषवर्जिताभिः स्तुतिभिर्होतारं देवानामाह्वातारं होमनिष्पादकं वाग्निं त्वा त्वामा वृणीमहे । आभिमुख्येन संभजामहे । किमर्थं । स्तीर्णबर्हिषे यज्ञाय ॥ तादर्थ्ये चतुर्थी ॥ यज्ञार्थं । कीदृशं । शीरमोषध्यादिषु सर्वत्रानुशायिनं पावकशोचिषं शोधकदीप्तिं । विवक्षसे । महन्नामैतत् । हे अग्ने त्वमपि महान्भवसि । यद्वा । विमदे यज्ञस्य संबंधिनः सोमस्य पानजन्यविविधमदार्थं त्वामावृणीमह इति योज्यं ॥

त्वामु॒ ते स्वा॒भुवः॑ शुं॒भंत्यश्व॑राधसः ।
वेति॒ त्वामु॑प॒सेच॑नी॒ वि वो॒ मद॒ ऋजी॑तिरग्न॒ आहु॑ति॒र्विव॑क्षसे ॥२॥
त्वां । ऊं॒ इति॑ । ते । सु॒ऽआ॒भुवः॑ । शुं॒भंति॑ । अश्व॑ऽराधसः ।
वेति॑ । त्वां । उ॒प॒ऽसेच॑नी । वि । व॒ः । मदे॑ । ऋजी॑तिः । अ॒ग्ने॒ । आऽहु॑तिः । विव॑क्षसे ॥२॥

स्वाभुवः स्वप्रकाशेन दीप्यमाना अश्वराधसो व्याप्तधनास्ते यजमाना हे अग्ने त्वामु त्वामेव शुंभंति । शोभयंति । यज्ञे हविर्भिर्दीपयंतीत्यर्थः । किंचोपसेचनी तवोपरिक्षरणशीलर्जीतिर्ऋजुगामिनी हूयमानाहु-तिर्हे अग्ने त्वां वेति । गच्छति । किमर्थं । वस्तव मदे मदनिमित्ते । तृप्त्यर्थमित्यर्थः । किंच त्वमपि विवक्षसे । महान्भवसि ॥

त्वे ध॒र्मा॑ण आसते जु॒हूभिः॑ सिं॒चती॑रिव ।
कृ॒ष्णा रू॒पाण्यर्जु॑ना॒ वि वो॒ मदे॒ विश्वा॒ अधि॒ श्रियो॑ धिषे॒ विव॑क्षसे ॥३॥
त्वे इति॑ । ध॒र्मा॑णः । आ॒स॒ते॒ । जु॒हूभिः॑ । सिं॒च॒तीःऽइ॑व ।
कृ॒ष्णा । रू॒पाणि॑ । अर्जु॑ना । वि । व॒ः । मदे॑ । विश्वाः॑ । अधि॑ । श्रियः॑ । धि॒षे॒ । विव॑क्षसे ॥३॥

धर्माणो यज्ञस्य धारयितार ऋत्विजो जुहूभिः संपूर्णाहुतिभिर्होमपात्रैस्त्वे त्वामेवासते । सेवंते । तत्र दृष्टांतः । सिंचतीरिव वृष्टिलक्षणाः पृथिवीं सिंचंत्य आप अग्निं यथा स्वपितृत्वेन सेवंते तद्वत् । अग्नेराप इति श्रुतेस्तस्यापां पितृत्वं । यद्वा । जुहूभिः सिंचतीरिव सिच्यमाना आहुतय इव धर्माणस्त्वया धार्यमाणा रश्मयस्त्वे त्वय्यासते । निवसंति । हे अग्ने त्वं कृष्णा कृष्णवर्णान्यर्जुनार्जुनानि श्वेतवर्णानि ज्वालांतर्गतरूपाणि च विश्वाः सर्वाः श्रियः शोभा अधि धिषे । अधिकं यथा भवति तथा धारयसि । किमर्थं । वो युष्माकं सर्वेषां देवानां विमदे विविधसोमपानजन्यमदार्थं । यत एवमतो विवक्षसे । त्वं महान्भवसि ॥

यमग्ने॒ मन्य॑से र॒यिं सह॑सावन्नमर्त्य ।
तमा नो॒ वाज॑सातये॒ वि वो॒ मदे॑ य॒ज्ञेषु॑ चि॒त्रमा भ॑रा॒ विव॑क्षसे ॥४॥

यं। अग्ने। मन्यसे। रयिं। सहसाऽवन्। अमर्त्य।
तं। आ। नः। वाजऽसातये। वि। वः। मदे। यज्ञेषु। चित्रं। आ। भर। विवक्षसे ॥४॥

हे अमर्त्यामरणधर्मन् सहसावन्बलवन् एवंभूत हे अग्ने त्वं यं रयिं मन्यसे सर्वेषु धनेषु यज्ञतं वरिष्ठमिति जानासि चित्रं चायनीयं तं रयिं नोऽस्माकं वाजसातयेऽन्नलाभाया भर। आहर। प्रयच्छ। किमर्थं। वो युष्माकं सर्वेषां देवानां यज्ञेषु विमदे विविधसोमादिहविर्जन्यमदनिमित्ते। यागेषु नानाप्रकारैर्हविर्भिर्युष्माकं तर्पणायेत्यर्थः। त्वमपि विवक्षसे। महान्भवसि ॥

अग्निर्जातो अथर्वणा विदद्विश्वानि काव्या।
भुवद्दूतो विवस्वतो वि वो मदे प्रियो यमस्य काम्यो विवक्षसे ॥५॥
अग्निः। जातः। अथर्वणा। विदत्। विश्वानि। काव्या।
भुवत्। दूतः। विवस्वतः। वि। वः। मदे। प्रियः। यमस्य। काम्यः। विवक्षसे ॥५॥

अथर्वणैतन्नाम्नर्षिणा जातो जनितोऽग्निः। कथं अवगम्यते। त्वामग्ने पुष्करादध्यथर्वा निरमंथत। ऋ॰ ६. १६. १३.। इति मंत्रांतरात्। विश्वानि समस्तानि काव्या काव्यानि स्तोतृकर्माणि विदत्। वेत्ति। विवस्वतो यजमानस्य दूतो देवानामाह्वानार्थं भुवत्। भवति। किंच यमस्य संयंतुर्यजमानस्य प्रिय इष्टः सन् काम्यः कमनीयः प्रार्थनीयो भवतीत्यर्थः। शिष्टं स्पष्टं ॥　॥४॥

त्वां यज्ञेष्वीळतेऽग्ने प्रयत्यध्वरे।
त्वं वसूनि काम्या वि वो मदे विश्वा दधासि दाशुषे विवक्षसे ॥६॥
त्वां। यज्ञेषु। ईळते। अग्ने। प्रऽयति। अध्वरे।
त्वं। वसूनि। काम्या। वि। वः। मदे। विश्वा। दधासि। दाशुषे। विवक्षसे ॥६॥

हे अग्ने त्वां प्रयति प्रकर्षेण गच्छति प्रवर्तमानेऽध्वरे यागे यज्ञेषु यजनीयेषु हविःष्वासन्नेषु सत्स्वीळते। ऋत्विग्यजमानाः स्तुवंति। अपि च हे अग्ने त्वं विश्वा विश्वानि काम्या काम्यानि कमनीयानि वसूनि धनानि दाशुषे हविर्दत्तवते यजमानाय विमदे सोमादिहविर्जन्यतृप्तौ सत्यां दधासि। प्रयच्छसि। अतः कारणाद्विवक्षसे। त्वं महान्भवसि ॥

त्वां यज्ञेष्वृत्विजं चारुमग्ने नि षेदिरे।
घृतप्रतीकं मनुषो वि वो मदे शुक्रं चेतिष्ठमक्षभिर्विवक्षसे ॥७॥
त्वां। यज्ञेषु। ऋत्विजं। चारुं। अग्ने। नि। सेदिरे।
घृतऽप्रतीकं। मनुषः। वि। वः। मदे। शुक्रं। चेतिष्ठं। अक्षऽभिः। विवक्षसे ॥७॥

हे अग्ने त्वां मनुष्या यजमाना यज्ञेषु यागेषु नि षेदिरे। नियमेन स्थापयंति। कीदृशं। ऋत्विजं होतृनामकं चारुं रमणीयं घृतप्रतीकमाज्याक्तपूर्णमुखं शुक्रं ज्वलंतमक्षभिर्व्याप्तैस्तेजोभिश्चेतिष्ठमतिशयेन ज्ञातारं। किमर्थं। वि वो मदे तव सोमादिहविर्जन्यविविधतृप्त्यर्थं। यस्मादेवं तस्माद्विवक्षसे। महान्भवसि ॥

अग्ने शुक्रेण शोचिषोरु प्रथयसे बृहत्।
अभिक्रंदन्वृषायसे वि वो मदे गर्भं दधासि जामिषु विवक्षसे ॥८॥

अग्ने। शुक्रेण। शोचिषा। उरु। प्रथयसे। बृहत्।
अभिऽक्रंदन्। वृषऽयसे। वि। वः। मदे। गर्भं। दधासि। जामिषु। विवक्षसे ॥८॥

हे अग्ने बृहन्महांस्त्वं शुक्रेण दीप्तेन शोचिषा तेजसोरु प्रथयसे। विस्तीर्णं यथा भवति तथा प्रख्यातो भवसि। किंचाभिक्रंदन्नाभिमुख्येन युद्धार्थं शत्रूनाह्वयन् वृषायसे। वृष इवाचरसि। युद्धकाले दर्पितवृष इव रोरवन्नवसीत्यर्थः। त्वं माध्यमिकः सञ्जामिषु भगिनीभूतास्वोषधीषु गर्भं बीजलक्षणं दधासि। वृष्टिद्वारेण धारयसि। एकस्मात्प्रजापतेः सकाशादुद्भूतत्वादग्न्योषध्योर्जामित्वमुपचर्यते। कस्मिन्सति। वि वो मदे तव विविधसोमादिहविर्जन्यमदे संजाते सति। यस्मादेवं कृतवानसि तस्मात्त्वं विवक्षसे। महान्भवसि॥ विवक्षस इति महन्नाम वक्तेर्वा वहतेर्वा सनंतस्य रूपमिति॥ ॥५॥

कुहेति पंचदशर्चं षष्ठं सूक्तमैंद्रं। पंचदशी त्रिष्टुप् पंचमीसप्तमीनवम्यस्तिस्रोऽनुष्टुभः शिष्टाः पुरस्ताद्बृहत्यः। आद्यद्वादशकात्र्यष्टकवती पुरस्ताद्बृहती। पूर्ववदृषिः। तथा चानुक्रांतं। कुह पंचोना पुरस्ताद्बार्हतं त्रिष्टुबंतं त्वं त्या चिदा नस्त्वं नोऽनुष्टुभ इति॥ चतुर्थेऽहनि निष्केवल्य एतत्सूक्तं। सूचितं च। कुह श्रुत इंद्रो युध्मस्य त इति निष्केवल्यं। आ॰ ७. ११.। इति॥

कुह श्रुत इंद्रः कस्मिन्नद्य जने मित्रो न श्रूयते।
ऋषीणां वा यः क्षये गुहा वा चर्कृषे गिरा ॥१॥
कुह। श्रुतः। इंद्रः। कस्मिन्। अद्य। जने। मित्रः। न। श्रूयते।
ऋषीणां। वा। यः। क्षये। गुहा। वा। चर्कृषे। गिरा ॥१॥

अद्यास्मिन्दिन इंद्रः कुह कुत्र स्थाने श्रुतो विश्रुतः प्रख्यातः। कस्मिञ्जने यजमाने इज्यत्वेन स्तुत्यत्वेनावस्थितः श्रूयते। प्रख्यायते। तत्र दृष्टांतः। मित्रो न सूर्य इव सखेव वा तद्वत्। य इंद्र ऋषीणां भृग्वादीनां क्षये निवास आश्रमे गुहा वा गुहायामरण्ये वा गिरा स्तुतिलक्षणया वाचा चर्कृषे अत्यर्थमाकृष्यते। अत्यर्थं स्तूयत इत्यर्थः। स इंद्रः कुह श्रुत इति पूर्वेण संबंधः॥

इह श्रुत इंद्रो अस्मे अद्य स्तवे वज्र्यृचीषमः।
मित्रो न यो जनेष्वा यशश्चक्रे असाम्या ॥२॥
इह। श्रुतः। इंद्रः। अस्मे इति। अद्य। स्तवे। वज्री। ऋचीषमः।
मित्रः। न। यः। जनेषु। आ। यशः। चक्रे। असामि। आ ॥२॥

इहास्मिन्यज्ञ इंद्रः श्रुतः प्रख्यातः। अद्यास्मिन्दिवस अस्मे अस्माभिः स्तवे। स्तूयते। कीदृशः। वज्री वज्रवान् ऋचीषमः। यद्याव इंद्र ते शतं शतं भूमीरुत स्युः न त्वा वज्रिन्। ऋ॰ ८.७०.५.। इत्यादिकया स्तुत्या समानगुण इत्यर्थः। य इंद्रो मित्रो न सूर्य इव स्निग्ध इव वा जनेषु स्तोतृजनेषु यशोऽन्नं कीर्तिं वा चक्रे करोति। कीदृशं। असाम्यसाधारणं। स इंद्रोऽस्माभिः स्तूयत इति पूर्वेण संबंधः॥

महो यस्पतिः शवसो असाम्या महो नृम्णस्य तूतुजिः।
भर्ता वज्रस्य धृष्णोः पिता पुत्रमिव प्रियं ॥३॥
महः। यः। पतिः। शवसः। असामि। आ। महः। नृम्णस्य। तूतुजिः।
भर्ता। वज्रस्य। धृष्णोः। पिता। पुत्रंऽइव। प्रियं ॥३॥

य इंद्रो महो महतः शवसो बलस्य पतिरीश्वरोऽसाम्या। आश्चर्यादायां। आ समाप्तिः। अनंतगुण

इत्यर्थः। मह्नो महतो नृम्णस्य धनस्य च तुतुजिः स्तोतृभ्यः प्रेरकः। किंच धृष्णोः शत्रूणां धर्षकस्य वज्रस्य स्वकीयस्यायुधस्य भर्ता य इंद्रो धारयिता। स इंद्रोऽस्मान्पालिति शेषः। तत्र दृष्टांतः। पिता पुत्रमिव प्रियं यथा पितेप्सितं सुतं पाति तद्वत्॥

युजानो अश्वा वातस्य धुनी देवो देवस्य वज्रिवः।
स्यंता पथा विरुक्मता सृजानः स्तोष्यध्वनः॥४॥
युजानः। अश्वा। वातस्य। धुनी इति। देवः। देवस्य। वज्रिऽवः।
स्यंता। पथा। विरुक्मता। सृजानः। स्तोषि। अध्वनः॥४॥

हे वज्रिवो वज्रवन्निंद्र॥ एको मत्वर्थीयोऽनुवादकः॥ देवो द्योतमानस्त्वं देवस्य द्योतमानस्य वातस्य वायोर्धुनी प्रेरकौ। वायोरपि शीघ्रगामिनावित्यर्थः। अश्वाश्वौ त्वदीयौ हरिनामकौ युजानः स्वरथे संयोजयन्। कीदृशौ। विरुक्मता विरोचनवता पथा मार्गेण स्यंता स्यंतौ गच्छंतौ। अध्वनो युद्धे गमनमार्गान्सृजान उत्पादयन् स्तोषि। सततं स्तूयसे॥

त्वं त्या चिद्वातस्याश्वागा ऋज्रा त्मना वहध्यै।
ययोर्देवो न मर्त्यो यंता नकिर्विदाय्यः॥५॥
त्वं। त्या। चित्। वातस्य। अश्वा। आ। अगाः। ऋज्रा। त्मना। वहध्यै।
ययोः। देवः। न। मर्त्यः। यंता। नकिः। विदाय्यः॥५॥

यच्छब्दसंबंधादुत्तरोऽर्धर्चः पूर्वं व्याख्यायते। ययोस्त्वदीययोर्यंता नियंता निवारयिता देवो न देवानां मध्ये कश्चिदपि देवो नास्ति मर्त्यो मनुष्याणां मध्ये कश्चिदपि नास्ति नकिर्न कश्चिदपि विदाय्यो वेत्ता। अवस्य बलस्येति वा शेषः। हे इंद्र त्वं वातस्य वायोर्बलेन जवेन च युक्तावृज्रर्जुगामिनौ त्या चित्तावप्यश्वा त्वदीयावश्वौ त्मनात्मनैव। सारथिनिरपेक्षेणेत्यर्थः। वहध्यै वहनार्थं। अभिप्रेतदेशप्रापणायेत्यर्थः। आगाः। आभिमुख्येन गच्छसि॥ ॥६॥

अध ग्मंतोशना पृच्छते वां कदर्था न आ गृहं।
आ जग्मथुः पराकाद्दिवश्च ग्मश्च मर्त्यं॥६॥
अध। ग्मंता। उशना। पृच्छते। वां। कत्ऽअर्था। नः। आ। गृहं।
आ। जग्मथुः। पराकात्। दिवः। च। ग्मः। च। मर्त्यं॥६॥

अधाथ यज्ञसमाप्त्यनंतरमुशना भार्गव ऋषिर्हि इंद्राग्नी ग्मंता स्वस्थानं प्रति गच्छंतौ वां युवां पृच्छते। पृच्छति स्म। यद्वा। उशनेति विभक्तिव्यत्ययः। उशनसमिंद्रस्य सखिभूतं भार्गवमिंद्रं च युवां सर्वो यजमानः पृच्छति। किं पृष्टवानिति उच्यते। युवां कदर्था कदर्थौ किंप्रयोजनवंतौ संतौ नोऽस्मदीयं। आकारः प्रतीत्यर्थः। गृहं प्रति पराकात्। दूरनामैतत्। दूराद्वा जग्मथुः। आगतवंतौ स्थः। तदेवोक्तं। दिवश्च द्युलोकाच्च ग्मश्च भूलोकाच्च मर्त्यं मनुष्यं मां प्रत्यागतवंतौ। युवयोः कृतार्थत्वादत्रागमनमस्मदनुग्रहार्थमेव न स्वार्थमिति ब्रुवन्ननुव्रजतीत्यर्थः॥

आ नं इंद्र पृक्षसेऽस्माकं ब्रह्मोद्यतं। तत्त्वा याचामहेऽवः शुष्णं यद्धन्नमानुषं॥७॥
आ। नः। इंद्र। पृक्षसे। अस्माकं। ब्रह्म। उत्ऽयतं। तत्। त्वा। याचामहे। अवः।
शुष्णं। यत्। हन्। अमानुषं॥७॥

हे इंद्र त्वं । न इति तृतीयार्थे षष्ठी । नोऽस्माभिर्हवतमुत्क्षिप्तं । दत्तमित्यर्थः । अस्माकमस्मदीयं ब्रह्म हविर्लक्षणमन्नं । आङ्मर्यादायां । आ तृप्तेरित्यर्थः । पृचसे । आत्मना संपर्चय ॥ पृची संपर्के इति धातो रूपं ॥ आभक्षयेत्यर्थः । किंच वयमपि त्वेवंभूतं त्वां तत् । यदुत्कृष्टमस्तीति शेषः । तत्ताकृशमन्नमवस्तद्रक्षणं च याचामहे । प्रार्थयामहे । तथा यच्छुष्णं बलं घामानुषं मनुष्यादन्यं राक्षसादिकं हन् हंति तदुत्कृष्टं बलं च याचामहे । यद्वा । हे इंद्र त्वं शुष्णमेतन्नामानममानुषं मनुष्यव्यतिरिक्तमसुरं हन् । हतवानसि । हत्वा च यद्येन रक्षणेन त्रैलोक्यं पालितवानसि तदवः पालनमस्माकमपि भवेदिति त्वां याचामह इति वाक्यार्थः ॥

अकर्मा दस्युरभि नो अमंतुरन्यव्रतो अमानुषः ।
त्वं तस्यामित्रहन्वधर्दासस्य दंभय ॥ ८ ॥
अकर्मा । दस्युः । अभि । नः । अमंतुः । अन्यऽव्रतः । अमानुषः ।
त्वं । तस्य । अमित्रऽहन् । वधः । दासस्य । दंभय ॥ ८ ॥

अकर्माविद्यमानयागादिकर्मा दस्युरुपक्षपयिताभ्याभिमुख्येन स्वरूपतो नोऽस्मानमंतुरज्ञाता । यद्वा । अत्रावित्युपसर्गस्य वकारलोपो द्रष्टव्यः । अवमंतुरवमंताभिभविता । अन्यव्रतः श्रुतिस्मृतिव्यतिरिक्तकर्मामानुषो मनुष्यसंव्यवहाराद्बाह्यः । असुरप्रकृतिरित्यर्थः । य एवंभूतोऽस्ति हे अमित्रहञ्छत्रूणां हंतरिंद्र त्वं दासस्योपक्षपयितव्यस्य वधर्हंता सन् दंभय । तं शत्रुं हिंधि ॥

त्वं न इंद्र शूर शूरैरुत त्वोतासो बर्हणा ।
पुरुत्रा ते वि पूर्तयो नवंत क्षोणयो यथा ॥ ९ ॥
त्वं । नः । इंद्र । शूर । शूरैः । उत । त्वाऽऊतासः । बर्हणा ।
पुरुऽत्रा । ते । वि । पूर्तयः । नवंत । क्षोणयः । यथा ॥ ९ ॥

हे शूर विक्रांतेंद्र त्वं शूरैर्भटैर्मरुद्भिः सहितः सन्नोऽस्मान् पाहीति शेषः । उतापि च त्वोतासस्त्वया रक्षिता वयं बर्हणा परिबर्हणायां शत्रूणां हिंसायां समर्था भवेम । किंच ते त्वदीयाः पूर्तयः कामानां पूरणानीप्सितार्थप्रदानानि पुरुत्रा बहून्स्तोतॄन्वि नवंत । विविधं व्याप्नुवंति । क्षोणयः । मनुष्यनामैतत् । मनुष्याः स्वकीयं स्वामिनं सेवार्थं यथा व्याप्नुवंति तद्वत् ॥

त्वं तान्वृत्रहत्ये चोदयो नॄन्कार्पाणे शूर वज्रिवः ।
गुहा यदी कवीनां विशां नक्षत्रशवसां ॥ १० ॥
त्वं । तान् । वृत्रऽहत्ये । चोदयः । नॄन् । कार्पाणे । शूर । वज्रिऽवः ।
गुहा । यदि । कवीनां । विशां । नक्षत्रऽशवसां ॥ १० ॥

हे वज्रिवो वज्रधर शूरेंद्र त्वं कार्पाणे । असिः कृपाणः । तेन साध्यं युद्धं कार्पाणं । तस्मिन्वृत्रहत्ये शत्रुहननार्थं नॄन्नरांस्तान्प्रसिद्धान्मरुद्गणांश्चोदयः । चोदयसि । प्रेरयसि । यदि यदा त्वं कवीनां मेधाविनां नक्षत्रशवसां देवान्प्रतिगच्छत्स्तोतृबलानां विशां स्तोतृजनानां संबंधीनि गुहा गूढानि गुणैः संवृतानि स्तोत्राणि शृणोषीति शेषः । तदा प्रेरयसीति पूर्वेणान्वयः ॥ ॥ ७ ॥

मक्षू ता त इंद्र दानाप्नस आक्षाणे शूर वज्रिवः ।
यद्ध शुष्णस्य दंभयो जातं विश्वं सयावभिः ॥ ११ ॥

मक्षु । ता । ते । इंद्र । दानऽअप्नसः । आक्षाणे । शूर । वज्रिऽवः ।
यत् । ह । शुष्णस्य । दंभयः । जातं । विश्वं । सयावऽभिः ॥११॥

हे शूर विक्रांत वज्रिवो वज्रोपेतेंद्र दानाप्नसो दानकर्मणः । स्तोतृभ्यः सततमभीष्टफलप्रदस्येत्यर्थः । ते तव स्वभूतानि मक्षु क्षिप्राण्यविलंबितानि । क्षिप्रकारणयुक्तानीत्यर्थः । आक्षाणे योद्धृभिर्व्याप्यमाने त्वय्यवस्थितानि ता तानि कर्माणि स्तोतारः स्तुवंतीति शेषः । सयावभिः सहयातृभिर्मरुद्भिः सहितस्त्वं शुष्णस्यासुरस्य विश्वं जातं सर्वमपत्यजातं दंभयः । अदंभयः । हिंसितवानसि । यद्ध । एवमादीनि यानि खलु कर्माणि संति तानि स्तुवंतीति पूर्वेण संबंधः ॥

माकुध्र्यगिंद्र शूर वस्वीरस्मे भूवन्नभिष्टयः ।
वयंवयं त आसां सुम्ने स्याम वज्रिवः ॥१२॥
मा । अकुध्र्यक् । इंद्र । शूर । वस्वीः । अस्मे इति । भूवन् । अभिष्टयः ।
वयंऽवयं । ते । आसां । सुम्ने । स्याम । वज्रिऽवः ॥१२॥

हे शूर विक्रांतेंद्र अस्मे अस्माकं स्वभूता वस्वीर्महत्योऽभिष्टय आभिमुख्येष्टय इच्छाः । यद्वा । आभिमुख्येच्छा अभीप्सितप्रार्थनाः । कुध्र्यक् कुत्सिताः । विफला इत्यर्थः । मा भूवन् । किंतर्हि हे वज्रिवो वज्रिन्निंद्र ते तव प्रसादाद्वयंवयमृत्विग्यजमानाः । द्विर्वचनमतित्वराप्रदर्शनार्थं । आसामिच्छानामिच्छानां वा संबंधिनि सुम्ने सुखेऽवस्थिताः स्याम । भवेम । वयमभिष्टिजन्येन दृष्टादृष्टसुखेन युक्ताः शीघ्रं भवेमेत्याशास्महे इत्यर्थः ॥

अस्मे ता त इंद्र संतु सत्याहिंसंतीरुपस्पृशः ।
विद्याम यासां भुजो धेनूनां न वज्रिवः ॥१३॥
अस्मे इति । ता । ते । इंद्र । संतु । सत्या । अहिंसंतीः । उपऽस्पृशः ।
विद्याम । यासां । भुजः । धेनूनां । न । वज्रिऽवः ॥१३॥

हे इंद्र अस्मे अस्माकं स्वभूताः ॥ ता सत्येत्युभयत्र प्रथमाबहुवचनस्य छांदस आकारः सति निर्देश्यस्याविशेषणत्वात् ॥ ता तास्तादृश्य उपस्पृशः । त्वामुपगम्य स्पृशंतीत्युपस्पृशः स्तुतयः । ते तव प्रसादात्सत्या सत्याः संतु । यथार्था भवंतु । तव सद्गुणग्राहिण्य इत्यर्थः । अपि चाहिंसंतीस्त्वामहिंसत्यश्च भवंतु । सत्स्तुतित्वादनुद्वेजयंत्यश्च भवंत्वित्यर्थः । हे वज्रिव इंद्र यासां स्तुतीनां संबंधिनो भुजो दृष्टादृष्टाभोगान्विद्याम वयं लभेमहि । तत्र दृष्टांतः । धेनूनां न गवां क्षीरादिभोगान्यथा गोस्वामी लभते तद्वत् । ताः सत्या भवंत्विति पूर्वेणान्वयः ॥

अहस्ता यदपदी वर्धत क्षाः शचीभिर्वेद्यानां ।
शुष्णं परि प्रदक्षिणिद्विश्वायवे नि शिश्नथः ॥१४॥
अहस्ता । यत् । अपदी । वर्धत । क्षाः । शचीभिः । वेद्यानां ।
शुष्णं । परि । प्रऽदक्षिणित् । विश्वऽआयवे । नि । शिश्नथः ॥१४॥

हे इंद्र यद्यदा क्षा भूमिरहस्ता पाणिरहितापदी चरणवर्जिता च । अमनुष्यकर्मकेत्यर्थः । वेद्यानां लोचयोग्यानां त्वत्प्रभृतीनां देवानां संबंधिभिः शचीभिः कर्मभिर्वर्धत अवर्धत । धनधान्यादिभिः समृद्धेत्यर्थः । तदा त्वं परि प्रदक्षिणिदेवंभूतां पृथिवीं परिवेष्ट्य प्रदक्षिणं यथा भवति तथा स्थितं शुष्णमसुरं विश्वायवे । तादर्थ्ये चतुर्थी । सर्वत्राप्रतिहतगामिन एतदाख्यस्यौर्वशेयराज्ञोऽर्थाय नि शिश्नथः । नितरां ताडितवानसि ।

यद्वा । यदा शुष्णस्याच्छादनार्थं हस्तपादवर्जिता काचित्पृथिवी वेदितव्यानामसुराणां मायारूपैः कर्मभिः शुष्णमसुरं परिवेष्ट्य प्रदक्षिणं यथा भवति तथावस्थितावर्धत तदानीं तां मायोत्पादितां पृथिवीं विश्वायवे सर्वव्यापकस्य मरुद्गणस्य प्रवेशनार्थं नि शिश्नथः ॥

पिबापिबेदिंद्र शूर सोमं मा रिषण्यो वसवान वसुः सन् ।
उत त्रायस्व गृणतो मघोनो महश्च रायो रेवतस्कृधी नः ॥१५॥
पिबऽपिब । इत् । इंद्र । शूर । सोमं । मा । रिषण्यः । वसवान । वसुः । सन् ।
उत । त्रायस्व । गृणतः । मघोनः । महः । च । रायः । रेवतः । कृधि । नः ॥१५॥

पिबपिबेति वीप्सातित्वराप्रदर्शनार्थं । हे शूर वीरेंद्र त्वमभिषुतं सोमं शीघ्रं पिब । यागकालातिपातो यावन्न भवति तावच्छीघ्रं सोमं पिबेत्यर्थः । इदिति पूरणः । हे वसवान वसूनां धनानामानेतः त्वं वसुः प्रशस्तः सन्मा रिषण्यः । यागकालातिक्रमजातेन दोषेणास्मान्मा हिंसीः । प्रशस्तस्य तव कर्मवैगुण्यकरणेन हिंसितुमयुक्तमित्यर्थः । उतापि च हे इंद्र त्वं गृणतस्त्वां स्तुवतः स्तोतॄन्मघोनो हविर्लक्षणधनवतो यजमानांश्च त्रायस्व । प्रमादजनितकर्मवैगुण्यदोषात्पालयस्व । किंच । महश्च राय इत्युभयत्र तृतीयार्थे षष्ठी । महो महता रायो धनेन च नोऽस्मान्रेवतः कृधि । धनवतः कुरु ॥ ॥८॥

यजामह इति सप्तर्चं सप्तमं सूक्तं । प्रथमासप्तम्यौ त्रिष्टुभौ । पंचम्यभिसारिणी । द्विर्दशकाद्विर्द्वादशकवतीत्यभिसारिणीत्युच्यते । शिष्टास्चतस्रो जगत्यः । पूर्ववदृषिदेवते । तथा चानुक्रांतं । यजामहे सप्ताद्यांत्ये त्रिष्टुभौ पंचम्यभिसारिणीति ॥ चतुर्थेऽहनि माध्यंदिनसवने तृतीयापंचम्योरावर्तनेन त्रींस्तृचान् होत्रका एकैकं तृचमावपेरन् । सूत्रितं च । यजामह इंद्रं वज्रदक्षिणमिति द्वितीयानेवमेव । आ॰७.११. । इति ॥

यजामह इंद्रं वज्रदक्षिणं हरीणां रथ्यं१ विव्रतानां ।
प्र श्मश्रु दोधुवदूर्ध्वथा भूद्वि सेनाभिर्दयमानो वि राधसा ॥१॥
यजामहे । इंद्रं । वज्रऽदक्षिणं । हरीणां । रथ्यं । विऽव्रतानां ।
प्र । श्मश्रु । दोधुवत् । ऊर्ध्वऽथा । भूत् । वि । सेनाभिः । दयमानः । वि । राधसा ॥१॥

वयमिंद्रं यजामहे । सोमलक्षणैर्हविर्भिः पूजयामः । कीदृशं । वज्रदक्षिणं शत्रुवधाय सततं वज्रो दक्षिणे हस्ते यस्य तं विव्रतानां रथवहनादिविविधकर्मणां हरीणामेतत्संज्ञकानामश्वानां रथ्यमानेतारं । स इंद्रः सोमपानानंतरं श्मश्रु स्वकीयानि श्मश्रूणि दोधुवत् पुनःपुनर्धुन्वानः सन्नूर्ध्वथोर्ध्वं प्र भूत् । प्रादुरभूत् । किंच सेनाभिर्मरुदादिस्वकीयैः सैन्यैर्वि दयमानो विविधं शत्रून्हिंसन्राधसा । द्वितीयार्थे तृतीया । राधो धनं । वीत्युपसर्गश्रुतेर्योग्यक्रियाध्याहारः । विविधं स्तोतृभ्यो ददाति ॥

हरी न्वस्य या वने विदे वस्विंद्रो मघैर्मघवा वृत्रहा भुवत् ।
ऋभुर्वाज ऋभुक्षाः पत्यते शवोऽव क्ष्णौमि दासस्य नाम चित् ॥२॥
हरी इति । नु । अस्य । या । वने । विदे । वसु । इंद्रः । मघैः । मघऽवा । वृत्रऽहा । भुवत् ।
ऋभुः । वाजः । ऋभुक्षाः । पत्यते । शवः । अव । क्ष्णौमि । दासस्य । नाम । चित् ॥२॥

अस्येंद्रस्य संबंधिनौ या यौ हरी अश्वौ वने । वन्यंते संभज्यंतेऽस्मिन्देवा इति वनं यज्ञोऽरण्यं वा । तस्मिन्वस्तृजीषलक्षणं धनं यवसलक्षणं वा नु क्षिप्रं विदे विंदेते लभेते । यद्वा । यौ हरी अस्येंद्रस्य वने संभजनार्थं वसु वसुनो लाभाय क्षिप्रं भवत इति शेषः । ताभ्यां हरिभ्यां मघैर्धनैर्मघवान्धनवानिंद्रो वृत्रहा

वृत्राख्यस्यासुरस्य मेघस्य वा हंता भुवत्। भवति। अपि चर्भृदीप्तो वाजो बलवानृभुक्षा महानिंद्रः शवः शवसो बलस्य धनस्य वा पत्यते। ईष्टे। यद्वा। शत्रूणां बलं प्रति पत्यते। प्रतिपद्यते। गच्छति। अहमपि तस्य प्रसादाद्दासस्योपक्षपयितव्यस्य शत्रोर्नाम चित्। नम्यतेऽनेनेति नाम शिरः। तदप्यव वृणामि। अवहन्मि। किमुतान्यदंगं। अथवा। नामधेयमपि नाशयामि किमुत शत्रुं॥

यदा वज्रं हिरण्यमिदथा रथं हरी यमस्य वहतो वि सूरिभिः।
आ तिष्ठति मघवा सनश्रुत इंद्रो वाजस्य दीर्घश्रवसस्पतिः॥३॥

यदा। वज्रं। हिरण्यं। इत्। अथ। रथं। हरी इति। यं। अस्य। वहतः। वि। सूरिऽभिः।
आ। तिष्ठति। मघऽवा। सनऽश्रुतः। इंद्रः। वाजस्य। दीर्घऽश्रवसः। पतिः॥३॥

यदेंद्रो हिरण्यं हितरमणीयं वज्रं स्वकीयमायुधं शत्रुहननाय गृह्णातीति शेषः। इदिति पूरणः। अथ तदानीमस्येंद्रस्य हरी अश्वौ यं रथं वहतः गंतृप्रदेशं विशेषेण प्रापयतः मघवा धनवानिंद्रः सूरिभिः स्तोतृभिः कुत्सादिभिः सह तं रथमा तिष्ठति। आरोहति। कीदृशः। सनश्रुतश्चिरप्रख्यातः। जगति स्वभावत एव विख्यात इत्यर्थः। दीर्घश्रवसो बहुकीर्तेर्वाजस्यान्नस्य पतिः स्वामी। एवंभूत इंद्रस्तं रथमारोहतीत्यर्थः॥

सो चिन्नु वृष्टिर्यूथ्या३ स्वा सचाँ इंद्रः श्मश्रूणि हरिताभि प्रुष्णुते।
अव वेति सुक्षयं सुते मधूदिद्धूनोति वातो यथा वनं॥४॥

सो इति। चित्। नु। वृष्टिः। यूथ्या। स्वा। सचा। इंद्रः। श्मश्रूणि। हरिता। अभि। प्रुष्णुते।
अव। वेति। सुऽक्षयं। सुते। मधु। उत्। इत्। धूनोति। वातः। यथा। वनं॥४॥

तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः। या महती वृष्टिरस्ति सो सा वृष्टिर्नु क्षिप्रं। चिदित्युपमार्थे। यथा सर्वं सिंचति तथेंद्रः स्वा स्वानि यूथ्या यूथानि मरुदादिगणलक्षणानि सचा सह स्वानि श्मश्रूणि च हरिता हरिद्वर्णेन सोमेनाभि प्रुष्णुते॥ प्रुष प्लुष स्नेहनसेचनपूरणेष्विति धातुः॥ आभिमुख्येन स्थित्वा क्षिप्रं सिंचति। सोमं पाययति पिबति चेत्यर्थः। अपि च सुक्षयं शोभनं यज्ञगृहमव वेति। अभिगच्छति। गत्वा च सुते सोमेऽभिषुते सति मधु मधुररसोपेतं सोमं पीत्वा। मत्तः सन्निति शेषः। उदिद्धूनोति। स्वशरीरमुत्कंपयति। तत्र दृष्टांतः। वातो वायुर्यथा वनं वृक्षसमूहमुत्कंपयति तद्वत्॥

यो वाचा विवाचो मृध्रवाचः पुरू सहस्राशिवा जघान।
तत्तदिदस्य पौंस्यं गृणीमसि पितेव यस्तविषीं वावृधे शवः॥५॥

यः। वाचा। विऽवाचः। मृध्रऽवाचः। पुरु। सहस्रा। अशिवा। जघान।
तत्ऽतत्। इत्। अस्य। पौंस्यं। गृणीमसि। पिताऽइव। यः। तविषीं। ववृधे। शवः॥५॥

य इंद्रो वाचा वाङ्मात्रेणैव विवाचो विविधवाचः स्वशत्रून् मृध्रवाचो हिंसितवाचः। हत्वेति शेषः। पुरु पुरूणि बहून्यशिवाशिवान्यसुखकराणि। दुःखकराणीत्यर्थः। सहस्रा शत्रूणां सहस्राणि जघान हंति। अपि च यश्चेंद्रः पितेव यथा पिता पुत्रस्य तविषीं बलमन्नप्रदानैर्ववृधे वर्धयति तथा वृष्टिद्वारेण सर्वस्य जगतः शवो बलं ववृधे वर्धयति अस्येंद्रस्य तत्तदित्तत्तदेव पौंस्यं बलं गृणीमसि। वयं स्तुमः। इंद्रो येन येन बलेन शत्रून्हंति तस्य तत्तद्बलं वयं स्तुम इत्यर्थः॥

स्तोमं त इंद्र विमदा अजीजनन्नपूर्व्यं पुरुतमं सुदानवे।
विद्मा ह्यस्य भोजनमिनस्य यदा पशुं न गोपाः करामहे॥६॥

स्तोमं। ते। इंद्र। विऽमदाः। अजीजनन्। अपूर्व्यं। पुरुऽतमं। सुऽदानवे।
विद्म। हि। अस्य। भोजनं। इनस्य। यत्। आ। पशुं। न। गोपाः। करामहे ॥६॥

हे इंद्र ते तुभ्यं सुदानवे शोभनदानस्यार्थाय विमदा विमदनामानो वयं स्तोमं स्तोत्रविशेषमजीजनन्। जनितवंतः। कृतवंत इत्यर्थः॥ अत्र पूर्वोत्तरयोरेकवाक्ययोः पुरुषव्यत्ययः॥ कीदृशं। अपूर्व्यमपूर्वमन्यैः पूर्वमकृतं। उत्कृष्टमित्यर्थः। पुरुतमं बहुतमं। नानाप्रकारोपेतमित्यर्थः। हि यस्मात्कारणाद्धे इंद्र इनस्येश्वरस्यास्येदृशस्य तव यद्भोजनं धनमस्तीति विद्म वयं जानीमः तस्मात्कारणात्त्वदीयं तद्धनमा करामहे। वयमस्मदभिमुखं कुर्महे। तत्र दृष्टांतः। पशुं न गोपा यथा गोपालो धेनुमाह्वयन् स्वस्याभिमुखीं करोति तद्वत्॥

मार्किर्न एना सख्या वि यौषुस्तव चेंद्र विमदस्य च ऋषेः।
विद्मा हि ते प्रमतिं देव जामिवदस्मे ते संतु सख्या शिवानि ॥७॥
मार्किः। नः। एना। सख्या। वि। यौषुः। तव। च। इंद्र। विऽमदस्य। च। ऋषेः।
विद्म। हि। ते। प्रऽमतिं। देव। जामिऽवत्। अस्मे इति। ते। संतु। सख्या। शिवानि ॥७॥

हे इंद्र तव च विमदस्यर्षेर्मम च नः॥ अस्मदो द्वयोश्च। पा॰ १. २. ५९.। इति द्वयोर्बहुवचनं॥ आवयोरेनेनानि सख्या सख्यानि स्तुत्यस्तोतृत्वेज्ययष्टृत्वलक्षणानि सखिकर्माणि मार्किर्वि यौषुः। क्वचिदपि न विश्लथयेयुः। अपि च हि यस्मात्कारणाद्धे देव द्योतमानेंद्र ते तव प्रमतिमनुग्राहिकां बुद्धिं विद्म वयं जानीमः। तत्र दृष्टांतः। जामिवद्यथा भ्राता स्वभगिन्यां स्नेहयुक्तां मतिं जानाति तद्वत्। तस्मात्कारणादस्मे अस्माकं ते तव च सख्या सख्यानि शिवानि संतु। मंगलानि भवंतु। अनपायानीत्यर्थः॥ ॥९॥

इंद्र सोममिति षडृचमष्टमं सूक्तं। चतुर्थ्याद्यास्तिस्रोऽनुष्टुभोऽश्विदेवत्याः। आदितस्तिस्र ऐंद्र्य आस्तारपंक्तिच्छंदस्काः। आदितो द्वौ गायत्रौ ततो द्वौ जागतौ सास्तारपंक्तिः। ऋषिः पूर्ववत्। तथा चानुक्रांतं। इंद्र सोमं षळास्तारपांक्तं त्वाश्विन्योऽत्यास्तिस्रोऽनुष्टुभ इति॥ गतो विनियोगः॥

इंद्र सोममिमं पिब मधुमंतं चमू सुतं।
अस्मे रयिं नि धारय वि वो मदे सहस्रिणं पुरूवसो विवक्षसे ॥१॥
इंद्र। सोमं। इमं। पिब। मधुऽमंतं। चमू इति। सुतं।
अस्मे इति। रयिं। नि। धारय। वि। वः। मदे। सहस्रिणं। पुरुवसो इति पुरुऽवसो।
विवक्षसे ॥१॥

हे इंद्र त्वमिममीदृशं सोमं पिब। कीदृशं। मधुमंतं मधुररसोपेतं चमू चम्वोरधिषवणफलकयोः सुतमभिषुतं। तदनंतरं पुरूवसो बहुधन हे इंद्र वस्तव विमदे विशेषेण सोमजन्यमदे सत्यस्मे अस्मासु रयिं धनं नि धारय। नितरां स्थापय। कीदृशं। सहस्रिणं सहस्रसंख्यायुक्तं। प्रभूतमित्यर्थः। त्वया दत्तेन धनेन यस्माद्वयं पुनरपि त्वदर्थं यागं कुर्मः तस्मादस्मासु धनं निधेहीत्यर्थः। अतः कारणाद्विवक्षसे। महन्नामैतत्। त्वं महान्भवसि॥

त्वां यज्ञेभिरुक्थैरुप हव्येभिरीमहे।
शचीपते शचीनां वि वो मदे श्रेष्ठं नो धेहि वार्यं विवक्षसे ॥२॥
त्वां। यज्ञेभिः। उक्थैः। उप। हव्येभिः। ईमहे।
शचीऽपते। शचीनां। वि। वः। मदे। श्रेष्ठं। नः। धेहि। वार्यं। विवक्षसे ॥२॥

हे इंद्र वयं यज्ञैभिर्यज्ञैः सोमयागादिभिरुक्थैः शस्त्रलक्षणैः स्तोत्रैर्हव्येभिर्हव्यैः पुरोडाशादिभिश्च । उपेत्युपसर्गश्रुतेर्योग्यपदाध्याहारः । त्वामुपेत्येमहे । अभिलषितं धनं याचामहे । अतो हे शचीपते कर्मणां पालयितः । त्वं केषांचित्कर्मणां पालको न भवसीति न किंतु शचीनां सर्वेषां कर्मणां पालको भवसीत्यर्थः । एवं याचितस्त्वं नोऽस्मभ्यं वार्यं वरणीयं श्रेष्ठं प्रशस्ततमं पश्वादिधनं धेहि । देहि । शिष्टं स्पष्टं ॥

यस्पतिर्वार्याणामसि रध्रस्य चोदिता ।
इंद्र स्तोतृणामविता वि वो मदे द्विषो नः पाह्यंहसो विवक्षसे ॥३॥
यः । पतिः । वार्याणां । असि । रध्रस्य । चोदिता ।
इंद्र । स्तोतृणां । अविता । वि । वः । मदे । द्विषः । नः । पाहि । अंहसः । विवक्षसे ॥३॥

हे इंद्र यस्त्वं वार्याणां वरणीयानां धनानां पतिरसि स्वामी भवसि । रध्रस्य राधकस्य स्तोतुश्च चोदिता धनदानेन कर्मसु नियोक्ता च भवसि । किंच हे इंद्र यस्त्वं स्तोतृणामविता रक्षकोऽसि । स त्वं वि वो मदे तव विविधे सोमजन्यमदे सति द्विषो द्वेष्टुः सकाशान्नोऽस्मान्पाहि । रक्ष । अंहसः पापाच्च रक्ष । कस्मादेवमुच्यसे । यस्मात्त्वं विवक्षसे महान्भवसि ॥

युवं शक्रा मायाविना समीची निरमंथतं ।
विमदेन यदीळिता नासत्या निरमंथतं ॥४॥
युवं । शक्रा । मायाऽविना । समीची इति संऽईची । निः । अमंथतं ।
विऽमदेन । यत् । ईळिता । नासत्या । निःऽअमंथतं ॥४॥

हे शक्रा शक्तौ शत्रुवधादिकर्मसु समर्थौ हे अश्विनौ मायाविना मायाविनौ प्रज्ञावंतौ शत्रुवंचनकुशलौ वा युवं युवां समीची परस्परं संगतौ निरमंथतं । अग्निं निरमथ्नीतं । अश्विनावध्वर्यू । ऐ० ब्रा० १.१८. । इति ब्राह्मणोक्तत्वादग्निमंथनमप्यश्विनोरुपपन्नमिति । कदाश्विनौ निर्मथितवंतौ उच्यते । यद्यदा नासत्या नासत्यौ युवां विमदेन मयेळितौ स्तुतौ निरमंथतं निरमथ्नीतं तदानीं युवां परस्परं संगतौ निर्मथितवंतौ स्थ इत्यर्थः ॥

विश्वे देवा अकृपंत समीच्योर्निष्पतंत्योः ।
नासत्यावब्रुवन्देवाः पुनरा वहतादिति ॥५॥
विश्वे । देवाः । अकृपंत । संऽईच्योः । निःऽपतंत्योः ।
नासत्यौ । अब्रुवन् । देवाः । पुनः । आ । वहतात् । इति ॥५॥

हे अश्विनौ युवाभ्यामग्निमंथनकाले प्रेर्यमाणयोः समीच्योः परस्परेण संयुक्तयोररण्योर्निष्पतंत्योर्विस्फुलिंगान्निर्गमयंत्योः सत्योर्विश्वे सर्वे इंद्रादयो देवा अकृपंत । युवामस्तुवन् । किंच देवा नासत्यावश्विनौ युवामब्रुवन् । अवोचन् । किमिति । पुनरा वहतादिति । पुनःपुनरीदृशानि जगत्स्थितिहेतुभूतानि कर्माणि युवामाभिमुख्येन स्थित्वावहतं । यद्वा । युवाभ्यामुत्पाद्यमानः पुनरयमग्निरस्मदीयानि हवींष्यावहत्विति देवा नासत्यावब्रुवन् ॥

मधुमन्मे परायणं मधुमत्पुनरायनं । ता नो देवा देवतया युवं मधुमतस्कृतं ॥६॥
मधुऽमत् । मे । पराऽअयनं । मधुऽमत् । पुनः । आऽअयनं । ता । नः । देवा ।
देवतया । युवं । मधुऽमतः । कृतं ॥६॥

हे अश्विनौ मे मदीयं परायणं गृहात्परागमनं मधुमत्। अत्र रसविशेषवाचिना मधुशब्देन तद्वता प्रीतिर्लक्ष्यते। युवयोः प्रसादात्प्रीतियुक्तं भवत्विति शेषः। पुनरायनं गृहं प्रत्यागमनं मधुमत् प्रीतियुक्तं भवतु। अपि च हे देवा देवौ द्योतमानौ ता तौ युवं युवां नोऽस्मान्मधुमतः प्रीतियुक्तान्कृतं। कुरुतं। केनेति उच्यते। देवतया देवत्वेन। अणिमादिदेवतैश्वर्ययोगेनेत्यर्थः॥ ॥१०॥

भद्रमित्येकादशर्चं नवमं सूक्तं। तुह्यादिपरिभाषयेदमप्याद्यास्त्रारपांक्तं। सोमदेवताकं। ऋषिश्चान्यस्मादिति परिभाषया प्राजापत्य ऐंद्रो वा विमदो वा वासुक्रो वसुकृद्वर्षिः। तथा चानुक्रांतं। भद्रमेकादश सौम्यमिति॥ गतो विनियोगः॥

भद्रं नो अपि वातय मनो दक्षमुत क्रतुं।
अधा ते सख्ये अंधसो वि वो मदे रणन्गावो न यवसे विवक्षसे ॥१॥
भद्रं। नः। अपि। वातय। मनः। दक्षं। उत। क्रतुं।
अध। ते। सख्ये। अंधसः। वि। वः। मदे। रणन्। गावः। न। यवसे। विवक्षसे ॥१॥

हे सोम त्वं नोऽस्मदीयं मनो भद्रं कल्याणं वातय। गमय। अस्माकं मनः शुभसंकल्पं कुर्वित्यर्थः। तथा दक्षमुत दक्षमपि॥ दक्ष वृद्धौ॥ वृद्धं सर्वव्यापिनमंतरात्मानमपि भद्रं शुभकारित्वलक्षणं प्रापय। अस्माकमंतरात्मानं शुभकारिणं कुर्वित्यर्थः। उतापि च क्रतुं प्रज्ञानं भद्रं शुभाध्यवसायलक्षणं प्रापय। शुभाध्यवसायिनं कुर्वित्यर्थः। अधाथ स्तोतारस्ते तव सख्ये स्तुत्यस्तोतृत्वेज्ययष्टृत्वलक्षणे सखिकर्मणि रणन्। रमंतां। तत्र दृष्टांतः। गावो न यवसे यथा धेनवो घासे रमंते प्रीतिं कुर्वंति तद्वत्। कस्मिन्सति। अंधसः सोमाख्यस्यान्नस्य संबंधिनि वस्तव विमदे विविधसोमजन्यमदनिमित्ते सति। कस्मादेवं। यस्माद्विवक्षसे महान्भवसि॥

हृदिस्पृशस्त आसते विश्वेषु सोम धामसु।
अधा कामा इमे मम वि वो मदे वि तिष्ठंते वसूयवो विवक्षसे ॥२॥
हृदिऽस्पृशः। ते। आसते। विश्वेषु। सोम। धामऽसु।
अध। कामाः। इमे। मम। वि। वः। मदे। वि। तिष्ठंते। वसुऽयवः। विवक्षसे ॥२॥

हे सोम ते तव हृदिस्पृशः स्तुतिभिर्हृदयं स्पृशंत ऋत्विजो विश्वेषु धामसु सर्वेषु स्थानेष्वासते। त्वां स्तुवंतस्तिष्ठंति। अधाथेदृग्भूताः कामा अभिलाषा वि वो मदे तव सोमपानजन्यविविधमदनिमित्ते सति। सोमयागार्थमित्यर्थः। वसूयवो वसुकामा धनमिच्छंतो मम। हृदयादिति शेषः। वि तिष्ठंते। उत्तिष्ठंति। कस्मादेवं। यस्माद्विवक्षसे महान्भवसि॥

उत व्रतानि सोम ते प्राहं मिनामि पाक्या।
अधा पितेव सूनवे वि वो मदे मृळा नो अभि चिद्वधाद्विवक्षसे ॥३॥
उत। व्रतानि। सोम। ते। प्र। अहं। मिनामि। पाक्या।
अध। पिताऽइव। सूनवे। वि। वः। मदे। मृळ। नः। अभि। चित्। वधात्। विवक्षसे ॥३॥

उतापि च हे सोम अहं ते तुभ्यं व्रतानि यागादिकर्माणि पाक्या परिपक्वया सर्वार्थदर्शिन्या प्रज्ञया। यद्वा। पाक्येति व्रतविशेषणमेतत्। पाक्यानि परिपक्वानि। परिनिष्ठितानीत्यर्थः। प्र मिनामि। प्रहिनस्मि। प्रकर्षेण करोमीत्यर्थः। अधाथ यागानंतरं वि वो मदे तव विविधे मदे सति नोऽस्मान्मृळ। सुखय। अभि चिद्वधादाभिमुख्येन स्थित्वा शत्र्वादिवधात्स्मान्पालयेति शेषः। तत्र दृष्टांतः। पितेव सूनवे यथा पिता

पुत्रार्थं सुखयति सर्वस्मात्पुत्रमेव पालयति तद्वत्। यस्मात्सुख्यमानः पाल्यमानश्चाहं युष्मदर्थं पुनःपुनः सोमयागं करोमि तस्मान्मां सुखय पालय चेत्यर्थः। कस्मादेवमुच्यसे। यस्मात्त्वं विवक्षसे महान्भवसि। महांतश्च भक्तान्सुखयंति पालयंति चेति यावत्॥

समु॒ प्र यं॑ति धी॒तयः॒ सर्गा॑सोऽव॒ताँ इ॑व।
क्रतुं॑ नः सोम जी॒वसे॒ वि वो॒ मदे॒ धा॒रया॑ चम॒साँ इ॑व॒ विव॑क्षसे॥४॥
सं। ऊं॒ इति॑। प्र। यं॒ति॒। धी॒तयः॑। सर्गा॑सः। अ॒व॒तान्ऽइ॑व।
क्रतुं॑। नः॒। सो॒म॒। जी॒वसे॑। वि। वः॒। मदे॑। धा॒रय॑। च॒म॒सान्ऽइ॑व। विव॑क्षसे॥४॥

हे सोम धीतयो देवतागुणान्दधति गृह्णंतीति धीतयः स्तुतयोऽस्मदीयाः समु संभूयैव प्र यंति। प्रकृष्टया गत्या त्वां गच्छंति। तत्र दृष्टांतः। सर्गासोऽवतानिव। विसृज्यंत उदकपानार्थमिति सर्गा गोसंघाः यंत्रस्था घटसंघा वा। ते यथोदकपानार्थमादानार्थं वावतान्। कूपनामैतत्। कूपान्प्रति गच्छंति तद्वत्। त्वमप्येतज्ज्ञात्वा क्रतुं यागादिकं कर्म प्रज्ञां वा नोऽस्माकं जीवसे चिरंजीवनाय धारय। महतादरेण स्थापय। तत्र दृष्टांतः। चमसानिव यथा वस्तव विमदे विविधसोमजन्यमदे कर्तव्यत्वेन निमित्तभूते सत्यध्वर्युर्हविर्धाने महता यत्नेन चमसान्सोमपात्राणि स्थापयति तद्वत्। कस्मादेवमुच्यसे। यस्मात्त्वं विवक्षसे महान्भवसि। यद्वा। धीतयः। अंगुलिनामैतत्। धयंति पिबंत्याभिरिति धीतयोऽंगुलयः। हे सोम त्वां समु प्र यंति। सहैव प्रकर्षेण त्वां प्राप्नुवंति। किमिव। अवतानिव। जलोद्धरणार्थं विसृज्यंत इति सर्गा रज्जवः। यथा कूपान्प्रति गच्छंति तद्वत्। ततस्त्वं नोऽस्माकं जीवसे चिरंजीवनाय क्रतुं कर्म धारय। यथा संपूर्णं भवति तथा पूरय। किमिव। यथा चमसान्स्वयं पूरयसि तद्वत्॥

तव॒ त्ये सो॑म॒ शक्ति॑भि॒र्निका॑मासो॒ व्यृ॑ण्विरे।
गृत्स॑स्य॒ धीरा॑स्त॒वसो॒ वि वो॒ मदे॑ व्र॒जं गोम॑न्तम॒श्विनं॒ विव॑क्षसे॥५॥
तव॑। त्ये। सो॒म॒। शक्ति॑ऽभिः। निऽका॑मासः। वि। ऋ॒ण्वि॒रे॒।
गृत्स॑स्य। धीराः॑। त॒वसः॑। वि। वः॒। मदे॑। व्र॒जं। गोऽम॑न्तं। अ॒श्विनं॑। विव॑क्षसे॥५॥

निकामासो दृष्टादृष्टफले नियतकामास्त्ये ते प्रसिद्धा धीरा मेधाविन ऋत्विजः शक्तिभिर्यागादिकर्मभिः सह हे सोम गृत्सस्य मेधाविनस्तवसो महतस्तव व्यृण्विरे। विविधाः स्तुतीर्गमयंति। प्रापयंति। कुर्वंतीत्यर्थः। अतः कारणाद्वि वो मदे तव सोमपानजन्यविविधमदनिमित्तभूते सत्यस्मभ्यं गोमंतं गोसहितमश्विनमश्वसहितं व्रजं गोष्ठं। सामर्थ्यान्मंदुरा लभ्यते। मंदुरां च देहीति शेषः। कस्मादेवमुच्यसे। यस्माद्विवक्षसे महान्भवसि॥ ॥११॥

प॒शुं नः॑ सोम रक्षसि पुरु॒त्रा विष्ठि॑तं॒ जग॑त्।
स॒माकृ॑णोषि जी॒वसे॒ वि वो॒ मदे॒ विश्वा॑ सं॒पश्य॒न्भुव॑ना॒ विव॑क्षसे॥६॥
प॒शुं। नः॒। सो॒म॒। र॒क्ष॒सि॒। पु॒रु॒ऽत्रा। विऽस्थि॑तं। जग॑त्।
सं॒ऽआकृ॑णोषि। जी॒वसे॑। वि। वः॒। मदे॑। विश्वा॑। सं॒ऽपश्य॑न्। भुव॑ना। विव॑क्षसे॥६॥

हे सोम त्वं नोऽस्मदीयं पशुं देवयागार्थमुपाकृतं रक्षसि। पालयसि। न केवलं पशुं किंतु पुरुत्रा बहुधा विष्ठितं सुरनरतिर्यग्योन्यादिभावेनावस्थितं जगच्च रक्षसि। किंच स त्वं समाकृणोषि। जगतो वृत्तिं सम्यगाकरोषीत्यर्थः। किमर्थं। जीवसे जीवनार्थं। किं कुर्वन्। विश्वा भुवना विश्वानि भुवनानि भूतजातानि संपश्यन्। किमर्थमेतदादिकं सर्वं करोषि उच्यते। वि वो मदे युष्माकं सर्वेषां देवानां विविधहविर्जन्यतृप्त्यर्थं। उक्तं हि।

इतःप्रदानमुत देवा उप जीवंति अमुतःप्रदानं मनुष्या उप जीवंति। तै० सं० ३. २. ९. ७.। इति। अत एव त्वं विवक्षसे। महान्भवसि। महतामेतत्सर्वमुचितमित्यर्थः॥

त्वं नः सोम विश्वतो गोपा अदाभ्यो भव।
सेध राजन्नप स्रिधो वि वो मदे मा नो दुःशंस ईशता विवक्षसे ॥७॥
त्वं। नः। सोम। विश्वतः। गोपाः। अदाभ्यः। भव।
सेध। राजन्। अप। स्रिधः। वि। वः। मदे। मा। नः। दुःऽशंसः। ईशत। विवक्षसे ॥७॥

हे सोम अदाभ्यः केनाप्यहिंस्यस्त्वं विश्वतः सर्वतो नोऽस्माकं गोपा रक्षिता भव। अपि च हे राजन्राजमान सोम त्वं स्रिधोऽस्माकमुपक्षपयितॄनप सेध। अस्मत्तोऽपगमय। अपजहि वा। नोऽस्माकं दुःशंसो विद्यमानानामविद्यमानानां कर्मणां शंसिता प्रख्यापयिता मेशत। ईशिता मा भूत्। तव प्रसादादस्माकमपवक्ता कश्चिदपि मा भूदित्यर्थः। किमर्थमेतत्सर्वं प्रार्थ्यते। वि वो मदे तव विविधसोमादिहविर्जन्यतृप्त्यर्थं। अतो विवक्षसे। त्वं महान्भवसि॥

त्वं नः सोम सुक्रतुर्वयोधेयाय जागृहि।
क्षेत्रवित्तरो मनुषो वि वो मदे द्रुहो नः पाह्यंहसो विवक्षसे ॥८॥
त्वं। नः। सोम। सुऽक्रतुः। वयःऽधेयाय। जागृहि।
क्षेत्रवित्ऽतरः। मनुषः। वि। वः। मदे। द्रुहः। नः। पाहि। अंहसः। विवक्षसे ॥८॥

हे सोम सुक्रतुः शोभनप्रज्ञः क्षेत्रवित्तरः क्षेत्रस्यातिशयेन लंभकस्त्वं नोऽस्माकं वयोधेयायान्नदानाय जागृहि। किंच द्रुहो द्रोग्धुर्मनुषो मनुष्याच्छत्रोः सकाशान्नोऽस्मान्पाहि। रक्ष। अंहसः पापाच्च नोऽस्मान्पाहि। किमर्थं। वि वो मदे। तव सोमादिहविर्जन्यतृप्त्यर्थमित्यर्थः। विवक्षसे। त्वं महान्भवसि॥

त्वं नो वृत्रहंतमेंद्रस्येंदो शिवः सखा।
यत्सीं हवंते समिथे वि वो मदे युध्यमानास्तोकसातौ विवक्षसे ॥९॥
त्वं। नः। वृत्रहन्ऽतम। इंद्रस्य। इंदो इति। शिवः। सखा।
यत्। सीं। हवंते। संऽइथे। वि। वः। मदे। युध्यमानाः। तोकऽसातौ। विवक्षसे ॥९॥

हे वृत्रहंतम शत्रूणामतिशयेन हंतर्हे इंदो हे सोम यस्त्वमिंद्रस्य शिवः सुखकरः सखा मित्रभूतोऽसि स त्वं नोऽस्मान्पाहीति शेषः। कदेति उच्यते। तोकसातौ। तोक इत्यपत्यनाम॥ सातिः। षणु दान इत्यस्मात्क्तौ रूपं॥ दीयतेऽस्मिन्नपत्यमिति तोकसातिः संग्रामविशेषणं। तस्मिन्। अतिमहतीत्यर्थः। समिथे संग्रामे युध्यमाना युद्धं कुर्वाणाः शत्रुजनाः सीं सर्वतो यद्यदा हवंते युद्धार्थमस्मानाह्वयंति। तदास्माकं रक्षिता भवेत्यर्थः। कस्मिन्निमित्ते। वि वो मदे तव विविधहविर्जन्यहर्षनिमित्ते। विवक्षसे। त्वं महान्भवसि। महतां हि पालनं युक्तमेवेति॥

अयं घ स तुरो मद इंद्रस्य वर्धत प्रियः।
अयं कक्षीवतो महो वि वो मदे मतिं विप्रस्य वर्धयद्विवक्षसे ॥१०॥
अयं। घ। सः। तुरः। मदः। इंद्रस्य। वर्धत। प्रियः।
अयं। कक्षीवतः। महः। वि। वः। मदे। मतिं। विप्रस्य। वर्धयत्। विवक्षसे ॥१०॥

अयं घेदृशः खलु स प्रसिद्धोऽस्माभिरभिषुतः सोमसुरः सर्वकार्येषु त्वरणशीलो मद्यो मदकरः प्रिय इंद्रस्य तर्पयिता वर्धत। अस्मदीयां मतिमवर्धयत्। अयं सोमः कक्षीवत एतदाख्यस्यर्षेः। कीदृशस्य। महो महतो विप्रस्य मेधाविनः। मतिं प्रज्ञां वर्धयत्। अवर्धयत्। तद्वदस्माकमपि मतिमवर्धयदित्यर्थः। शिष्टं गतं॥

अयं विप्राय दाशुषे वाजाँ इयर्ति गोमतः।
अयं सप्तभ्य आ वरं वि वो मदे प्रांधं श्रोणं च तारिषद्विवक्षसे ॥११॥
अयं। विप्राय। दाशुषे। वाजान्। इयर्ति। गोऽमतः।
अयं। सप्तऽभ्यः। आ। वरं। वि। वः। मदे। प्र। अंधं। श्रोणं। च। तारिषत्। विवक्षसे ॥११॥

अयं सोमो विप्राय मेधाविने दाशुषे हविर्दत्तवते यजमानाय गोमतः पशुयुक्तानि वाजानन्नानीयर्ति। प्रेरयति। प्रयच्छतीत्यर्थः। किंचायमेव सोमः सप्तभ्यो होतृभ्यो वरं वरणीयं धनमा। प्रयच्छति। अंधं नेत्रहीनं दीर्घतमसमृषिं चक्षुःप्रदानेन श्रोणं च पंगुं परावृजमृषिं चरणप्रदानेन एवमुभावृषी प्र तारिषत्। प्रकर्षेण वर्धितवान्। शिष्टं स्पष्टं॥　॥१२॥

प्र हीति नवर्चं दशमं सूक्तमानुष्टुभं पूषदेवताकं। आद्याचतुर्थ्यावुष्णिहौ। ऋषिः पूर्ववत्। तथा चानुक्रांतं। प्र हि नव पौष्णमानुष्टुभमाद्याचतुर्थ्या उष्णिहाविति॥ गतो विनियोगः॥

प्र ह्यच्छा मनीषाः स्पार्हा यंति नियुतः। प्र दस्रा नियुद्रथः पूषा अविष्टु माहिनः॥१॥
प्र। हि। अच्छ। मनीषाः। स्पार्हाः। यंति। निऽयुतः। प्र। दस्रा। नियुत्ऽरथः। पूषा। अविष्टु। माहिनः॥१॥

हि यस्मात्कारणान्मनीषा अस्मदीयाः स्तुतिलक्षणा वाचोऽच्छ गुणग्रहणद्वारेण पूषणमभिप्राप्तुं प्र यंति प्रकर्षेण गच्छंति। कीदृश्यः। स्पार्हाः सर्वगुणोपेतत्वात्स्पृहणीयाः नियुतः॥ नियमनाद्वा नियोजनाद्वेत्येतद्रूपं॥ अस्माभिर्नियमिता वा नियुक्ता वा। उच्चारिता इत्यर्थः। एतच्छ्राव्योपकारस्य प्रत्युपकारं कर्तुं दस्रा दर्शनीयो नियुद्रथो गमनाय सर्वदा नियतरथो नियुक्तरथो वा माहिनो महान्पूषा देवः प्राविष्टु। अस्मान्प्रकर्षेण रक्षतु। यद्वा। दस्रा दंसयितारौ कर्मणामुपक्षपयितारौ। परिसमापयितारावित्यर्थः। एवंभूतौ पत्नीयजमानौ पूषा रक्षत्विति योज्यं॥

यस्य त्यन्महित्वं वाताप्यमयं जनः। विप्र आ वंसद्धीतिभिश्चिकेत सुष्टुतीनां॥२॥
यस्य। त्यत्। महिऽत्वं। वाताप्यं। अयं। जनः। विप्रः। आ। वंसत्। धीतिऽभिः। चिकेत। सुऽस्तुतीनां॥२॥

विप्रो मेधाव्ययं जनो यजमानः। यस्य पूष्णः संबंधि त्यत्तत्प्रसिद्धं महित्वं महत्त्वं वाताप्यं मंडले संभृतं परिपक्वमुदकं धीतिभिर्यागादिकर्मभिरा वंसत् संभजति स देवः सुष्टुतीनां तदीयाः शोभनाः स्तुतीश्चिकेत। जानातु॥

स वेद सुष्टुतीनामिंदुर्न पूषा वृषा। अभि प्सुरः प्रुषायति व्रजं न आ प्रुषायति॥३॥
सः। वेद। सुऽस्तुतीनां। इंदुः। न। पूषा। वृषा। अभि। प्सुरः। प्रुषायति। व्रजं। नः। आ। प्रुषायति॥३॥

य उक्तगुणः स पूषा सुष्टुतीनां शोभनस्तोत्राणां। स्वरूपमिति शेषः। वेद। जानाति। अपि चेंदुर्न सोम इव तथायं पूषा वृषा कामानां वर्षिता भवति। प्सुरो रूपवान् स अभ्यस्मानभिलक्ष्य प्रुषायति। सिंचति। तथा नोऽस्माकं व्रजं गोष्ठं चा प्रुषायति। आभिमुख्येन सिंचति। अस्मभ्यं हिरण्यपश्वादिकं ददातीत्यर्थः॥

मंसीमहिं त्वा वयमस्माकं देव पूषन्। मतीनां च साधनं विप्राणां चाधवं ॥४॥

मंसीमहिं। त्वा। वयं। अस्माकं। देव। पूषन्। मतीनां। च। साधनं। विप्राणां।
च। आऽधवं ॥४॥

हे देव द्योतमान पूषन् वयं स्तोतारस्त्वा त्वां मंसीमहि। स्तुमः। कीदृशं। अस्माकमस्मदीयानां मतीनां चाभिलषितानां च साधनं साधयितारं विप्राणां च मेधाविनामप्याधवं परिचर्यादरेस्य कंपयितारं॥

प्रत्यर्धिर्यज्ञानामश्वहयो रथानां। ऋषिः स यो मनुर्हितो विप्रस्य यावयत्सखः ॥५॥

प्रतिऽअर्धिः। यज्ञानां। अश्वऽहयः। रथानां। ऋषिः। सः। यः। मनुःऽहितः।
विप्रस्य। यवयत्ऽसखः ॥५॥

ऋषिः सर्वस्य द्रष्टा स पूषा यज्ञानां प्रत्यर्धिरर्धभाग्रथानामश्वहयः। हयतिर्गतिकर्मा। रथानां संबंधिभिरश्वैर्गमनशीलो भवति। अश्वयुक्तेन रथेन सदा गंतेत्यर्थः। मनुर्हितो मनुष्यहितो यो विप्रस्य मेधाविनः स्तोतुर्यावयत्सखः शत्रूणां पृथक्कर्ता सखा भवति स इति पूर्वेण संबंधः॥ ॥१३॥

आधीषमाणायाः पतिः शुचायाश्च शुचस्य च।
वासोवायोऽवीनामा वासांसि मर्मृजत् ॥६॥

आऽधीषमाणायाः। पतिः। शुचायाः। च। शुचस्य। च।
वासःऽवायः। अवीनां। आ। वासांसि। मर्मृजत् ॥६॥

आधीषमाणाया आत्मार्थं धीयमानायाः शुचायाश्च दीप्ताया अजायाश्च पतिः स्वामी। न केवलं स्त्रीमात्रस्य किंतु शुचस्य दीप्तस्य पुंपशोश्च पतिरित्यर्थः। एवंभूतः पूषा देवोऽवीनामुरणानां संबंधिभी रोमभिर्वासोवायो दशापवित्रादीनि वस्त्राणि प्रेरयन् वासांसि रजकशोध्यानि तानि वस्त्राण्या मर्मृजत्। आ समंतात्प्रकाशोष्णाभ्यां शोधयन्भवति॥

इनो वाजानां पतिरिनः पुष्टीनां सखा।
प्र श्मश्रु हर्यतो दूधोद्वि वृथा यो अदाभ्यः ॥७॥

इनः। वाजानां। पतिः। इनः। पुष्टीनां। सखा।
प्र। श्मश्रु। हर्यतः। दूधोत्। वि। वृथा। यः। अदाभ्यः ॥७॥

इन ईश्वरः पूषा वाजानां हविरादीनां सर्वेषामन्नानां पतिः स्वामीनः प्रभुः पुष्टीनां सर्वेषां प्राणिनां स्वभूतानां पोषणानां कारणे सखा मित्रभूतः। सर्वस्योपकारित्वात्। किंच हर्यतः कामयमानस्य यजमानस्य स्वभूतं सोमं पिबन्निति शेषः। श्मश्रु श्मश्रूणि वृथानायासेनाप्रयत्नेन प्र व्यदूधोत् प्रकर्षेण विविधं कंपयति यः पूषादाभ्यः शत्रुभिरहिंस्यः स इति पूर्वेण संबंधः॥

आ ते रथस्य पूषन्नजा धुरं ववृत्युः। विश्वस्यार्थिनः सखा सनोजा अनपच्युतः ॥८॥
आ। ते। रथस्य। पूषन्। अजाः। धुरं। ववृत्युः। विश्वस्य। अर्थिनः। सखा।
सनःऽजाः। अनपऽच्युतः ॥८॥

हे पूषन्देव ते त्वदीयस्य रथस्य धुरमजा वाहनत्वेना ववृत्युः। आवर्तयंति। आवहंतीत्यर्थः। यस्त्वं विश्वस्य सर्वस्यार्थिनो याचकस्याभिलषितार्थप्रदातृत्वात्सखिभूतः सनोजाश्चिरं जातोऽनपच्युतः स्वाधिकारादनपगतः तस्य ते रथमिति संबंधः॥

अस्माकमूर्जा रथं पूषा अविष्टु माहिनः। भुवद्वाजानां वृध इमं नः शृणवद्धवं ॥९॥
अस्माकं। ऊर्जा। रथं। पूषा। अविष्टु। माहिनः। भुवत्। वाजानां। वृधः। इमं।
नः। शृणवत्। हवं ॥९॥

माहिनो महान्पूषास्माकं स्वभूतं रथमूर्जा बलेनान्नेन वाविष्टु। अवतु। रक्षतु। किंच वाजानामन्नानां वृधो वर्धको भुवत्। भवतु। सोऽस्मदीयमिममीदृग्भूतं हवमाह्वानं शृणवत्। शृणोतु॥ ॥१४॥

असत्सु म इति चतुर्विंशत्यृचमेकादशं सूक्तं। इंद्रपुत्रस्य वसुक्रस्यार्षं त्रैष्टुभमैंद्रं। तथा चानुक्रांतं। असत्सु चतुर्विंशतिरैंद्रो वसुक्र इति॥ महाव्रते मरुत्वतीयशस्त्र एतत्सूक्तं। तथैव पंचमारण्यके सूचितं च। असत्सु मे जरितः साभिवेगः पिबा सोममभि यमुग्र तर्द्ः। ऐ॰ आ॰ ५. १. १.। इति॥

असत्सु मे जरितः साभिवेगो यत्सुन्वते यजमानाय शिक्षं।
अनाशीर्दामहमस्मि प्रहंता सत्यध्वृतं वृजिनायंतमाभुं ॥१॥
असत्। सु। मे। जरितरिति। सः। अभिऽवेगः। यत्। सुन्वते। यजमानाय। शिक्षं।
अनाशीःऽदां। अहं। अस्मि। प्रऽहंता। सत्यऽध्वृतं। वृजिनऽयंतं। आभुं ॥१॥

वासुक्रेषु सूक्तेषु वाक्यैरिंद्रः स्तूयते। इदानीमिंद्रो वसुक्रं स्तोतुमुद्यतं पुत्रं संबोध्य स्वसामर्थ्यं कथयति येन विज्ञातदेवतारूपः सन् सुखेन स्तोष्यतीति। यद्वा। कार्यकारणयोरेकत्वोपचारादात्मा वै पुत्रनामासीति वचनादिंद्ररूपेणावस्थितो वसुक्र आत्मानं स्तौति। क्वचित्क्वचिदिंद्रं चेति। हे जरितः स्तोतः मे मम सु शोभनः स तादृशोऽभिवेगोऽभिगमनं मनसो वृत्तिविशेषोऽसत्। अस्ति। विद्यते। यद्येनाभिवेगेन सुन्वते मदर्थं सोमाभिषवं कुर्वते यजमानाय यज्वने शिक्षं अभिलषितमर्थं ददामि। किंचाहमनाशीर्दां। आशीरन्यत्र प्रार्थना इह तु सामर्थ्यात्प्रार्थितं हविरुच्यते। तद्यद्यमदद्तं अनं। यद्वा। आशीरिति सोमाश्रयणं दध्युच्यते। तस्यादातारं। असोमयाजिनमित्यर्थः। प्रहंतास्मि। प्रकर्षेण हिंसिता भवामि। कीदृशं। सत्यध्वृतं सत्यस्य हिंसकं। अनृतवादिनं चेत्यर्थः। वृजिनायंतं पापं कर्तुमिच्छंतमाभुं व्याप्नुवंतं॥

यदीदहं युधये संनयान्यदेवयून्तन्वा३ शूशुजानान्।
अमा ते तुम्रं वृषभं पचानि तीव्रं सुतं पंचदशं नि षिंचं ॥२॥
यदि। इत्। अहं। युधये। संऽनयानि। अदेवऽयून्। तन्वा। शूशुजानान्।
अमा। ते। तुम्रं। वृषभं। पचानि। तीव्रं। सुतं। पंचऽदशं। नि। सिंचं ॥२॥

यदीद्यदाहमेव युधये युद्धार्थमदेवयून् देवान्यष्टुमनिच्छतोऽयज्वनः संनयानि संगमयामि। कीदृशान्। तन्वा स्वशरीरेण शूशुजानानात्मंभरित्वात्पुष्टिलक्षणया दीप्त्या युक्तान्। पुष्टानित्यर्थः। तदा हे इंद्र अहमम-

र्विंगादिभिः सहितस्ते तुभ्यं तुम्रं प्रेरकं बलिनं । पीवानमित्यर्थः । वृषभं सेचनसमर्थं पुंपशुं पचामि । किंच तीव्रं मदकररसं सुतमभिषुतं पंचदशं । प्रतिपत्प्रभृतिपंचदशसंख्याकासु तिथिषु शुक्लपक्ष एकोत्तरवृद्ध्या पर्णानि जायंते । कृष्णपक्षे तु तद्वन्निह्रीयंते । एवंभूतत्वात्पंचदशः सोम उच्यते । तं । यद्वा । त्रिवृत्पंचदशस्तोमोपेतं माध्यंदिनसवनकमित्यर्थः । नि षिंचं । दशापवित्रे द्रोणकलशे चमसपात्रेऽग्नौ वा सिंचामि । प्रक्षिपामीत्यर्थः ॥

नाहं तं वेद य इति ब्रवीत्यदेवयून्त्समरणे जघन्वान् ।
यदावाख्यत्समरणमृघावदादिद्ध मे वृषभा प्र ब्रुवंति ॥३॥
न । अहं । तं । वेद । यः । इति । ब्रवीति । अदेवऽयून् । सम्ऽअरणे । जघन्वान् ।
यदा । अवऽअख्यत् । सम्ऽअरणं । ऋघावत् । आत् । इत् । ह । मे । वृषभा । प्र । ब्रुवंति ॥३॥

यो जनोऽदेवयून् देवानकामयमानान्देवद्विषो राक्षसादीन्समरणे संग्रामे जघन्वान् अहं हतवानिति ब्रवीति वदति तं तादृशं मद्व्यतिरिक्तं जनमहं न वेद । न जानामि । मत्तोऽन्यः संग्रामे शत्रूणां हंता नास्तीत्यर्थः । किंच यदा यस्मिन्काले समरणं संग्राममवाख्यत् अवाक्षतं न्यक्कृतमहं पश्यामि । कीदृशं । ऋघावदृघावंतं परस्परं हिंसायुक्तं । अत्यंतक्रूरमित्यर्थः । आत्तदानीं मे मम स्वभूतानि वृषभा वृषभकर्माणि दर्पितवृषभस्येव विक्रांतकर्माणि प्र ब्रुवंति । विद्वज्जना इति शेषः । इद्वेतीमौ पदपूरणौ ॥

यदज्ञातेषु वृजनेष्वासं विश्वे सतो मघवानो म आसन् ।
जिनामि वेत्क्षेम आ संतमाभुं प्र तं क्षिणां पर्वते पादगृह्य ॥४॥
यत् । अज्ञातेषु । वृजनेषु । आसं । विश्वे । सतः । मघऽवानः । मे । आसन् ।
जिनामि । वा । इत् । क्षेमे । आ । संतं । आभुं । प्र । तं । क्षिणां । पर्वते । पादऽगृह्य ॥४॥

यद्यदाज्ञातेषु शरीरवस्त्रास्त्रबलादिभिरपरिज्ञातेषु वृजनेषु संग्रामेष्वासं अहं युद्धार्थमुपविशामि तदा विश्वे सर्वे मघवानो हविर्लक्षणतपोलक्षणधनवंत ऋषयः सत एवं वर्तमानस्य मे ममेंद्रस्य समीप आसन् । उपविशंति । मम वीर्यवृद्ध्यर्थं मां स्तुवंतस्तिष्ठंतीत्यर्थः । अपि च क्षेमे जगत्पालने निमित्त आ संतं । आकारोऽभीत्यस्यार्थे वर्तते । सर्वमभिभवंतमाभुं महांतं शत्रुं जिनामि वा । विनाशयाम्येव । नात्र विनाशे संशयः । इदिति पूरणः । तं महांतं शत्रुं पादगृह्य पादौ गृहीत्वा पर्वते गिरौ प्र क्षिणां । प्रहिनस्मि । प्रक्षिपामि ॥

न वा उ मां वृजने वारयंते न पर्वतासो यदहं मनस्ये ।
मम स्वनात्कृधुकर्णो भयात एवेदनु द्यून्किरणः समेजात् ॥५॥
न । वै । ऊं इति । मां । वृजने । वारयंते । न । पर्वतासः । यत् । अहं । मनस्ये ।
मम । स्वनात् । कृधुऽकर्णः । भयाते । एव । इत् । अनु । द्यून् । किरणः । सं । एजात् ॥५॥

वै उ इत्येवैव । वृजने संग्रामे मां युद्धार्थमुपस्थितं संतं न वारयंते । केचिन्निवारयितुं समर्था न भवंति । अहं यत्कर्म मनस्ये मनसा कर्तुमिच्छामि पर्वतासोऽवितरणक्षमा हिमवदादयो गिरयस्तत्कर्म मनसा प्रोढुं न शक्नुवंतीत्यर्थः । किंच ममेंद्रस्य स्वनाच्छब्दादेव कृधुकर्णो नामासुरः यद्वा कृधुकर्णो ह्रस्वकर्णो मंदश्रवणेंद्रियो बधिरः स्थावरपिपीलिकादिरपि भयाते । बिभेति । अपि चैवेदेवमेव कृधुकर्णवदनु द्यून् । प्रतिदिनमित्यर्थः । किरणः । अंतर्णीतमत्वर्थमेतत् । किरणवान्रश्मिवानादित्यः समेजात् । सम्यक्कंपयते । चलति । नियमेन प्रयातीत्यर्थः ॥ ॥१५॥

दर्शन्न्वत्र शृतपाँ अनिंद्रान्बाहुक्षदः शरवे पत्यमानान् ।
घृषुं वा ये निनिदुः सखायमध्यू न्वेषु पवयो ववृत्युः ॥ ६ ॥
दर्शन् । नु । अत्र । शृतऽपान् । अनिंद्रान् । बाहुऽक्षदः । शरवे । पत्यमानान् ।
घृषुं । वा । ये । निनिदुः । सखायं । अधि । ऊं इति । नु । एषु । पवयः । ववृत्युः ॥ ६ ॥

अत्रास्मिञ्जगति शृतपाञ्छृतानि पक्वानि सोमादिहवींष्यपहृत्य पिबतोऽनिंद्रानिंद्रेण मया वर्जितान् बाहुक्षदो बाहुभिर्यजमानाञ्शकलीकुर्वतः शरवे हिंसार्थं पत्यमानानभिपततोऽसुरादीन्नु क्षिप्रं दर्शन् । अहमिंद्रः पश्यामि । एवंभूतेष्वेष्वध्युपरि पवयो मदीयान्यायुधानि ववृत्युः । वर्तंते । वाशब्दः समुच्चये । घृषुं महांतं च सखायं सखिवत्प्रियं हितस्य कर्तारं मां ये निनिदुः निंदंति । उ इति समुच्चये । एषु चोपरि मदीयान्यायुधानि क्षिप्रं वर्तंते ॥

अभूर्वौक्षीर्व्यु१ आयुरानड्दर्षन्नु पूर्वो अपरो नु दर्षत् ।
द्वे पवस्ते परि तं न भूतो यो अस्य पारे रजसो विवेष ॥ ७ ॥
अभूः । ऊं इति । औक्षीः । वि । ऊं इति । आयुः । आनट् । दर्षत् । नु । पूर्वः । अपरः ।
नु । दर्षत् ।
द्वे इति । पवस्ते इति । परि । तं । न । भूतः । यः । अस्य । पारे । रजसः । विवेष ॥ ७ ॥

अत्र मध्यमपुरुषत्वेनेंद्रस्योच्यमानत्वादृषिरिंद्रं स्तौति । उ इत्यवधारणे । हे इंद्र अभूः । त्वमेव प्रादुर्भवसि । औक्षीः । काले काले त्वमेव पृथिवीं सिंचसि । नान्य इत्यर्थः । आनडित्यादौ सर्वत्र परोक्षनिर्देशे प्रत्यक्षीकरणार्थं मध्यमपुरुषेण प्रकृतत्वादेकवाक्यतायै युष्मच्छब्दसमानार्थो भवच्छब्दोऽध्याहर्तव्यः । वि इति वैविध्ये । उ इति चार्थे । आयुर्जीवितमुच्यते । इंद्रो भवान्विविधमायुश्चानट् । व्याप्नोति । आ भूतसंप्लवाज्जीवतीत्यर्थः । किंच पूर्वः पुरातनो भवानिंद्रो नु क्षिप्रं दर्षत् ॥ दॄ विदारणे । सिब्बहुलं लेटि ॥ वज्रेण शत्रून्विदारयति । अपरोऽन्यः शत्रुर्नु दर्षत् । नु इति निषेधार्थे । भवंतमिंद्रं न विदारयति । भवानेव सर्वं शत्रुजातं हिनस्तीत्यर्थः । अपि च यो भवानिंद्रोऽस्येदृशस्य रजसो लोकस्य । त्रैलोक्यस्येत्यर्थः । पारे परतः । परमसूक्ष्मवायुरूपेण सृष्टिकारणात्मना स्थित्वेति शेषः । विवेष सर्वतो व्याप्नोति तं भवंतमिंद्रं द्वे इति सामर्थ्याद्द्यावापृथिव्यौ न परि भूतः । न परिभवतः । अभिभवितुं न शक्नुत इत्यर्थः । कीदृश्यौ । पवस्ते ॥ पवतिर्गतिकर्मा । अस्मादौणादिकोऽस्प्रत्ययः । अतोऽजाद्यतष्टाप् । पा॰ ४. १. ४. । इति टापि कृते प्रथमाद्विवचने चैतद्रूपं भवति ॥ महत्त्वेन सर्वस्याभिभवनाय गच्छंत्यौ ॥

गावो यवं प्रयुता अर्यो अक्षन्ता अपश्यं सहगोपाश्चरंतीः ।
हवा इदर्यो अभितः समायन्कियदासु स्वपतिश्छंदयाते ॥ ८ ॥
गावः । यवं । प्रऽयुताः । अर्यः । अक्षन् । ताः । अपश्यं । सहऽगोपाः । चरंतीः ।
हवाः । इत् । अर्यः । अभितः । सं । आयन् । कियत् । आसु । स्वऽपतिः । छंदयाते ॥ ८ ॥

गावो धेनवः प्रयुताः प्रकर्षेण मिश्रिताः परस्परेण सह भूता यवं मद्वृष्टिजनितयवादिघासमक्षन् । अदंति । भक्षयंति । अर्यः सर्वस्य स्वाम्यहं ता गा अपश्यं । पश्यामि । कीदृशीः । सहगोपाः पशुपालकेन सहिताश्चरंतीर्घासं भक्षयंतीः । एवंभूतास्ताः परया प्रीत्या पश्यामीत्यर्थः । किंच हवा वाहनदोहनार्थमाह्वानार्हा गावो अर्यः । द्वितीयार्थे प्रथमा । अर्यं स्वामिनं प्रत्यभितः सर्वतः समायन् । समित्येकीभावे ।

एकीभूयागच्छंति । इदिति पूरणः । आगतास्तासु गोषु स्वपतिः स्वानां गवां स्वामी चियत्चीरं इच्छाति । दोग्धुं कामयति । मदर्थं दोग्धीत्यर्थः । गाव आशिरं दुदुह्रे । ऋ॰ ८. ६९. ६. । इति वचनात् ॥

सं यद्वयं यवसादो जनानामहं यवाद उर्वज्रे अंतः ।
अत्रा युक्तोऽवसातारमिच्छादथो अयुक्तं युनजद्ववन्वान् ॥९॥
सं । यत् । वयं । यवसऽअदः । जनानां । अहं । यवऽअदः । उरुऽअज्रे । अंतरिति ।
अत्र । युक्तः । अवऽसातारं । इच्छात् । अथो इति । अयुक्तं । युनजत् । ववन्वान् ॥९॥

अत्रेदु मे मंससे सत्यमुक्तं द्विपाच्च यच्चतुष्पात्संसृजानि ।
स्त्रीभिर्यो अत्र वृषणं पृतन्यादयुद्धो अस्य वि भजानि वेदः ॥१०॥
अत्र । इत् । ऊं इति । मे । मंससे । सत्यं । उक्तं । द्विऽपात् । च । यत् । चतुःऽपात् । संऽसृजानि ।
स्त्रीभिः । यः । अत्र । वृषणं । पृतन्यात् । अयुद्धः । अस्य । वि । भजानि । वेदः ॥१०॥

मे ममात्रास्मिन्स्तोत्र उक्तं मया कथितं सत्यमित्यथाभूतमेव मंससे । त्वं जानीहि । अर्थवादरूपेण नैतद्ध्यारोपितगुणमित्यर्थः । उ इति पूरणः । किंच द्विपाच्च मनुष्यादिकं च चतुष्पाच्च पश्वादिकं च यत्स्थावरजंगमात्मकं जगत्संसृजानि । अहमुत्पादयामीति । अत्रास्मिञ्जगति स्त्रीभिः स्त्रीसदृशैर्बलादिहीनैः पुरुषैः सह यः शूरंमन्यो जनो वृषणमभिलषितस्य वर्षितारं मां । परित्यज्येति शेषः । पृतन्यात् युद्धं कर्तुमिच्छति अहमस्येदृशस्य स्वभूतं वेदो धनमयुद्धस्तेन पुरुषेणायोद्धा सन् बलादपहृत्य वि भजानि । स्तोतृभ्यो यष्टृभ्यश्च ददामीत्यर्थः ॥ ॥१६॥

यस्यानक्षा दुहिता जात्वास कस्तां विद्वाँ अभि मन्याते अंधां ।
कतरो मेनिं प्रति तं मुचाते य ईं वहाते य ईं वा वरेयात् ॥११॥
यस्य । अनक्षा । दुहिता । जातु । आस । कः । तां । विद्वान् । अभि । मन्याते । अंधां ।
कतरः । मेनिं । प्रति । तं । मुचाते । यः । ईं । वहाते । यः । ईं । वा । वरेऽयात् ॥११॥

यस्येंद्रस्य मम कारणरूपेणावस्थितस्यानक्षाक्षिवर्जिता दर्शनहीना । अचेतनेत्यर्थः । दुहिता प्रकृत्याख्या जातु कदाचिदास ॥ असतेर्गत्यर्थस्य लिटि रूपं ॥ सामर्थ्यान्महाप्रलये मय्येव लीना सती सर्वत्र वर्तते तां प्रकृतिं विद्वान् मय्येव लीनां जानन् मत्तोऽन्यो देवः को भवति । न कोऽपीत्यर्थः । अपि चांधां दर्शनहीनामचेतनां तामभि मन्याते । आत्मन्याश्रयप्रदानेन को देवोऽभिपूजयति । यद्वा । चीरोदकवत् घटाकाशवच्च मया सहैकीभूतां तामाभिमुख्येन को जानाति । अहमेव सर्वज्ञः स्वात्मन्याश्रयप्रदानेनाभिपूजयामि । मया सहैकीभूतां तां तत्त्वतोऽहमेव जानामि । नान्य इति । किंच कतरो देवो मेनिं वज्रं तं प्रसिद्धं वृत्रादिशत्रुं प्रति मुचाते । मुंचति । स्वयमेव प्रश्नमुत्थाप्येदानीं प्रतिब्रूते । यो देव ईमेनं शत्रुं वहाति वहति । अपि वा य ईमेनं वरेयात् वरयितुमिच्छति । स चाहमेव नान्यो मत्सदृशोऽस्तीत्यर्थः ॥

कियती योषा मर्यतो वधूयोः परिप्रीता पन्यसा वार्येण ।
भद्रा वधूर्भवति यत्सुपेशाः स्वयं सा मित्रं वनुते जने चित् ॥१२॥
कियती । योषा । मर्यतः । वधूऽयोः । परिऽप्रीता । पन्यसा । वार्येण ।
भद्रा । वधूः । भवति । यत् । सुऽपेशाः । स्वयं । सा । मित्रं । वनुते । जने । चित् ॥१२॥

कियती किंपरिमाणा योषा स्त्रीजातिर्मर्यतो मनुष्यसंबंधिनो भोगानाचरतो वधूयोः स्त्रीकामस्य सर्वात्मकस्यांतर्यामिरूपेणावस्थितस्येंद्रस्य परिप्रीता । अनुरक्ता । वशवर्तिनीत्यर्थः । कीदृशस्य । वार्येण वरणीयेन पन्यसा स्तोत्रेण स्तुतस्य सत इति शेषः । अपि च यदा वधूर्भद्रा कल्याणी सुपेशाः शोभनरूपा च भवति सा द्रौपदीदमयंत्यादिका वधूः स्वयमात्मनैव जने चिज्जनमध्येऽवस्थितमिति मित्रं प्रियमर्जुननलादिकं पतिं वनुते । याचते । स्वयंवरधर्मेण प्रार्थयते । स च प्रीयमाणो वरजनोऽहमेवेत्यभिप्रायः । रूपंरूपं प्रतिरूपो बभूव । ऋ॰ ६. ४७. १८. । इति मंत्रलिंगात्सर्वात्मकत्वादिति ॥

पत्तो जंगार प्रत्यंचमत्ति शीर्ष्णा शिरः प्रति दधौ वरूथं ।
आसीन ऊर्ध्वामुपसि क्षिणाति न्यङ्ङुत्तानामन्वेति भूमिं ॥१३॥
पत्तः । जगार । प्रत्यंचं । अत्ति । शीर्ष्णा । शिरः । प्रति । दधौ । वरूथं ।
आसीनः । ऊर्ध्वां । उपसि । क्षिणाति । न्यङ् । उत्तानां । अनु । एति । भूमिं ॥१३॥

अत्रादित्यात्मनेंद्रः स्तूयते तदंशत्वात् । आदित्यरूपींद्रः पत्तो रश्म्याख्यैः पादैर्जगार । वृष्टिलक्षणमुदकं गिरति गृह्णाति वा । गृहीत्वा च प्रत्यंचमात्मानं प्रतिगतमुदकमत्ति । भक्षयति । मंडलेऽवस्थापयतीत्यर्थः । तदनंतरं वरूथं वरणीयं वृष्टिलक्षणमुदकं शीर्ष्णा शिरःस्थानीयेन रश्मिजालेन शिरः सर्वस्य लोकस्य मस्तकं प्रति दधौ । दधाति । प्रतिक्षिपतीत्यर्थः । किंचोपस्युपस्थे स्वसमीपस्थाने मंडल आसीन उपविष्टः सन्नूर्ध्वामुन्नतां स्वदीप्तिं क्षिणाति । हिनस्ति । आलोककरणाय प्रक्षिपतीत्यर्थः । न्यङ् रश्मिसमूहरूपेण नीचैरंचिता गंता सन्नुत्तानां विस्तृतां भूमिमन्वेति । अनुगच्छति ॥

बृहन्नच्छायो अंपलाशो अर्वा तस्थौ माता विषितो अत्ति गर्भः ।
अन्यस्यां वत्सं रिहती मिमाय कया भुवा नि दधे धेनुरूधः ॥१४॥
बृहन् । अच्छायः । अपलाशः । अर्वा । तस्थौ । माता । विऽसितः । अत्ति । गर्भः ।
अन्यस्याः । वत्सं । रिहती । मिमाय । कया । भुवा । नि । दधे । धेनुः । ऊधः ॥१४॥

वसुक्रोऽनयादित्यात्मानमिंद्रं स्तौति । बृहन्महानादित्योऽच्छायश्छायावर्जितः । तमोरहित इत्यर्थः । अपलाशः पर्णरहितः पराशदनवर्जितः । विनाशरहित इत्यर्थः । अर्वा सततगामी तस्थौ । तिष्ठति । किंच माता वृष्टिप्रदानद्वारेण सर्वस्य जगतो निर्माता विषितो विमुक्तः । निरालंबन इत्यर्थः । गर्भस्त्रिलोकस्य गर्भभूत आदित्यात्मेंद्रोऽत्ति । हवींषि भक्षयति । यद्वा । अनेन विनाशनं लक्ष्यते । पापानि नाशयति । किंचान्यस्या अदित्याख्याया देवमातुर्वत्समपत्यभूतमादित्यं रिहत्यास्वादयंत्युपजीवंती वर्धयंती मिमाय । निर्मिमीते । पूर्वस्यां दिश्यहन्यहन्युत्पादयतीत्यर्थः । कया भुवा केन भावेनाभिप्रायेण । भक्त्या भयेन वेत्यर्थः । धेनुर्धीरुदकस्याधारत्वात् चरितृत्वाद्वोधःस्थानीयमादित्यं नि दधे । स्थापयति । यद्वा । धेनुर्गौरूधो यथा तद्वदादित्यं द्यौर्धारयति ॥

सप्त वीरासो अधरादुदायन्नष्टोत्तरात्तात्समंजग्मिरन्ते ।
नव पश्चातात्स्थिविमंत आयन्दश प्राक्सानु वि तिरंत्यश्नः ॥१५॥
सप्त । वीरासः । अधरात् । उत् । आयन् । अष्ट । उत्तरात्तात् । सं । अजग्मिरन् । ते ।
नव । पश्चातात् । स्थिविऽमंतः । आयन् । दश । प्राक् । सानु । वि । तिरंति । अश्नः ॥१५॥

अनयेंद्रः प्रजापतिरूपेण स्तूयते । सप्त सप्तसंख्याका वीरासः प्रजापतेः पुत्रा विश्वामित्रादयोऽधरात्प्रजा-

पतेरधःकायादुदायन्। उत्पन्ना बभूवुः। अष्टाष्टसंख्याकास्ते प्रसिद्धा वालखिल्यादय उत्तरासादुत्तरात्कायप्रदेशात्समजग्मिरन्। संजज्ञिरे। स्थिविमंतः स्थानवंतो नव नवसंख्याका भृगवः पश्चातात्पृष्ठत आयन्। आगताः। उत्पन्ना इत्यर्थः। तथा दश दशसंख्याका अंगिरसः प्रागयत उत्पन्नाः संतोऽग्नोऽशनवती द्युलोकस्य सानून्नतप्रदेशं वि तिरंति। वर्धयंति॥ अपर आह। सप्तसंख्योपेता वीरा मरुतोऽधरादिंद्रस्य दक्षिणभागादुद्गमन्। अष्टसंख्याकास्ते मरुत उत्तरभागात्संगच्छंते। स्थानवंतो नवसंख्याकास्ते मरुतः पृष्ठभागादागच्छंति। दशसंख्याकास्तेऽग्नोऽशनवत इंद्रस्य प्राक्प्रदेशे स्थिताः समुच्छ्रितमुदकं तेजो वा वि तिरंति। मरुतः प्रतिदिशमवस्थायेंद्रस्य साहाय्यं कुर्वंतीत्यर्थः॥ ॥१७॥

दशानामेकं कपिलं समानं तं हिन्वंति क्रतवे पार्याय।
गर्भं माता सुधितं वक्षणास्ववेनंतं तुषयंती बिभर्ति॥१६॥
दशानां। एकं। कपिलं। समानं। तं। हिन्वंति। क्रतवे। पार्याय।
गर्भं। माता। सुऽधितं। वक्षणासु। अवेनंतं। तुषयंती। बिभर्ति॥१६॥

दशानां दशसंख्याकानां पूर्वोक्तानामेवांगिरसां मध्य एकं मुख्यं कपिलमेतन्नामानं तं प्रसिद्धमृषिं। कीदृशं। समानं सदृशं। केन। सामर्थ्यात्प्रजापतिना। हिन्वंति। अवशिष्टा अंगिरसः प्रेरयंति। किमर्थं। क्रतवे यज्ञादिजगत्प्रवर्तनकर्मणे। यद्वा। सम्यग्ज्ञानलक्षणप्रज्ञानाय। कीदृशाय। पार्याय परिसमापयितव्याय। प्रणेतव्याय वा। यज्ञादिकर्मोपदेशनायेत्यर्थः। माता प्रकृत्याख्या च वक्षणासु। वक्षणा इति नद्य उच्यंते। ताभिश्चापो लक्ष्यंते। प्रकृतिस्थासु सूक्ष्मास्वप्सु सुधितं सुहितं। प्रजापतिना स्थापितमित्यर्थः। अवेनंतं। वेनतिः कांतिकर्मा। तत्र निवासमकामयमानं तादृशं प्रजापतेर्गर्भं तुषयंती तुष्यंती सम्यग्ज्ञानादुपदेष्टुं योग्योऽयमिति प्रीता सती बिभर्ति। प्रजापतेर्नियोगाद्धारयति॥

पीवानं मेषमपचंत वीरा न्युप्ता अक्षा अनु दीव आसन्।
द्वा धनुं बृहतीमप्स्वं१तः पवित्रवंता चरतः पुनंता॥१७॥
पीवानं। मेषं। अपचंत। वीराः। निऽउप्ताः। अक्षाः। अनु। दीवे। आसन्।
द्वा। धनुं। बृहतीं। अप्ऽसु। अंतरिति। पवित्रऽवंता। चरतः। पुनंता॥१७॥

वीराः प्रजापतेः पुत्रा अंगिरसः पीवानं स्थूलं। मेदोमांसादियुक्तमित्यर्थः। मेषमजमपचंत। प्रजापतिरूपस्येंद्रस्यार्थाय पक्ववंतोऽभवन्। पशुयागं कुर्वंत इत्यर्थः। किंच। लुप्तोपममेतत्। यथा देवानामक्षा दीवे देवने रमणस्थाने न्युप्ता निक्षिप्ताः संतोऽन्वासन् संक्रीडमानयोर्द्वयोरेकतरस्यानुगता भवंति तथा सर्वेऽंगिरसः प्रजापतेरनुगता भवंति। द्वांगिरसां मध्ये द्वावंगिरसौ धनुं। धनुशब्दोऽत्र धनुःशब्दपर्यायो धनशब्दपर्यायो वा। धनुर्यथा वधसाधनं तथाज्ञानादिवधसाधनं धनवत्प्रीतिकरं वा। कपिलमित्यर्थः। बृहतीं प्रजापतेराज्ञया वर्धयित्रीं प्रकृतिमप्स्वंतः प्रकृतिस्थानां सूक्ष्माणामुदकानां मध्ये चरतः। प्रजापत्यादेशादाराधयतः। कीदृशौ। पवित्रवंता पवित्रवंतौ। मंत्रः पवित्रमुच्यते। ध्यानसाधनप्रणवमंत्रवंतौ पुनंता शुद्धौ। प्रणवध्यानेनात्मानं संस्कुर्वंतावित्यर्थः॥

वि क्रोशनासो विष्वंच आयन्पचाति नेमो नहि पक्षदर्धः।
अयं मे देवः सविता तदाह द्र्वन्न इद्वनवत्सर्पिरन्नः॥१८॥
वि। क्रोशनासः। विष्वंचः। आयन्। पचाति। नेमः। नहि। पक्षत्। अर्धः।
अयं। मे। देवः। सविता। तत्। आह। दुऽअन्नः। इत्। वनवत्। सर्पिःऽअन्नः॥१८॥

वि क्रोशनासो विविधं प्रजापतिं पितरमाह्वयंतो विष्वंचो नानागतयो नानापूजना वा सर्वेऽंगिरस आयन्। आगच्छन्। प्रजापतेः सकाशादुत्पन्ना इत्यर्थः। उत्पद्यमानो नेमोऽर्धोऽंगिरसां मध्य एको भागः पचाति। प्रजापत्यर्थं हवींषि पचति। अर्धोऽपरो भागो नहि पचत्। नहि पचति। एतत्सर्वं कथमज्ञायि उच्यते। अयमीदृशो देवो द्योतमानः सविता सर्वस्य प्रेरक आदित्यो वा प्रजापतिर्वा मे मह्यं तत्सर्वं यथोक्तमाह। किंच सर्पिरन्नो घृतौदनो द्रून्न इहार्वौदनोऽग्निरपि वनवत्। हविर्द्वारेण प्रजापतिं वनुते। संभजते॥

अपश्यं ग्रामं वहमानमाराद॑चक्रया स्वधया वर्तमानं।
सिषक्त्यर्यः प्र युगा जनानां सद्यः शिश्ना प्रमिनानो नवीयान् ॥१९॥
अपश्यं। ग्रामं। वहमानं। आरात्। अचक्रया। स्वधया। वर्तमानं।
सिसक्ति। अर्यः। प्र। युगा। जनानां। सद्यः। शिश्ना। प्रऽमिनानः। नवीयान् ॥१९॥

अपश्यं। वसुक्रोऽहं प्रजापतिरूपमिंद्रं सम्यग्ज्ञानेन दृष्टवानस्मि। कीदृशं। ग्रामं ग्रामभूतं संघं वहमानं वाहयंतं। सृजंतमित्यर्थः। कुतः। आराद्दूरात्। उपादानकारणात्प्रकृतित इत्यर्थः। अचक्रया चक्रवर्जितया रथहीनया स्वधया स्वयमात्मानं धारयंत्या सेनया वर्तमानमागच्छंतं। एवंभूतमपश्यमित्यर्थः। किंचार्यः सर्वस्य स्वामींद्रो जनानां यजमानानां कार्यत्वेन संबंधिनो युगा युगानि यज्ञकालविशेषान्प्र सिषक्ति। प्रकर्षेण सेवते। कीदृशः। सद्यस्तदानीमेव शिश्ना शिश्नानि। शिश्नं श्नथतेरिति निर्वचनात्। नि॰ ४.१९.। श्नथितॄणि ताडयितॄणि राक्षसादिवृंदानि प्रमिनानः प्रकर्षेण हिंसन्नवीयान्शरीरेण च बलपौरुषनयनादिभिश्च नवतरः॥

एतौ मे गावौ प्रमरस्य युक्तौ मो षु प्र सेधीर्मुहुरिन्ममंधि।
आपश्चिदस्य वि नशंत्यर्थं सूरश्च मर्क उपरो बभूवान् ॥२०॥
एतौ। मे। गावौ। प्रऽमरस्य। युक्तौ। मो इति। सु। प्र। सेधीः। मुहुः। इत्। ममंधि।
आपः। चित्। अस्य। वि। नशंति। अर्थं। सूरः। च। मर्कः। उपरः। बभूवान् ॥२०॥

कार्यकारणयोरुपचारादात्मा वै पुत्रनामासीति वचनादिंद्ररूपेणावस्थितस्य प्रमरस्य प्रकर्षेण शत्रूणां मारयितुर्मे मम स्वभूतावेतावेतादृशौ युक्तौ सुष्ठु पूजितौ गावौ शत्रून्यज्ञांश्च प्रति गंतारौ हरी मो प्र सेधीः। स्तुत्युपसंहारकरणेनास्मद्यज्ञान्मापगमय। किं तर्हि मुहुरिन्मुहुर्मुहुर्ममंधि। पुनःपुनः स्तुहि ममात्मन्नित्यर्थः। आपश्चिद्वृष्टिलक्षणान्युदकान्यप्यस्येंद्रस्यार्थं गतिं वि नशंति। विनशतिर्व्याप्तिकर्मा। व्याप्नुवंति। तथा सूरश्च सूर्यश्च व्याप्नोति। कीदृशः। मर्को मार्जयिता सर्वस्य शोधयितोपरो मेघसदृशो बभूवान् भवन्। मेघवच्छीघ्रगतिः सन्नित्यर्थः॥ ॥१८॥

अयं यो वज्रः पुरुधा विवृत्तोऽवः सूर्यस्य बृहतः पुरीषात्।
श्रव इदेना परो अन्यदस्ति तदव्यथी जरिमाणस्तरंति ॥२१॥
अयं। यः। वज्रः। पुरुधा। विऽवृत्तः। अवः। सूर्यस्य। बृहतः। पुरीषात्।
श्रवः। इत्। एना। परः। अन्यत्। अस्ति। तत्। अव्यथी। जरिमाणः। तरंति ॥२१॥

योऽयं वज्र इंद्रस्य स्वभूतः सूर्यस्यादित्यस्य बृहतो महतः पुरीषात्पूरकान्मंडलादवोऽवस्तादधोभागे स्थितेषु विवृत्तो वृष्ट्यर्थं प्रवृत्तः पतितः। इच्छब्दोऽप्यर्थे। तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः। परः परस्तादंतरिक्षलोकस्योपरि स्थिते सूर्यमंडले स्थितमेनैतत्। श्रव इत्यन्ननाम। तद्धेतुत्वादुदकं श्रव इत्युच्यते। यदप्युदकं मेघोदरगतादुदकादन्यदप्यस्ति अव्यथी व्यथारहिता जरिमाणः स्तोतारो मरुदादयस्तत्तादृशमुदकं तरंति। अंतरिक्षलोकं प्रत्यवतारयंति॥

वृक्षेवृक्षे नियता मीमयद्गौस्ततो वयः प्र पतान्पूरुषादः ।
अथेदं विश्वं भुवनं भयात इंद्राय सुन्वदृषये च शिक्षत् ॥२२॥
वृक्षेऽवृक्षे । निऽयता । मीमयत् । गौः । ततः । वयः । प्र । पतान् । पुरुषऽअदः ।
अर्थ । इदं । विश्वं । भुवनं । भयाते । इंद्राय । सुन्वत् । ऋषये । च । शिक्षत् ॥२२॥

वृक्षे वृक्षे सर्वस्मिन्वृक्षमये धनुषि नियता संबद्धा गौर्गोसंबंधिनी स्नायुमती मौर्वी मीमयत्। मीमयतिः शब्दकर्मा । आकृष्यमाणा सती शब्दं करोति । ततस्तस्माद्धनुषः पुरुषादः शत्रुजनानामत्तारः । मारयितार इत्यर्थः । वयः पक्षिसदृशा गंतारो बाणाः प्र पतान्। शत्रून्प्रति प्रपतंति। अथ तदानीमिंद्रायेंद्रार्थं सुन्वत्सोमयागं कुर्वदृषये च शिक्षत्कर्मणां द्रष्ट्र ऋत्विजे च संपूर्णां दक्षिणां ददद्पीदमीदृशं विश्वं समस्तं भुवनं भूतजातं भयाते। इंद्राद्बिभेति। अन्यत्किमुतेत्यर्थः ॥

देवानां माने प्रथमा अतिष्ठन्कृंतत्रादेषामुपरा उदायन् ।
त्रयस्तपंति पृथिवीमनूपा द्वा बृबूकं वहतः पुरीषं ॥२३॥
देवानां । माने । प्रथमाः । अतिष्ठन् । कृंतत्रात् । एषां । उपराः । उत् । आयन् ।
त्रयः । तपंति । पृथिवीं । अनूपाः । द्वा । बृबूकं । वहतः । पुरीषं ॥२३॥

देवानां सर्वेषां माने निर्माणे । सृष्टिकाल इत्यर्थः । जगत्स्थितिहेतुभूतरसानुप्रदानकर्मणि स्रष्टव्यत्वेन प्रथमा अतिष्ठन्। इंद्रादेशादेते पूर्वं स्थिताः । क एते । मेघाः । कुत एतदवगम्यते । परस्मिन्पादे तेषामनुकथनात् । उक्तं हि । मेघा एव माध्यमिका देवगणा इति । नि° २. २२. । एषामेवंभूतानां मेघानां कृंतत्राच्छेदनादुपराः । मेघनामैतत् । तत्रस्था आप उच्यंते । मेघस्था आप उदायन् । उत्पन्नाः । वृष्टिभावेन भूमौ निपातिता इत्यर्थः । पातितास्वप्स्विंद्रस्याज्ञया पर्जन्यो वायुरादित्य इत्येते त्रयो देवाः पृथिवीं भूमिं । तत्रस्था ओषधीरित्यर्थः । तपंति । वृष्टिशीतोष्णैः संतापयंति । पाचयंतीत्यर्थः । कीदृशाः । अनूपा वर्षादीनामानुपूर्व्येण वप्तारः प्रभावयितारः । प्रक्षेप्तार इत्यर्थः । द्वा द्वौ वाय्वादित्यौ पाचितास्वोषधीषु स्थितं पुरीषं सर्वस्य प्रीणयितृ वा बृबूकमुदकमादित्यमंडलं प्रति वहतः । वायुः शोषयन् आदित्यो रश्मिभिराददान इत्यर्थः ॥

सा ते जीवातुरुत तस्य विद्धि मा स्मैतादृगप गूहः समर्ये ।
आविः स्वः कृणुते गूहते बुसं स पादुरस्य निर्णिजो न मुच्यते ॥२४॥
सा । ते । जीवातुः । उत । तस्य । विद्धि । मा । स्म । एतादृक् । अप । गूहः । सऽमर्ये ।
आविः । स्व१रिति स्वः । कृणुते । गूहते । बुसं । सः । पादुः । अस्य । निःऽनिजः ।
न । मुच्यते ॥२४॥

अत्रांतरात्मेंद्रः स्तूयते । हे अंतरात्मन् ते तव सा तादृश्यादित्यात्मिका देवता जीवातुर्जीविका जीवनहेतुः । उतापि च तस्यादित्यस्यैतादृगीदृशं स्वरूपं समर्ये । संग्रामवाची समर्यशब्दोऽत्र यज्ञवाची । यज्ञे विद्धि । जानीहि । स्तुत्यत्वेनेति शेषः । मा स्माप गूहः । मा खल्वपवृणोः । किंच निर्णिजः सर्वस्य शोधयितुरादित्यस्य स पादुस्तस्य पादनं गमनं रश्मिद्वारेण गत्वा स्वः सर्वं त्रैलोक्यमाविष्कृणुते । प्रकाशीकरोति । बुसमुदकं गूहते । संवृणोति । आदत्त इत्यर्थः । अस्य प्रयोजनद्वयायादित्येन निर्वेदनाक्रमेण वा गमनं न मुच्यते । न कदाचित्परित्यज्यत इत्यर्थः ॥ ॥१९॥

विश्वो हीति द्वादशर्चं द्वादशं सूक्तं त्रैष्टुभं । इंद्रवसुक्रयोः पितापुत्रयोः संवादोऽत्र क्रियते । पुरा वसुक्रे

यज्ञं कुर्वाणे सतींद्रः प्रच्छन्नरूप आजगाम। तं वसुक्रपत्नींद्रागमनाकांक्षिणी विप्रकृष्टमिवाख्ययासीत्। अतस्तस्याः सर्षिः इंद्रो देवता। अथ तस्याः प्रीत्यै वसुक्रेण सहेंद्रः संवादमकरोत्। द्वितीयादियुजश्चतुर्थीरहिताः पंचर्च इंद्रवाक्यानि। अतस्तासां स ऋषिः। यद्यप्यासु वसुक्रः संबोध्यत्वाद्देवता तथापि ता ऋच ऐंद्रे कर्मणि विनियोक्तव्या इंद्रलिंगसद्भावात्। चतुर्थीसहिताः शिष्टास्तृतीयाद्या वसुक्रवाक्यानि। अतः स ऋषिस्तासां इंद्रो देवता। तथा चानुक्रांतं। विश्वो हि द्वादशेंद्रवसुक्रयोः संवाद ऐंद्रः सूक्तस्य प्रथमयेंद्रस्य स्नुषा परोक्षवदिंद्रमाहेंद्रस्य युजः शेषा ऋषेश्चतुर्थी चेति॥ गतो विनियोगः॥

विश्वो ह्य१न्यो अरिराजगाम ममेदह श्वशुरो ना जगाम।
जक्षीयाद्धाना उत सोमं पपीयात्स्वाशितः पुनरस्तं जगायात्॥१॥
विश्वः। हि। अन्यः। अरिः। आऽजगाम। मम। इत्। अह। श्वशुरः। न। आ। जगाम।
जक्षीयात्। धानाः। उत। सोमं। पपीयात्। सुऽआशितः। पुनः। अस्तं। जगायात्॥१॥

अनया वसुक्रपत्नींद्रं स्तौति। अन्य इंद्रव्यतिरिक्तोऽरिरर्य ईश्वरो विश्वो हि सर्व एव देवगण आजगाम। अस्मद्यज्ञं प्रत्यायया॥। इदित्यवधारणे। अहेत्यद्भुते। सर्वदेवगण आगते सति ममैव श्वशुर इंद्रो ना जगाम। स इंद्रो यद्यागच्छेत् तर्हि धाना भृष्टयवाञ्जक्षीयात्। भक्षयेत्। उतापि च सोममभिषुतं पपीयात्। पिबेत्। ततः स्वाशितः सुष्ठु भुक्तस्तृप्तः सन् पुनर्भूयोऽस्तं स्वगृहं प्रति जगायात्। गच्छेत्॥

स रोरुवद्वृषभस्तिग्मशृंगो वर्ष्मन्तस्थौ वरिमन्ना पृथिव्याः।
विश्वेष्वेनं वृजनेषु पामि यो मे कुक्षी सुतसोमः पृणाति॥२॥
सः। रोरुवत्। वृषभः। तिग्मऽशृंगः। वर्ष्मन्। तस्थौ। वरिमन्। आ। पृथिव्याः।
विश्वेषु। एनं। वृजनेषु। पामि। यः। मे। कुक्षी इति। सुतऽसोमः। पृणाति॥२॥

वृषभः कामानां वर्षिता तिग्मशृंगस्तीक्ष्णरश्मिः स इंद्रोऽहं पृथिव्या अंतरिक्षस्य वर्ष्मन् वर्ष्मणि। वर्ष्मन्शब्द उन्नतवचनः स्थिरवचनो वा। एवंभूते वरिमन् विस्तीर्णे प्रदेशे रोरुवद्भृशं शब्दायमानः सन्ना तस्थौ। आतिष्ठामि। एवंभूतोऽहं विश्वेषु सर्वेषु वृजनेषु संग्रामेष्वेनमीदृशं वसुक्रं यजमानं पामि। रक्षामि। यो यजमानः सुतसोमोऽभिषुतसोमो मे मम कुक्षी उभौ पार्श्वौ पृणाति सोमरसपुरोडाशादिहविर्भिः पूरयति। ईदृशं रक्षामीति संबंधः॥

अद्रिणा ते मंदिन इंद्र तूयान्सुन्वंति सोमान्पिबसि त्वमेषां।
पचंति ते वृषभाँ अत्सि तेषां पृक्षेण यन्मघवन्हूयमानः॥३॥
अद्रिणा। ते। मंदिनः। इंद्र। तूयान्। सुन्वंति। सोमान्। पिबसि। त्वं। एषां।
पचंति। ते। वृषभान्। अत्सि। तेषां। पृक्षेण। यत्। मघऽवन्। हूयमानः॥३॥

हे इंद्र ते त्वदर्थं मंदिनो मादयितृंस्तूयानविलंबितान्सोमानद्रिणाभिषवग्राव्णा सुन्वंति। यजमाना अभिषुण्वंति। एषामस्मदादियजमानानां संबंधिनः सोमांस्त्वं पिबसि। किंच त्वदर्थं वृषभान्पशून्ये च यजमानाः पचंति तेषां संबंधिनो हविर्भूतान्पशूनत्सि। भक्षयसि। हे मघवन्धनवन्निंद्र त्वं यदा पृक्षेण हविर्भूतेनान्नेन निमित्तेन हूयमानः यजमानैर्हूयसे तदेति पूर्वेण संबंधः॥

इदं सु मे जरितरा चिकिद्धि प्रतीपं शापं नद्यो वहंति।
लोपाशः सिंहं प्रत्यंचमत्साः क्रोष्टा वराहं निरतक्त कक्षात्॥४॥

इदं। सु। मे। जरितः। आ। चिकिद्धि। प्रतिऽईपं। शापं। नद्यः। वहंति।
लोपाशः। सिंहं। प्रत्यंचं। अत्सारिति। क्रोष्टा। वराहं। निः। अतक्त। कक्षात् ॥४॥

हे जरितः शत्रूणां जरयितरिंद्र त्वं मे मम सु शोभनमपीदमीदृशं रूपं सामर्थ्यमा चिकिद्धि। आ समंताज्जानीहि। कीदृशं। नद्यो गंगाद्याः सरितः प्रतीपं प्रतिकूलं शापमुदकं वहंति। अपि च लोपाशः। लुप्यमानं तृणमश्नातीति लोपाशो मृगः। मया प्रेषितः सन् प्रत्यंचमात्मानं प्रति गच्छंतं सिंहमत्साः। अत्सारीत्। आभिमुख्येन गच्छति। तथा क्रोष्टा शृगालो वराहं बलवंतमपि सूकरं कक्षादतिगहनदेशान्निरतक्त। निर्गमयति। एतदपि सर्वं सामर्थ्यं त्वत्पुत्रे मयि त्वत्प्रसादाल्लब्धमपि जानीहीत्यर्थः ॥

कथा त एतदहमा चिकेतं गृत्संस्य पाकस्तवसो मनीषां।
त्वं नो विद्वाँ ऋतुथा वि वोचो यमर्धं ते मघवन्क्षेम्या धूः ॥५॥
कथा। ते। एतत्। अहं। आ। चिकेतं। गृत्संस्य। पाकः। तवसः। मनीषां।
त्वं। नः। विद्वान्। ऋतुऽथा। वि। वोचः। यं। अर्धं। ते। मघऽवन्। क्षेम्या। धूः ॥५॥

हे इंद्र पाकः पक्तव्यप्रज्ञोऽहं गृत्सस्य मेधाविनस्तवसो वृद्धस्य ते तव मनीषां स्तुतिं। कर्तुमिति शेषः। एतदीदृशं त्वदीयं सामर्थ्यं कथा कथं केन प्रकारेण चिकेतं। आ समंताज्जानामि। त्वदुपदेशं विना न जानामीत्यर्थः। तस्मात्कारणाद्विद्वान् सर्वज्ञस्त्वमेव नोऽस्मभ्यमृतुथा काले काले वि वोचः। विशेषेण ब्रूहि। हे मघवन्धनवन्निंद्र ते तवार्धं यं स्तुत्यवयवं कुर्मः सा स्तुतिर्धूः क्षेम्या क्षेमे भवा क्लेशरहिता वोढुं शक्यास्ति। यस्मात्तव स्तुत्यवयवमेव वयमक्लेशेन कर्तुं न शक्नुमोऽस्माकं मंदबुद्धित्वात् तस्मात्त्वमेवास्मभ्यं स्वसामर्थ्यं स्तुतिप्रकारं च पुनरपि कथयेत्यर्थः ॥

एवा हि मां तवसं वर्धयंति दिवश्चिन्मे बृहत उत्तरा धूः।
पुरू सहस्रा नि शिशामि साकमशत्रुं हि मा जनिता जजान ॥६॥
एव। हि। मां। तवसं। वर्धयंति। दिवः। चित्। मे। बृहतः। उत्ऽतरा। धूः।
पुरु। सहस्रा। नि। शिशामि। साकं। अशत्रुं। हि। मा। जनिता। जजान ॥६॥

हि यस्मात्कारणादेवैवमुक्तप्रकारेण तवसं प्रवृद्धं मां स्तोतारः स्तुतिभिः स्तुवंतो वीर्येण वर्धयंति तस्मात्कारणाद्बृहतो महतो मे ममेंद्रस्य दिवश्चिद्द्युलोकादपि धूः स्तुतिरुत्तरोन्नततराधिकतरा। किंच पुरु पुरूणि बहूनि सहस्रा शत्रूणां सहस्राणि साकं युगपन्नि शिशामि। तनूकरोमि। हिनस्मीत्यर्थः। हि यस्मात्कारणाज्जनिता सर्वस्य जनयिता प्रजापतिर्मा मामिंद्रमशत्रुमविद्यमानशत्रुं जजान जनितवान् ॥ ॥२०॥

एवा हि मां तवसं जज्ञुरुग्रं कर्मन्कर्मन्वृषणमिंद्र देवाः।
वधीं वृत्रं वज्रेण मंदसानोऽप व्रजं महिना दाशुषे वं ॥७॥
एव। हि। मां। तवसं। जज्ञुः। उग्रं। कर्मन्ऽकर्मन्। वृषणं। इंद्र। देवाः।
वधीं। वृत्रं। वज्रेण। मंदसानः। अप। व्रजं। महिना। दाशुषे। वं ॥७॥

हि यस्मात्कारणादेवैवमनेनोक्तप्रकारेण हे इंद्र देवा मरुदादय ऋत्विग्यजमाना वा तवसं महांतं त्वत्पुत्रं त्वद्रूपेणावस्थितं संतं वसुक्रं मां कर्मन्कर्मन् वृत्रवधादिरूपे सर्वस्मिन्कर्मण्युग्रं शूरमसह्यं वा वृषणं वर्षितारं हविषां दातारं जज्ञुः जानंति अतो मंदसानो मोदमानोऽहं वज्रेणायुधेन वृत्रं मेघासुरं वधीं। अवधिषं।

किंच दाशुषे हविर्दत्तवते यजमानाय वृष्टिप्रदानार्थं महिना महत्त्वेन व्रजं मेघसमूहमप वं। अपावं। अपवृणोमि ॥

देवास आयन्परशूँरबिभ्रन्वना वृश्चंतो अभि विड्भिरायन्।
नि सुद्र्वं१ दधतो वक्षणासु यत्रा कृपीटमनु तद्दहंति ॥८॥

देवासः। आयन्। परशून्। अबिभ्रन्। वना। वृश्चंतः। अभि। विट्ऽभिः। आयन्।
नि। सुऽद्र्वं। दधतः। वक्षणासु। यत्र। कृपीटं। अनु। तत्। दहंति ॥८॥

देवासो देवा इंद्रेण चोदिताः संत आयन्। गच्छंति। मेघवधार्थं परशून्वज्रानबिभ्रन्। धारयंति च। तदनंतरं विड्भिर्मरुदादिप्रजाभिः सहिता वृश्चंतो मेघांश्छिंदंतो वना वनानि वृष्टिलक्षणान्युदकान्यभ्यायन्। आभिमुख्येन गच्छंति। ततः सुद्र्वं शोभनद्रवणं वृष्ट्युदकं वक्षणासु नदीषु नि दधतो नियमेन स्थापयंतो यत्र यस्मिन्मेघजाते कृपीटं। उदकनामैतत्। निगूढमुदकं तिष्ठति त इमे देवास्तन्मेघजातमनु लक्षीकृत्य दहंति। उदकनिर्गमनार्थं शोषयंति ॥

शशः क्षुरं प्रत्यंचं जगाराद्रिं लोगेन व्यभेदमारात्।
बृहंतं चिदृहते रंधयानि वयद्वत्सो वृषभं शूशुवानः ॥९॥

शशः। क्षुरं। प्रत्यंचं। जगार। अद्रिं। लोगेन। वि। अभेदं। आरात्।
बृहंतं। चित्। ऋहते। रंधयानि। वयत्। वत्सः। वृषभं। शूशुवानः ॥९॥

वसुक्र इंद्रं प्रतिब्रूते। शश एतत्संज्ञितो मया प्रेरितो मृगविशेषः प्रत्यंचं वधायात्मानं प्रति गच्छंतं क्षुरं क्षुरवंतं दृढदीर्घतीक्ष्णनखं सिंहव्याघ्रादिकं। बलवत्क्रूरमृगमित्यर्थः। जगार। गिरति गृह्णाति वा। किंच लोगेन लोष्टेनाद्रिं हिमवदादिकं पर्वतमाराद्दूरे स्थितमपि व्यभेदं। अहं भिनद्मि। बृहंतं चिन्महांतमपि हस्त्यादिकमृहते ह्रस्वकायाल्पाय शशकादिकाय रंधयानि। वशं गमयानि। शूशुवानो वीर्येण वर्धमानो वत्सो वृषभं महोक्षं वयत्। युद्धाय गच्छति। हे इंद्र एतदपि सर्वं त्वत्प्रसादादहं करोमीत्यर्थः ॥

सुपर्ण इत्था नखमा सिषायावरुद्धः परिपदं न सिंहः।
निरुद्धश्चिन्महिषस्तर्ष्यावान्गोधा तस्मा अयथं कर्षदेतत् ॥१०॥

सुऽपर्णः। इत्था। नखं। आ। सिसाय। अवऽरुद्धः। परिऽपदं। न। सिंहः।
निऽरुद्धः। चित्। महिषः। तर्ष्याऽवान्। गोधा। तस्मै। अयथं। कर्षत्। एतत् ॥१०॥

सुपर्णः पक्षिरूपा गायत्रीत्थामुत्र द्युलोके नखमात्मीयमा सिषाय। सोमाहरणकाल इंद्रार्थमाबबंध। इंद्रस्य प्रसादाद्दिवि पदं न्यस्तवतीत्यर्थः। तत्र दृष्टांतः। अवरुद्धः पंजरेणावृतः परिवेष्टितः सिंहः परिपदं न। यथा करस्योपरि सर्वतः पादमवबध्नाति। किंच। चिदित्युपमार्थे। यथा केनापि बद्धपादो निरुद्धो महिषस्तर्ष्यावानुदकाभावे तृषावान्भवति एवमिंद्रः सोमाहरणात्पूर्वं सोमाभावे तृषितवानभूदिति शेषः। तस्मै। तादर्थ्ये चतुर्थी। तादृशस्य तृषितस्येंद्रस्यार्थं गोधा। गमयति वर्णानिति गौर्वाक् तत्र निधीयमानत्वाद्गायत्री गोधा। यद्वा। गुधिर्निष्कर्षणार्थः। निष्कृष्टसोमाहरणाद्गोधा गायत्री। अयथमयत्नेन। लीलयेत्यर्थः। एतत्सोमजातं कर्षत्। आकृष्टवती। दिवः सकाशादाहृतवतीत्यर्थः ॥

तेभ्यो गोधा अयथं कर्षदेतद्ये ब्रह्मणः प्रतिपीयंत्यन्नैः।
सिम उक्ष्णोऽवसृष्टाँ अदंति स्वयं बलानि तन्वः शृणानाः ॥११॥

तेभ्यः । गोधाः । अयथं । कर्षत् । एतत् । ये । ब्रह्मणः । प्रतिऽपीयंति । अन्नैः ।
सिमः । उक्ष्णः । अवऽसृष्टान् । अदंति । स्वयं । बलानि । तन्वः । शृणानाः ॥११॥

ये मरुदादिदेवगणा ब्रह्मणः परिवृढस्येंद्रस्य स्वभूतैरन्नैः सोमाख्यैः । तृप्ताः संत इति शेषः । प्रतिपीयंति । पीयतिर्हिंसाकर्मा । इंद्रादेशाद्धिंसकान्प्रतिहिंसंति तेभ्यस्तेषां देवगणानामर्थाय गोधाः पूर्वोक्ता गायत्र्ययथमनायासेनैतत्सोमजातं कर्षत् । आकृष्टवती । किंच सिमः सिमाञ्श्रेष्ठान् । यद्वा । सिमशब्दः सर्वशब्दपर्यायः । सर्वान् । उक्ष्णः सिंचतोऽवसृष्टानिंद्रेण निसृष्टाननुज्ञातान्हविर्भूतान्सोमान्यज्ञेष्वदंति । भक्षयंति । किं कुर्वंतः । स्वयमात्मनैव बलानि शत्रूणां सैन्यानि तन्वः शरीराणि च शृणाना हिंसंतः । गायत्रींद्रादेशाद्देवेभ्यः सोममाहृतवतीत्यर्थः ॥

एते शमीभिः सुशमी अभूवन्ये हिन्विरे तन्वः सोम उक्थैः ।
नृवद्वदन्नुप नो माहि वाजान्दिवि श्रवो दधिषे नाम वीरः ॥१२॥
एते । शमीभिः । सुऽशमी । अभूवन् । ये । हिन्विरे । तन्वः । सोमे । उक्थैः ।
नृऽवत् । वदन् । उप । नः । माहि । वाजान् । दिवि । श्रवः । दधिषे । नाम । वीरः ॥१२॥

ये देवर्ष्यादयस्तन्वः शरीराणि सोमे सोमयाग उक्थैः शस्त्रैर्हिन्विरे वर्धयंति एते देवादय इंद्रादेशात्सोम आहृते सति शमीभिः सोमयागकर्मभिः सुशमी सुकर्माणोऽभूवन् । नृवन्मनुष्यवद्वदन् इदं युष्मभ्यं मया दत्तमिति व्यक्तां वाचमुच्चारयन् नोऽस्मभ्यमुप माहि । उपगम्य वाजानन्नानि बलानि वा हे इंद्र त्वं देहीति शेषः । अतः कारणाद्वीरो दानशूरस्त्वं दिवि द्युलोके श्रवो दानपतिरिति कीर्तितं नाम नामधेयं दधिषे । धारयसि ॥ ॥२१॥

वने न वेत्यष्टर्चं त्रयोदशं सूक्तं वसुक्रस्यार्षं त्रैष्टुभमैंद्रं । अनुक्रांतं च । वने नाष्टाविति ॥ चतुर्थेऽहनि स्तोमवृद्धौ ब्राह्मणाच्छंसिन एतत्सूक्तमावापार्थं । सूचितं च । स्तोमे वर्धमाने को अद्य नर्यो वने न वा यः । आ० ७. १२. । इति ॥ महाव्रते निष्केवल्य एतत्सूक्तं । सूचितं च । प्र वो महे मंदमानायांधस इति निविद्धानं वने न वा यो न्यधायि चाकन् । ऐ० आ० ५. ३. १. । इति ॥

वने न वा यो न्यधायि चाकञ्छुचिर्वां स्तोमो भुरणावजीगः ।
यस्येदिंद्रः पुरुदिनेषु होता नृणां नर्यो नृतमः क्षपावान् ॥१॥
वने । न । वा । यः । नि । अधायि । चाकन् । शुचिः । वां । स्तोमः । भुरणौ । अजीगरिति ।
यस्य । इत् । इंद्रः । पुरुऽदिनेषु । होता । नृणां । नर्यः । नृऽतमः । क्षपाऽवान् ॥१॥

वने न वायो न्यधायीति । वने न वन इव वृक्ष इव शकुनिः स्वे नीडे वायमात्मीयं पुत्रं न्यधायि निदधाति शिशुकमजातपक्षं । स यथा तत्र निहितश्चाकन्पश्यन् भयाद्दिशो निरीक्षमाण आसीत् । अथवा । कामयमानस्तदुत्सुकमना आसीत् । एवमयमस्मासु वृक्षस्य नीडभूतेषु शकुनिपुत्रभूतः शुचिर्व्यपगतसर्वदोषो युवयोः स्वभूतः स्तोमः हे भुरणौ भर्तारावश्विनौ शीघ्रौ वा । भुरण्युरिति क्षिप्रनामेति । किंच यस्य स्तोमस्य पुरुदिनेषु बहुष्वहःस्विंद्रो होतेंद्रोऽप्याह्वाता भवति ममायं स्तोमः स्यादिति । किंलक्षणः पुनरिंद्र आह्वाता । यो नृणां मनुष्याणां नृतमः मनुष्याणामपि मनुष्यतमः । शूराणामपि मध्ये शूरतम इत्यर्थः । नर्यश्च नृभ्यो हितो यः क्षपावांश्च रात्रिपर्यायेषु सोमभागः । एवंगुणयुक्तेन यः स्तोम इंद्रेणापि प्रार्थ्यतेऽस्मासु वर्तमानः स युवां प्रत्यजीगः । नित्यकालमेव गच्छतीत्यर्थः । एतावदेतामृचमाश्विनीमिति कृत्वा व्याचक्षते । तदसाधु । ऐंद्रे हि सूक्ते प्रथमैवेयं भवति । तत्र पुनः पृष्ठ्यस्य षष्ठेऽहनि स्तोमे वर्धमाने माध्यंदिने सवने ब्राह्मणाच्छंसिनः शस्त्रे

विनियुज्यते। हे भुरणी भर्तारौ देवानां पती य एष सोमोऽस्मासु निहितः शुचिर्व्यपगतदोषः शकुनिपुत्र इव वने वनावयवे वृक्षे चाकन्पश्यन्निव कामयमान इव वेंद्रमास्ते। यस्य सोमस्य किमिति। यस्येंद्रः पुरुदिनेषु बहुष्वहःस्वाह्वाताभूत् अपि नाम मामनेन सोमेन स्तुयुरिति। किंलक्षणः पुनराह्वाता। यस्येदिंद्र इति नृणां नृतमो नर्यश्च अपावांश्च समानमेतत्पूर्वेणार्थेन। यमेवमिंद्रः प्रार्थयते स एष सोमस्तं प्रत्यजीगः। गच्छतीत्यर्थः। अथवा स एष सोमोऽस्माभिरुदीर्यमाणस्तस्येंद्रस्य गुणान्गृह्णातीति स्यात्। जिगर्तिर्गृह्णातिकर्मेति ह्युक्तं। नि॰ ६.८.। एवमत्र चाकन्नित्यस्य चायन्निति वा कामयमान इति वेत्येतौ विपरिणामावुपपद्येते शब्दसारूप्यादर्थाविरोधाच्च। एतस्मिन्निगमे पदविभागगतः कश्चिद्विचारोऽस्ति। तमाह भाष्यकारः। वेति च य इति च चकार शाकल्य इति। वेति य इति च पदे चकार शाकल्यः पदकारः। तदेतद्विचार्यमाणं न साधु भवति। किं कारणं। उदात्तं त्वेवमाख्यातमभविष्यत्। एवमेतस्मिन्पदद्वये सति यदेतदाख्यातं न्यधायीति तदुदात्तमभविष्यत्। यद्वृत्तात्परस्य नित्यमाख्यातस्य निघातो न भवतीति लक्षणविदो मन्यंते। न चेदमुदात्तं तस्माद्य इति नेदं यद्वृत्तं किंतर्हि वाय इत्येकमेव पदं। किंच। असुसमाप्तश्चार्थः। अपुष्कलः। एवमेव तस्मिन्पदद्वये सति मंत्रस्यार्थोऽसुसमाप्तो भवति॥

प्र ते अस्या उषसः प्रापरस्या नृतौ स्याम नृतमस्य नृणां।
अनु त्रिशोकः शतमावहन्नॄन्कुत्सेन रथो यो असत्ससवान् ॥२॥
प्र। ते। अस्याः। उषसः। प्र। अपरस्याः। नृतौ। स्याम। नृऽतमस्य। नृणां।
अनु। त्रिऽशोकः। शतं। आ। अवहत्। नॄन्। कुत्सेन। रथः। यः। असत्। ससऽवान् ॥२॥

अस्या वर्तमानाया ईदृश्या उषसो नृतौ॥ नृ नये॥ नयने प्रापणे। उदयकाल इत्यर्थः। नृणां नेतॄणां मध्ये नृतमस्यातिशयेन नेतुस्ते तवेंद्रस्य स्तुत्या यागेन च प्र स्याम। वयं प्रकृष्टा भवेम। तथा हे इंद्र अपरस्या आगामिन्याश्चोषसो नृतौ प्रापणे तव स्तुत्या यागेन च वयं प्रकृष्टा भवेमेत्याशास्महे। किंच त्रिशोको नामर्षिर्हे इंद्र त्वामाराध्य त्वत्प्रसादाच्छतं बहूनन्वनुचरभूतान्नॄन्मनुष्यानावहत्। प्रापितवान्। लब्धवानित्यर्थः। तथा तव कुत्सस्य च ससवान् सनिता युगपदेव संभक्ता यो रथोऽसत् अस्ति स रथः कुत्सेन। कुत्सो लब्धवानिति शेषः। तथा च मंत्रांतरे श्रूयते। यासि कुत्सेन सरथमवस्युः। ऋ॰ ४.१६.११.। इति। यस्मादेवं तस्मात्त्वत्प्रसादाद्वयं प्रकृष्टा भवेमेत्यर्थः॥

कस्ते मद इंद्र रंत्यो भूद्दुरो गिरो अभ्युग्रो वि धाव।
कद्वाहो अर्वागुप मा मनीषा आ त्वा शक्यामुपमं राधो अन्नैः ॥३॥
कः। ते। मदः। इंद्र। रंत्यः। भूत्। दुरः। गिरः। अभि। उग्रः। वि। धाव।
कत्। वाहः। अर्वाक्। उप। मा। मनीषा। आ। त्वा। शक्यां। उपऽमं। राधः। अन्नैः ॥३॥

हे इंद्र ते तवेषन्मध्यमोत्तमानां सोमजन्यानां मदानां मध्ये को मदो रंत्यो रमयिता प्रीतिकरो भूत्। भवति। त्वत्प्रीतिकरमदयोग्यसोमदानाभिप्रायेणायं प्रश्नः। उग्र ओजस्वी त्वं दुरो यज्ञगृहद्वाराणि गिरः स्तुतिलक्षणा वाचश्चाभि वि धाव। अभ्यागच्छ। किंच कत् कदा वाहः। इंद्रं प्रत्युह्यत इति वाहः सोम उच्यते। एवंभूतोऽर्वाक् त्वत्प्रसादात्फलदानायास्मदभिमुखो भविष्यतीति शेषः। अपि च कदा मनीषा सर्वार्थदर्शना प्रज्ञा सर्वगुणग्राहिणी स्तुतिर्वा मा मां त्वत्प्रसादादुपगमिष्यतीति शेषः। कदा हे इंद्र त्वा त्वां। आ इत्युपसर्गश्रुतेर्योग्यपदाध्याहारः। आराध्य वयमन्नैः सह राधो धनमुपमं मत्समीपं शक्यां। शकिरत्र गत्यर्थोऽतर्भावितण्यर्थः। संगमयेयं॥

कदु द्युम्नमिंद्र त्वावतो नॄन्कया धिया करसे कन्न आगन्।
मित्रो न सत्य उरुगाय भृत्या अन्ने समस्य यदसन्मनीषाः ॥४॥

कत्। ऊं इति। द्युम्नं। इंद्र। त्वाऽवतः। नॄन्। कया। धिया। करसे। कत्। नः। आ। अगन्।
मित्रः। न। सत्यः। उरुऽगाय। भृत्यै। अन्ने। समस्य। यत्। असन्। मनीषाः ॥४॥

हे इंद्र त्वं कदु कदा वा द्युम्नं हविर्लक्षणमस्मदीयमन्नं भुंक्ष्वेति शेषः। कया धिया केन कर्मणा नॄन्नॄन्मांस्त्वावतस्त्वत्सदृशान्करसे। करिष्यसि। कत् कदा नोऽस्मान्प्रत्यागन्। आगमिष्यसि। सत्यः। अनवद्य इत्यर्थः। मित्रो न सखेव तथा। हे उरुगाय बहुकीर्त इंद्र त्वं भृत्यै भरणाय पोषणाय भवसीति शेषः। यद्यदा समस्यास्मदादिकस्य सर्वस्य जगतोऽन्ने जगत्स्थितिनिमित्त आहारे मनीषा अन्नाभिलक्षणा बुद्धयोऽसन् भवेयुः। तदा सर्वस्य पोषणाय त्वं भवसीत्यर्थः॥

प्रेरय सूरो अर्थं न पारं ये अस्य कामं जनिधा इव ग्मन्।
गिरश्च ये ते तुविजात पूर्वीर्नर इंद्र प्रतिशिक्षंत्यन्नैः ॥५॥
प्र। ईरय। सूरः। अर्थं। न। पारं। ये। अस्य। कामं। जनिधाःऽइव। ग्मन्।
गिरः। च। ये। ते। तुविऽजात। पूर्वीः। नरः। इंद्र। प्रतिऽशिक्षंति। अन्नैः ॥५॥

सूरः सूर्योऽर्थं न यथार्तारं गंतारं योगिनमनुगृह्णन् पारं संसारस्यांतमपवर्गं गमयति तथा हे इंद्र त्वं यजमानान्संसारस्यांतं प्रेरय। गमय। येऽस्मदादयो यजमाना अस्य तवेंद्रस्य कामं सोमपानेच्छां ग्मन्। गमिरत्र विपूर्वोऽंतर्भावितण्यर्थश्च द्रष्टव्यः। विगमयंति महता सोमपानेनापनयंति। तत्र दृष्टांतः। जनिधा इव जनीनां जायानां संभोगकाले शय्यासु धारयितारः पतयो यथा प्रभूतसंभोगप्रदानेन मैथुनेच्छामपनयंति तद्वत्। किंच नरो नेतारोऽस्मदादयो ये यजमाना हे तुविजात बहुरूप। रूपंरूपं प्रतिरूपो बभूव। ऋ॰ ६. ४७.१८.। इति वचनात्। सर्वात्मन्निंद्र ते तुभ्यं पूर्वीरनादिकालप्रवृत्ता गिरश्च स्तुतिलक्षणा वाचश्चान्नैः पुरोडाशादिहविर्भिः सह प्रतिशिक्षंति प्रतिकालं प्रयच्छंति तानस्मदीयान्यजमानान्पारं गमयेति पूर्वेण संबंधः॥ ॥२२॥

माच्ने नु ते सुमिते इंद्र पूर्वी द्यौर्मज्मना पृथिवी काव्येन।
वराय ते घृतवंतः सुतासः स्वाद्मन्भवंतु पीतये मधूनि ॥६॥
माच्ने इति। नु। ते। सुमिते इति सुऽमिते। इंद्र। पूर्वी इति। द्यौः। मज्मना।
पृथिवी। काव्येन।
वराय। ते। घृतऽवंतः। सुतासः। स्वाद्मन्। भवंतु। पीतये। मधूनि ॥६॥

हे इंद्र ते तव स्वभूतेन मज्मना शत्रूणां मज्जकेन काव्येन कर्मणा द्यौः पृथिवी द्यावापृथिव्यौ नु क्षिप्रं सुमिते। निर्मिते। कीदृश्यौ। माच्ने निर्मात्र्यौ पूर्वी पूर्व्यौ महत्यौ। यस्मादीदृशेन महत्त्वेन युक्तः तस्माद्घृतवंतोऽभिमुखत्वात् त्वां क्षरंतो दीप्तिमंतो वा सुसंस्कृतत्वात् यद्वाज्यसंयुक्ताः सुतासोऽभिषुताः सोमा वराय श्रेष्ठाय तुभ्यमिंद्राय स्वाद्मन् भवंतु। आस्वादिताः संतु। किमर्थं। पीतये पानाय। मधूनि मधुररसात्मकानि पुरोडाशादीन्यन्नानि हवींषि भक्षणार्थं दत्तानि भवंतु॥

आ मध्वो अस्मा असिचन्नमत्रमिंद्राय पूर्णं स हि सत्यराधाः।
स वावृधे वरिमन्ना पृथिव्या अभि क्रत्वा नर्यः पौंस्यैश्च ॥७॥

आ। मध्वः। अस्मै। असिचन्। अमत्रं। इंद्राय। पूर्णं। सः। हि। सत्यऽराधाः।
सः। ववृधे। वरिमन्। आ। पृथिव्याः। अभि। क्रत्वा। नर्यः। पौंस्यैः। च ॥७॥

अस्मा इंद्रायेंद्रार्थं मध्वो मधुररसस्य सोमस्य पूर्णममत्रं ग्रहचमसादिकं पात्रमासिचन्। आभिमुख्येन स्थित्वा परया भक्त्यास्मदीया ऋत्विजः सिक्तवंतः। असौ प्रचिप्तवंतः। हि यस्मात्कारणात्स इंद्रः सत्यराधाः सत्यधनः। यजमानेभ्यो दातव्यस्याविसंवादिधन इत्यर्थः। तस्मादसिचन्निति संबंधः। अमावासिक्तेन तेन पात्रेण तृप्तः स इंद्रः पृथिव्या अंतरिक्षस्य वरिमन्नतिशयेन विस्तीर्णे स्थान आगत्याभि ववृधे। अभिवर्धते। कीदृश इंद्रः। नर्यो नृभ्यो हितः। क्रत्वा वृत्रवधादिकर्मणा प्रज्ञानेन वा पौंस्यैश्च युक्त इति शेषः॥

व्यानळिंद्रः पृतनाः स्वोजा आस्मै यतंते सख्याय पूर्वीः।
आ स्मा रथं न पृतनासु तिष्ठ यं भद्रया सुमत्या चोदयासे ॥८॥
वि। आनट्। इंद्रः। पृतनाः। सुऽओजाः। आ। अस्मै। यतंते। सख्याय। पूर्वीः।
आ। स्म। रथं। न। पृतनासु। तिष्ठ। यं। भद्रया। सुऽमत्या। चोदयासे ॥८॥

स्वोजाः शोभनबल इंद्रः पृतनाः शत्रुसेना व्यानट्। व्याप्नोति। स इंद्रः संग्रामेषु केनाप्यप्रतिहन्यमानः सञ्छत्रूञ्जयतीत्यर्थः। किंच पूर्वीः। अत्र पूर्वशब्द उत्कृष्टवाची। उत्कृष्टाः शत्रुसेना अप्रभवंत्यः सत्योऽस्मा अस्येंद्रस्य सख्याय संधिलक्षणाय सखित्वाया यतंते। संधिं कर्तुमिच्छंतीत्यर्थः। अपरोऽर्धर्चः प्रत्यक्षकृतत्वाद्भिन्नं वाक्यं। हे इंद्र त्वं यं स्वीयं रथं भद्रया कल्याण्या सुमत्या शोभनया परानुग्रहया बुद्ध्या चोदयासे यज्ञान्प्रति प्रेरयसि तं रथमस्मयज्ञं प्रत्यागंतुं महतादरेण तिष्ठ। आरोह। तत्र दृष्टांतः। पृतनासु संग्रामेषु रथं न यथा स्वरथं महतादरेणातिष्ठसि तद्वत्। स्मेति पदपूरणः॥ ॥२३॥ ॥२॥

तृतीयेऽनुवाके त्रयोदश सूक्तानि। तत्र प्र देवत्रेति पंचदशर्चं प्रथमं सूक्तं। इलूषपुत्रस्य कवषस्यार्षं त्रैष्टुभमब्देवत्यमपांनपाद्देवताकं वा। तथा चानुक्रांतं। प्र देवत्रा पंचोना कवष ऐलूष आपमपोनप्त्रीयं वेति॥ अपयिष्य होतरित्युक्तः सन् होता प्र देवत्रेत्याद्या नवर्चोऽनुब्रूयात्। सूत्रितं च। प्र देवत्रा ब्रह्मणे गातुरेत्विति नव हिनोता नो अध्वरं देवयज्येति दशमीं। आ० ५.१.। इति॥

प्र देवत्रा ब्रह्मणे गातुरेत्वपो अच्छा मनसो न प्रयुक्ति।
महीं मित्रस्य वरुणस्य धासिं पृथुज्रयसे रीरधा सुवृक्तिं ॥१॥
प्र। देवऽत्रा। ब्रह्मणे। गातुः। एतु। अपः। अच्छ। मनसः। न। प्रऽयुक्ति।
महीं। मित्रस्य। वरुणस्य। धासिं। पृथुऽज्रयसे। रीरध। सुऽवृक्तिं ॥१॥

ब्रह्मणे। तृतीयार्थे चतुर्थी। ब्रह्मणा स्तोत्रेण। स्तूयमान इति शेषः। गातुर्देवानपो वा प्रतिगमनशीलः सोमो देवत्रा देवीर्द्योतमाना अपो वसतीवर्यैकधनालक्षणान्युदकान्यच्छाभि प्रैतु। प्रकर्षेण गच्छतु। तत्र दृष्टांतः। मनसो न प्रयुक्ति यथा मनसः प्रयुक्तिः प्रयोग उद्योगः शीघ्रं गच्छति तद्वत्। एवं सोमेऽपः प्रतिगते सति हे मदीयात्मन् अध्वर्यो वा महीं धासिं महत्सोमलक्षणमन्नं मित्रस्य वरुणस्य चार्थाय पृथुज्रयसे विस्तीर्णजवाय। महागतेरिंद्रस्य चार्थायेत्यर्थः। रीरध। संसाधय। संस्कुरु। दानयोग्यं कुरु। सुवृक्तिं सुष्ठु दोषैर्वर्जितां स्तुतिं च कुरु॥

अध्वर्यवो हविष्मंतो हि भूताच्छाप इतोशतीरुशंतः।
अव याश्चष्टे अरुणः सुपर्णस्तमास्यध्वमूर्मिमद्या सुहस्ताः ॥२॥

अध्वर्यवः । हविष्मंतः । हि । भूत । अच्छ । अपः । इत । उशतीः । उशंतः ।
अवं । याः । चष्टे । अरुणः । सुऽपर्णः । तं । आ । अस्यध्वं । ऊर्मिं । अद्य । सुऽहस्ताः ॥२॥

हे अध्वर्यवः यूयं हविष्मंतो ह्यभिषोतव्येन सोमलक्षणेन हविषा युक्ताः खलु भूत । भवत । किंच हे उशंतः सोमाभिषवं कर्तुं कामयमाना अध्वर्यवः यूयमुशतीः सोमाभिषवांगभावमभिलषंतीरेकधनालक्षणा अपो ऽच्छाभिमुख्येनेत । गच्छत । अरुणो रक्तवर्णः सुपर्णः सुपतनः सोमोऽवाधस्तादंतरिक्षे या मेघोदरगता अपश्चष्टे पश्यति हे सुहस्ताः सोमाभिषवादिशोभनकर्मकारित्वात् सुवर्णमयपवित्राद्यलंकृताः । यद्वा । शोभनहस्ताः । एतेऽध्वर्यवः यूयमद्येदानीं तं तादृशमूर्मिं सोमसंघातं ताभिरद्भिः सहास्यध्वं । आभिमुख्येन क्षिप्त महतादरेण दशापवित्रे शोधनार्थं प्रक्षिपत ॥

अध्वर्यवोऽप इता समुद्रमपां नपातं हविषा यजध्वं ।
स वो ददूर्मिमद्या सुपूतं तस्मै सोमं मधुमंतं सुनोत ॥३॥
अध्वर्यवः । अपः । इत । समुद्रं । अपां । नपातं । हविषा । यजध्वं ।
सः । वः । ददत् । ऊर्मिं । अद्य । सुऽपूतं । तस्मै । सोमं । मधुऽमंतं । सुनोत ॥३॥

हे अध्वर्यवः यूयमप एकधनालक्षणान्युदकानि । आहर्तुमिति शेषः । समुद्रमुदधिस्थानीयं जलाशयमित । गच्छत । इदानीमुत्तरोऽर्धर्चो व्याख्यायते पश्चाद्द्वितीयः पादः । स्वार्थिकोऽयं क्रमः । अद्येदानीं सोऽपां नपाद्वो जलाशयं प्रतिगतेभ्यो युष्मभ्यं सुपूतं सुपुतमूर्मिं जलसमूहं ददत् । ददातु । यूयमपि तेन समूहेन तस्मा अपां नपाते मधुमंतं मधुरस्वादूपेतं सोमं सुनोत । अभिषुणुत । अभिषुतेन सोमाख्येन हविषापां नपातं वृष्टिकर्मण्यधिकृतं देवं यजध्वं ॥

यो अनिध्मो दीदयदप्स्वं१तर्यं विप्रास ईळते अध्वरेषु ।
अपां नपान्मधुमतीरपो दा याभिरिंद्रो वावृधे वीर्याय ॥४॥
यः । अनिध्मः । दीदयत् । अप्ऽसु । अंतः । यं । विप्रासः । ईळते । अध्वरेषु ।
अपां । नपात् । मधुऽमतीः । अपः । दाः । याभिः । इंद्रः । ववृधे । वीर्याय ॥४॥

उत्तरार्धस्य प्रत्यक्षकृतत्वादेकवाक्यतायै युष्मच्छब्देन समानार्थो भवच्छब्दः प्रथमार्धेऽध्याहार्यः । यो भवानपां नपादप्स्वंतरपां मध्ये मेघस्थानेऽनिध्मः काष्ठवर्जितः सन् दीदयत् दीप्यते विप्रासो मेधाविन ऋत्विग्यजमाना अध्वरेषु यागेषु यं भवंतमीळते स्तुवंति हे अपां नपात् स त्वं मधुमतीर्मधुररसयुक्ता अपो वृष्टिलक्षणा दाः । अस्मभ्यं देहि । याभिर्वसतीवर्यैकधनारूपाभिः सोमेन मिश्रिताभिरद्भिरिंद्रो वीर्याय वृत्रवधादिशूरकर्मणे ववृधे वर्धते ता अपो देहीति संबंधः ॥

याभिः सोमो मोदते हर्षते च कल्याणीभिर्युवतिभिर्न मर्यः ।
ता अध्वर्यो अपो अच्छा परेहि यदासिंचा ओषधीभिः पुनीतात् ॥५॥
याभिः । सोमः । मोदते । हर्षते । च । कल्याणीभिः । युवतिऽभिः । न । मर्यः ।
ताः । अध्वर्यो इति । अपः । अच्छ । परा । इहि । यत् । आऽसिंचाः । ओषधीभिः ।
पुनीतात् ॥५॥

अभिषुतः सोमो याभिर्वसतीवर्यैकधनाख्याभिरद्भिः सह मोदते मुदितो भवति हर्षते च । पुनरुक्तिराद-

रार्था। अत्यर्थं हृष्यतीत्यर्थः। तत्र दृष्टांतः। कल्याणीभिः कमनीयाभिर्युवतिभिस्तरुणीभिः स्त्रीभिः सह मर्यो न यथा मनुष्यो मोदते तद्वत्। हे अध्वर्यो त्वं तास्तादृशीरपोऽच्छाभिप्राप्तुं परेहि। जलाशयं प्रतिगच्छ। किंच यद्यदाहृताभिस्ताभिरद्भिरासिंचाः आ समंतात्सोमानासिंचसि तदौषधीभिः सोमैः सहापश्च पुनीतात्। दशापवित्रेण पुनीहि॥ ॥२४॥

एवेद्यूने युवतयो नमंत यदीमुशन्नुशतीरेत्यच्छ।
सं जानते मनसा सं चिकित्रेऽध्वर्यवो धिषणापश्च देवीः॥६॥

एव। इत्। यूने। युवतयः। नमंत। यत्। ई। उशन्। उशतीः। एति। अच्छ।
सं। जानते। मनसा। सं। चिकित्रे। अध्वर्यवः। धिषणा। आपः। च। देवीः॥६॥

युवतयस्तरुण्यः स्त्रियो यूने तरुणाय नमंत यथा प्रह्वीभवंति एवैवं वसतीवर्येकधनाख्या आपः सोमाय प्रह्वीभवंति। यद्वा। युवतयः सोमेन सह मिश्रयित्र्य आपो यूनेऽभिषवादिकर्मणामात्मना सह मिश्रयित्रेऽध्वर्यवे नमंत। प्रह्वीभवंत्येव। इदिति पूरणः। कदा। यद्यदोशन्नभिषवार्थं वसतीवरीः कामयमानः सोमः सोमाभिषवं कर्तुं कामयमानोऽध्वर्युर्वोशतीः सोमेन सह मिश्रीभावमभिषवादिकर्मांगभावं च कामयमाना ईमेना अपोऽच्छ प्राप्तुमेति गच्छति तदोपनमंते। अध्वर्यवो धिषणा तदीया स्तुतिलक्षणा वाक्च देवीर्दिव्य आपश्च मनसा विशिष्टया बुद्ध्या सं जानते। सम्यग्जानंति। सं चिकित्रे। स्वं स्वमधिकारं परस्परोपकारं च चक्षुषा सम्यक् पश्यंति॥

यो वो वृताभ्यो अकृणोदु लोकं यो वो मह्या अभिशस्तेरमुंचत्।
तस्मा इंद्राय मधुमंतमूर्मिं देवमादनं प्र हिणोतनापः॥७॥

यः। वः। वृताभ्यः। अकृणोत्। ऊं इति। लोकं। यः। वः। मह्याः। अभिऽशस्तेः। अमुंचत्।
तस्मै। इंद्राय। मधुऽमंतं। ऊर्मिं। देवऽमादनं। प्र। हिणोतन। आपः॥७॥

य इंद्रो वृताभ्यो मेघैरावृताभ्यः परिवेष्टिताभ्यो वो युष्मभ्यमद्भ्यो लोकं मेघोदरान्निर्गमनमार्गमकृणोत् अकरोत्। उ इति पूरणः। किंच यो वो युष्मानपो मह्या महत्या अभिशस्तेर्मेघपरिवेष्टनाभिहिंसनादमुंचत् मोचितवान्। हे आपः यूयं तस्मै तादृशायेंद्राय मधुमंतं मधुरस्वादुयुक्तं देवमादनमिंद्रादिदेवानां सोमेन सह मिश्रीभूय तर्पयितारमूर्मिमप्संघातं प्र हिणोतन। अस्मद्यज्ञं प्रति गमयत। सोमाभिषवकर्मांगभावाय प्रस्थापयत॥

प्रास्मै हिनोत मधुमंतमूर्मिं गर्भो यो वः सिंधवो मध्व उत्सः।
घृतपृष्ठमीड्यमध्वरेष्वापो रेवतीः शृणुता हवं मे॥८॥

प्र। अस्मै। हिनोत। मधुऽमंतं। ऊर्मिं। गर्भः। यः। वः। सिंधवः। मध्वः। उत्सः।
घृतऽपृष्ठं। ईड्यं। अध्वरेषु। आपः। रेवतीः। शृणुत। हवं। मे॥८॥

अत्र यच्छब्दसंबंधाद्द्वितीयः पादः पूर्वं व्याख्येयः। हे सिंधवः स्यंदनशीला आपः वो युष्माकं यो गर्भो मध्वो मधुररसस्योत्स उत्स्यंदनः प्रस्रवणः। यच्छब्दयोगात्तच्छब्दोऽध्याहार्यः। तं मधुमंतं मधुररसोपेतमूर्मिमप्संघातं। सारमित्यर्थः। अस्मा अस्येंद्रस्यार्थाय प्र हिनोत। प्रहिणुत॥

तं सिंधवो मत्सरमिंद्रपानमूर्मिं प्र हेत य उभे इयर्ति।
मदच्युतमौशानं नभोजां परि त्रितंतुं विचरंतमुत्सं॥९॥

तं। सिंधवः। मत्सरं। इंद्रऽपानं। ऊर्मिं। प्र। हेत। यः। उभे इति। इयर्ति।
मदऽच्युतं। औशानं। नभःऽजां। परि। त्रिऽतंतुं। विऽचरंतं। उत्सं ॥९॥

हे सिंधवः स्यंदनशीला आपः यो युष्मदीयः सारभूतः समूह उभे अस्मभ्यं दृष्टादृष्टफले दाता सन्नियर्ति कर्मांगभावं प्रतिपद्यते मत्सरं मादयितारमिंद्रादिदेवानां तर्पयितारमिंद्रपानं देवानां प्रमुखेनेंद्रेण पानीयं तं तादृशमूर्मिमुदकसमूहं प्र हेत। प्रगमयत। अस्मयज्ञं प्रति प्रेरयत। कीदृशं। मदच्युतं मदस्य च्यावकमौशानं सोमेन सह मिश्रीभावं कामयमानं नभोजां नभस्यंतरिक्षे वृष्टिरूपेण जातं परि सर्वतस्त्रितंतुं त्रयाणां लोकानां तनितारं विस्तारयितारं विचरंतं यज्ञपात्रेषु गच्छंतमुत्समुत्स्यंदनं। तर्पितारं देवान्प्रत्यूर्ध्वं गंतारमित्यर्थः॥

अपोनप्त्रीय एकधनास्त्वावृत्तास्त्वावर्वृततीरित्येषा। सूत्रितं च। आवर्वृततीरध नु द्विधारा इत्यावृत्तास्वेकधनासु। आ॰ ५. १.। इति। तत्रैव हिनोता न इत्येषा। सूत्रं पूर्वमुदाहृतं॥

आवर्वृततीरध नु द्विधारा गोषुयुधो न नियवं चरंतीः।
ऋषे जनित्रीर्भुवनस्य पत्नीरपो वंदस्व सवृधः सयोनीः ॥१०॥
आऽवर्वृततीः। अध। नु। द्विऽधाराः। गोषुऽयुधः। न। निऽयवं। चरंतीः।
ऋषे। जनित्रीः। भुवनस्य। पत्नीः। अपः। वंदस्व। सऽवृधः। सऽयोनीः ॥१०॥

अधाथानंतरं गोषुयुधो न। गोष्वप्सु निमित्तभूतासु मेघैः सह युध्यत इति गोषुयुदिंद्रः। तस्य यथा वृष्टिलक्षणा अपो द्विधाराः। द्विशब्दोऽत्रानेकत्ववाची। अनेकधाराः। अपर्यंतधारा इत्यर्थः। अस्माकमप्येवंस्थिता आवर्वृततीरावृत्ता नियवं सोमं प्रति निश्चयेन मिश्रीभावं चरंतीर्गच्छंतीर्भुवनस्य लोकस्य जनित्रीर्जनयित्रीः पत्नीः पालयित्रीश्च सवृधः सह सोमस्य वर्धयित्रीः सयोनीः सोमेन सह समानस्थाना हे ऋषे मदीयांतरात्मन् अध्वर्यो वा त्वमेवंभूता अपो नु क्षिप्रं वंदस्व। स्तुहीत्यर्थः॥ ॥२५॥

हिनोता नो अध्वरं देवयज्या हिनोत ब्रह्म सनये धनानां।
ऋतस्य योगे वि ष्यध्वमूधः श्रुष्टीवरीर्भूतनास्मभ्यमापः ॥११॥
हिनोत। नः। अध्वरं। देवऽयज्या। हिनोत। ब्रह्म। सनये। धनानां।
ऋतस्य। योगे। वि। स्यध्वं। ऊधः। श्रुष्टीऽवरीः। भूतन। अस्मभ्यं। आपः ॥११॥

हे ऋत्विजः हिनोत प्रहिणुत प्रगमयत प्रोत्सर्पयतैतमध्वरं यज्ञं देवयज्या देवयज्यायै देवयजनार्थं। किंच प्रहिणुत ब्रह्म स्तुत्याख्यं यथाशास्त्रक्रमेण सनये लब्धये नोऽस्माकं धनानां। किंचर्तस्य यज्ञस्य योगे संयोगे यदेतदूधरिव सोमपूर्णमधिषवणचर्म वर्तते। अथवा योगसंबंधाच्छकटं योगः। तद्धि तत्रैव युज्यते। तेनाधिषवणचर्मण ऊधसोऽधस्तादवस्थितेनेति मन्यमानो निरुक्तकारो ब्रवीति यज्ञे शकट इति वा। नि॰ ६. २२.। इति। यदेतद्यज्ञशकटस्याधस्तादुपरि वाधिषवणचर्म एतद्वि ष्यध्वं। विमुंचध्वं। ग्रहचमसस्थाल्यादिषु यो निषेकः सोमस्यैतद्विमोचनमधिषवणचर्मोधसः। तद्धि सोम उत्सिच्यमाने स्रयीभवति यथेतरस्मादूधो दुह्यमानायां गवि। एवमृत्विज उक्त्वाधुनैव सोमसंमिश्रा अपो ब्रवीति। यूयमपि हे आपः एभिर्ऋत्विग्भिरुत्सिच्यमानाः श्रुष्टीवरीः सुखवत्यो भूतन। भवतास्मभ्यं। एवमत्र प्रशब्देनार्थस्य सुतरां प्रकटता भवतीति भाष्यकारेण प्रशब्दोऽध्याहृतः प्रहिणुतेति। अध्वरमित्यनेन संबंधाद्धिनोतेर्गत्यर्थत्वमुपपद्यते। एतस्या ऋचो व्याख्यानं निरुक्तटीकाया उद्धृतं॥

प्रातरनुवाकस्यापो रेवतीरित्येषा प्रतिपत्। सूत्रितं च। आपो रेवतीः क्षयथा हि वस्व उपप्रयंत इति सूक्ते। आ॰ ४. १३.। इति॥

आपो रेवतीः क्षयथा हि वस्वः क्रतुं च भद्रं बिभृथामृतं च ।
रायश्च स्थ स्वपत्यस्य पत्नीः सरस्वती तद्गृणते वयो धात् ॥१२॥
आपः । रेवतीः । क्षयथ । हि । वस्वः । क्रतुं । च । भद्रं । बिभृथ । अमृतं । च ।
रायः । च । स्थ । सुऽअपत्यस्य । पत्नीः । सरस्वती । तत् । गृणते । वयः । धात् ॥१२॥

हे आपो रेवती रेवत्यो धनवत्यः यूयं वस्वो वसुनो धनस्य क्षयथ हि । ईशिध्वे खलु । किंच भद्रं भजनीयं क्रतुं च सोमयागादिलक्षणं कर्म चामृतं चामरणरूपं तज्जन्यफलं च बिभृथ । धारयथ । पुष्णीथ वा । तथा रायश्च धनस्य च स्वपत्यस्य शोभनपुत्रस्य च पत्नीः पत्न्यः पालयित्र्यः स्थ । भवथ । तथा सरस्वती तदभिमानिनी देवता गृणते स्तुवते मह्यं तदिदं सर्वं वयोऽन्नलक्षणं धनं धात् । ददातु ॥

अपोनप्त्रीये प्रति यदाप इत्येषा । सूचितं च । प्रति यदापो अदृश्रमायतीरिति प्रतिदृश्यमानासु । आ० ५.१. । इति ॥

प्रति यदापो अदृश्रमायतीर्घृतं पयांसि बिभ्रतीर्मधूनि ।
अध्वर्युभिर्मनसा संविदाना इंद्राय सोमं सुषुतं भरंतीः ॥१३॥
प्रति । यत् । आपः । अदृश्रं । आऽयतीः । घृतं । पयांसि । बिभ्रतीः । मधूनि ।
अध्वर्युऽभिः । मनसा । संऽविदानाः । इंद्राय । सोमं । सुऽसुतं । भरंतीः ॥१३॥

हे आपः आयतीरस्मदभिमुखं प्रत्यागच्छंतीर्यत् ॥ सुपां सुलुगिति विभक्तेर्लुक् ॥ या युष्मान्प्रत्यदृश्रं प्रतिपश्यामि घृत सोमसंसृष्टमाज्यं मधूनि मधुसदृशानि मृष्टरसानि पयांस्युदकानि च संभूय बिभ्रतीर्यागकाले धारयंतीः तथाध्वर्युभिर्मनसांतःकरणेन संविदानाः संभाषमाणाः किंचेंद्रायेंद्रार्थं सुषुतं सुष्ठु सुतं सोमं भरंतीर्धारयंतीः एवंभूतास्ता युष्मान्स्तौमीति शेषः ॥

अपोनप्त्रीय एमा अग्मन्निति द्वे । सूचितं च । एमा अग्मन्रेवतीर्जीवधन्या इति द्वे सन्नासूत्तरया परिधाय । आ० ५. १. । इति ॥

एमा अंग्मन्रेवतीर्जीवधन्या अध्वर्यवः सादयता सखायः ।
नि बर्हिषि धत्तन सोम्यासोऽपां नप्त्रा संविदानास एनाः ॥१४॥
आ । इमाः । अग्मन् । रेवतीः । जीवऽधन्याः । अध्वर्यवः । सादयत । सखायः ।
नि । बर्हिषि । धत्तन । सोम्यासः । अपां । नप्त्रा । संऽविदानासः । एनाः ॥१४॥

रेवती रेवत्यो धनवत्यो जीवधन्या जीवानां पालयित्र्यः प्रीणयित्र्यो वेमा ईदृग्भूता आप आग्मन् । अस्मदभिमुखं प्रत्यागच्छन् । एतज्ज्ञात्वा हे सखायः सखिभूता हे अध्वर्यवः यूयमपां नप्त्रा वृष्टिकर्मस्वधिकृतेन देवेन सह संविदानाः संमंत्रयमाणा एना एता अपः सादयत । स्थापयत । कुत्र सादयाम इति उच्यते । सोम्यासः सोमसंपादिनोऽध्वर्यवः यूयं बर्हिषि वेद्यामास्तीर्णे कुशमये नि धत्तन । नियमेन स्थापयत ॥

आग्मन्नाप उशतीर्बर्हिरेदं न्यध्वरे असदन्देवयंतीः ।
अध्वर्यवः सुनुतेंद्राय सोममभूदु वः सुशका देवयज्या ॥१५॥

आ। अग्मन्। आपः। उशतीः। बर्हिः। आ। इदं। नि। अध्वरे। असदन्। देवऽयंतीः।
अध्वर्यवः। सुनुत। इंद्राय। सोमं। अभूत्। ऊं इति। वः। सुऽशका। देवऽयज्या ॥१५॥

आपो वसतीवर्येकधनाख्या इदमीदृशं बर्हिर्वेदिस्तरणमुशतीरुशत्यः कामयमाना आगमन्। आगच्छन्। अस्मद्यज्ञं प्रत्या आगत्य चाध्वरेऽस्मदीये यज्ञे देवयंतीर्देवान्कामयमानाः। तर्पयितुमिच्छंत्य इत्यर्थः। न्यसदन्। न्यसीदन्। एतज्ज्ञात्वा हे अध्वर्यवः यूयमिंद्रायेंद्रार्थं सोमं सुनुत। अभिषुणुत। इदानीमपां प्रसादाद्वो युष्माकं देवयज्या देवानिंद्रादीनुद्दिश्य क्रियमाणा यागक्रिया सुशका सुष्ठु कर्तुं शक्याभूदु। आसीदेव ॥ ॥२६॥

आ न इत्येकादशर्चं द्वितीयं सूक्तं कवषस्यार्षं त्रैष्टुभं वैश्वदेवं। अनुक्रांतं च। आ न एकादश वैश्वदेवमिति॥ गतः सूक्तविनियोगः॥ एकादशिनस्य वैश्वदेवस्य पशोः पुरोडाशस्या न इत्येषानुवाक्या। सूचितं च। विश्वे अद्य मरुतो विश्व ऊत्या नो देवानामुप वेतु शंसः। आ० ३. ७.। इति॥

आ नो देवानामुप वेतु शंसो विश्वेभिस्तुरैरवसे यजत्रः।
तेभिर्वयं सुषखायो भवेम तरंतो विश्वा दुरिता स्याम ॥१॥
आ। नः। देवानां। उप। वेतु। शंसः। विश्वेभिः। तुरैः। अवसे। यजत्रः।
तेभिः। वयं। सुऽसखायः। भवेम। तरंतः। विश्वा। दुःऽइता। स्याम ॥१॥

देवानां स्तोतॄणां नोऽस्माकं शंसः स्तोतव्यो यजत्रो यष्टव्यः एवंभूत इंद्रस्तुरैस्त्वरणशीलैर्विश्वेभिः सर्वैर्मरुद्भिः सहावसेऽस्मद्यज्ञरक्षणार्थमोप वेतु। उपागच्छतु। वयमपि तेभिस्तैः सह सुसखायः शोभनसखायो भवेम। स्याम। किंच विश्वा दुरिता विश्वानि दुरितानि पापानि तरंतः स्याम॥

परि चिन्मर्तो द्रविणं ममन्यादृतस्य पथा नमसा विवासेत्।
उत स्वेन क्रतुना सं वदेत श्रेयांसं दक्षं मनसा जगृभ्यात् ॥२॥
परि। चित्। मर्तः। द्रविणं। ममन्यात्। ऋतस्य। पथा। नमसा। आ। विवासेत्।
उत। स्वेन। क्रतुना। सं। वदेत। श्रेयांसं। दक्षं। मनसा। जगृभ्यात् ॥२॥

मर्तो मनुष्यो यजमानः परि चित्सर्वतो द्रविणं विश्वेषां देवानां यागार्थं धनं ममन्यात्। मन्यतिः कांतिकर्मा। कामयेत। लब्धुमिच्छेत्। धनं लब्ध्वा चर्तस्य यज्ञस्य पथा मार्गेण नमसा हविराख्येनान्नेना विवासेत्। परिचरेत्। उतापि च स्वेनात्मीयेन क्रतुना प्रज्ञानेन। मनसेत्यर्थः। सं वदेत। संवादोऽत्र समाध्यानमुच्यते। हविर्गृहीत्वा वषट्करिष्यन्विश्वान्देवान्मनसाध्यायेदित्यर्थः। विश्वेषां देवानां यागानंतरं च तत्प्रसादाच्छ्रेयांसमतिशयेन प्रशस्यमात्मानं दक्षं प्रवृद्धं सर्वव्यापिनं मनसा ध्यानसाधनेनांतःकरणेन जगृभ्यात्। गृह्णीयात्॥

अधायि धीतिरससृग्रमंशास्तीर्थे न दस्ममुप यंत्यूमाः।
अभ्यानश्म सुवितस्य शूषं नवेदसो अमृतानामभूम ॥३॥
अधायि। धीतिः। अससृग्रं। अंशाः। तीर्थे। न। दस्मं। उप। यंति। ऊमाः।
अभि। आनश्म। सुवितस्य। शूषं। नवेदसः। अमृतानां। अभूम ॥३॥

धीतिर्देवयागक्रियाधायि। निहिता। स्थापिता। अस्माभिः प्रवर्तितेत्यर्थः। तदनंतरमूमा अवितारस्तर्पयितारोंऽशा अस्माभिर्दत्ता हविर्भागा दस्मं दर्शनीयं शत्रूणामुपक्षपयितारं वासवयमसमानदृष्टिं। उत्कृष्टजन्मानमित्यर्थः। एवंभूतं देवसंघमुप यंति। उपगच्छंति। तत्र दृष्टांतः। तीर्थे न यथा गंगादितीर्थे तर्पणमुखे

विसृष्टा अपामंशा देवसंघमुपगच्छंति तद्वत्। तदनंतरं वयं सुवितस्य सु इतस्य सुष्ठु प्राप्तस्य स्वर्गादिकस्य शुषं सुखमभ्याश्याम। अभिप्राप्नवाम। किंच वयममृतानां देवानां नवेदसः॥ न वेदेत्येतस्मिन्नर्थे नवेदःशब्दो नभ्राण्नपान्नवेदा इति निपातितः॥ न न वेत्तारो वेत्तार एव। स्वरूपतो ज्ञातार एवेत्यर्थः। अभूम। भवेमेत्याशास्महे॥

नित्यश्चाकन्यात्स्वपतिर्दमूना यस्मा उ देवः सविता जजान।
भगो वा गोभिरर्यमेमनज्यात्सो अस्मै चारुश्छदयदुत स्यात् ॥४॥
नित्यः। चाकन्यात्। स्वऽपतिः। दमूनाः। यस्मै। ऊं इति। देवः। सविता। जजान।
भगः। वा। गोभिः। अर्यमा। ईं। अनज्यात्। सः। अस्मै। चारुः। छदयत्। उत। स्यात् ॥४॥

नित्यः कल्पावस्थायी प्रजापतिश्चाकन्यात्। तस्मै दृष्टादृष्टफलं दातुं कामयतां। कीदृशः। स्वपतिः स्वीयानां प्रजानां स्वामी धनपतिर्वा दमूना दानमनाः। कस्मै कामयतामिति उच्यते। उ उतापि च यस्मै यजमानाय मह्यं सविता सर्वस्य प्रेरको देवो जजान जनितवान् दृष्टादृष्टफलं दत्तवानित्यर्थः। वाशब्दः समुच्चये। तथा भगो देवश्च गोभिरस्मदीयाभिः स्तुतिरूपाभिर्वाग्भिरर्यमा देवश्चेमीदृग्भूतं दृष्टादृष्टफलमनज्यात्। व्यक्तीकुर्यात्। दद्यादित्यर्थः। उतापि च स्यात् अन्योऽपि यो देवगणोऽस्ति चारू रमणीयः सोऽपि देवगणोऽस्मै यजमानाय मह्यं छदयत्। दृष्टादृष्टफलं दातुं कामयतामित्येतदाशास्महे॥

इयं सा भूया उषसामिव क्षा यद्ध क्षुमंतः शवसा समायन्।
अस्य स्तुतिं जरितुर्भिक्षमाणा आ नः शग्मास उप यंतु वाजाः ॥५॥
इयं। सा। भूयाः। उषसांऽइव। क्षाः। यत्। ह। क्षुऽमंतः। शवसा। संऽआयन्।
अस्य। स्तुतिं। जरितुः। भिक्षमाणाः। आ। नः। शग्मासः। उप। यंतु। वाजाः ॥५॥

क्षुमंतः। क्षुशब्दोऽन्नवाची शब्दवाची वा। अन्नवंतः स्तुतिमंतः कीर्तिमंतो वेत्यर्थः। एवंभूता देवाः शवसा बलेन यद्यामस्मदीयां स्तुतिं प्रति समायन् समागच्छन् संप्राप्ताः सेयं स्तुतिर्देवानां प्राप्या भूयाः। भूयात्। भवतु। उषसामिव क्षाः यथा पृथिव्युषसां व्याप्त्या सर्वेषां प्राप्या भवति तद्वत्। किंच जरितुः स्तोतुरस्य मम स्तुतिं भिक्षमाणा याचमानाः शग्मासः। शग्ममिति सुखनाम। सुखाः सुखकरा वाजाः सुधन्वनः पुत्रास्त्रयोऽप्यृभुर्विभ्वा वाज इत्येते नोऽस्मानाभिमुख्येनोप यंतु। उपगच्छंतु॥ ॥२७॥

अस्येदेषा सुमतिः पप्रथानाभवत्पूर्व्या भूमना गौः।
अस्य सनीळा असुरस्य योनौ समान आ भरणे बिभ्रमाणाः ॥६॥
अस्य। इत्। एषा। सुऽमतिः। पप्रथाना। अभवत्। पूर्व्या। भूमना। गौः।
अस्य। सऽनीळाः। असुरस्य। योनौ। समाने। आ। भरणे। बिभ्रमाणाः ॥६॥

इदिदानीमस्य देवगणसंबंधिन्येषा सुमतिः सुष्टुस्तुतिः पप्रथानाभवत्। विस्तीर्यमाणाभूत्। अस्माभिः क्रियमाणेत्यर्थः। कीदृशी। पूर्व्या पूर्वकालीना भूमना भूम्ना बहुत्वेन युक्तेति शेषः। सर्वदेवसंबंधित्वाद्बहुशं आतेत्यर्थः। गौर्देवान्प्रतिगंत्री। एतज्ज्ञात्वा सर्वे देवा असुरस्य प्रजारूपबलवतोऽस्य मम संबंधिनि समाने सर्वदेवसाधारणे भरणे सर्वेषां देवानां पुष्टिकरे योनौ यज्ञाख्ये स्थाने सनीळाः समानस्थाना बिभ्रमाणा अस्मदर्थं दृष्टादृष्टफलं धारयंत आ गच्छंत्विति शेषः॥

किं स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः ।
संतस्थाने अजरे इतऊती अहानि पूर्वीरुषसो जरंत ॥७॥
किं । स्वित् । वनं । कः । ऊं इति । सः । वृक्षः । आस । यतः । द्यावापृथिवी इति ।
निःऽततक्षुः ।
संतस्थाने इति संऽतस्थाने । अजरे इति । इतऊती इतीतःऽऊती । अहानि ।
पूर्वीः । उषसः । जरंत ॥७॥

यतो यस्माद्वृक्षाद्द्यावापृथिवी द्यावापृथिव्यौ निष्टतक्षुः देवा निःशेषेण छतवंतः स तादृशो वृक्षः क उ आस । कीदृग्वा बभूव । तदुत्पादकं वनमरण्यं किं स्वित् । संतस्थाने सम्यक्तिष्ठंत्यावजरे जरावर्जिते इतऊती इत एतेभ्यो देवेभ्यो रक्षणं ययोस्ते । किंचाहानि सर्वाणि दिनानि पूर्वीर्बह्वीरुषसश्च देवा निष्टतक्षुः । एवंभूतान्देवाञ्जरंत । स्तोतारः स्तुवंति ॥

नैतावदेना परो अन्यदस्त्युक्षा स द्यावापृथिवी बिभर्ति ।
त्वचं पवित्रं कृणुत स्वधावान्यदीं सूर्यं न हरितो वहंति ॥८॥
न । एतावत् । एना । परः । अन्यत् । अस्ति । उक्षा । सः । द्यावापृथिवी इति । बिभर्ति ।
त्वचं । पवित्रं । कृणुत । स्वधाऽवान् । यत् । ईं । सूर्यं । न । हरितः । वहंति ॥८॥

द्यावापृथिव्योर्निर्माणरूपमेतावद्देवजातं सामर्थ्येन युक्तमिति न । अपि त्वेनैतेभ्यो देवेभ्यः पर उत्कृष्टोऽन्यदन्यो हिरण्यगर्भोऽस्ति । उक्षा सेक्ता । प्रजानां स्रष्टेत्यर्थः । हिरण्यगर्भः परमसूक्ष्मो वायुरूपो लिंगात्मापः प्रविश्य द्यावापृथिवी द्यावापृथिव्यौ बिभर्ति । धारयति । किंच स्वधावान्बलवानन्नवान्वा स हिरण्यगर्भः पवित्रं पवित्रमयं त्वचमात्मीयं शरीरं दीप्तं मंत्रं वा कृणुत । करोति । कदेति उच्यते । यद्यदेमिमां त्वचं हरितोऽश्वाः सूर्यं न वहंति न प्रापयंति तदेति । स्रष्टेः प्रागित्यर्थः ॥

स्तेगो न क्षामत्येति पृथ्वीं मिहं न वातो वि ह वाति भूम ।
मित्रो यत्र वरुणो अज्यमानोऽग्निर्वने न व्यसृष्ट शोकं ॥९॥
स्तेगः । न । क्षां । अति । एति । पृथ्वीं । मिहं । न । वातः । वि । ह । वाति । भूम ।
मित्रः । यत्र । वरुणः । अज्यमानः । अग्निः । वने । न । वि । असृष्ट । शोकं ॥९॥

स्तेगः ॥ स्त्यै ष्ट्यै शब्दसंघातयोः ॥ रश्मिसंघात्यादित्यः पृथ्वीं विस्तीर्णां क्षां भूमिं तेजसा नात्येति । नातिगच्छति । मर्यादया तिष्ठतीत्येवमादित्यः स्तूयते । वातो वायुरपि खलु भूम भूमिं मिहं वृष्टिं न वि वाति । समर्थोऽपि सन् विविधं न गमयति । भूमिं प्रति सावशेषमेव वर्षयतीति वातः स्तूयते । यत्र यस्मिन्प्रजापतौ मित्रो देवोऽज्यमानो व्यज्यमानो व्यक्तीभवन् । उत्पाद्यमान इत्यर्थः । शोकं स्वीयां दीप्तिं व्यसृष्ट विसृजति सर्वतो विक्षिपति तथा वरुणश्च व्यक्तीभवन्स्वदीप्तिं विक्षिपति । तत्र दृष्टांतः । अग्निर्देवो वने न यथा वृक्षसंघाते स्वदीप्तिं सर्वतो विसृजति तद्वत् । तादृशं प्रजापतिं स्तौमीति शेषः ॥

स्तरीर्यत्सूत सद्यो अज्यमाना व्यथिरव्यथीः कृणुत स्वगोपा ।
पुत्रो यत्पूर्वः पित्रोर्जनिष्ट शम्यां गौर्जगार यद्ध पृच्छान् ॥१०॥

स्तरीः । यत् । सूतं । सद्यः । अज्यमाना । व्यथिः । अव्यथीः । कृणुत । स्वऽगोपा ।
पुत्रः । यत् । पूर्वः । पित्रोः । जनिष्ट । शम्यां । गौः । जगार । यत् । ह । पृच्छान् ॥१०॥

अरण्योः कारणभूतां शमीं गोत्वेन रूपयति । स्तरीर्निवृत्तप्रसवा गौः सद्यः शीघ्रमज्यमाना निषिच्यमानैरेतस्का सती यद्यदा सूत वत्सं प्रसूते तदा व्यथिर्दुःखानां बाधयित्री स्वगोपा स्वायत्तगोप्तृका स्वभूतरक्षणा वा सती सा गौरव्यथीर्व्यथारहिताः प्रजाः कृणुत । करोति । यदा शमी पुत्रस्थानीयमश्वत्थं प्रसूते तदानीमरण्याहरणाय तादृशमश्वत्थमन्विष्यतामृत्विजामश्वत्थस्य जनयित्री शमी सुखहेतुर्भवतीत्यर्थः । शमीगर्भादश्वत्थादरणी आहर्तव्ये । श्रूयते हि । शमीगर्भादग्निं मंथंतीति । अपि च पूर्वः पुरातनः पुत्रः । पुन्नाम्नो नरकात्त्राता । यद्वा । पुत्रस्थानीयोऽग्निः । पित्रोर्जनयित्र्योररण्योः सकाशाद्यद्यदा जनिष्ट मथनेन प्रादुर्भवति तदानीं गौः पृथिवी तयोररण्योर्मातृभूतां शम्यामश्वत्थगर्भां तां शमीं ॥ सुपां सुलुगिति सुपो ड्यादेशः ॥ जगार । उद्गिरति । यत्र यां खलु शमीं पृच्छान् ऋत्विजः पृच्छंति वीप्संति गवेषयंति ॥

उत कण्वं नृषदः पुत्रमाहुरुत श्यावो धनमादत्त वाजी ।
प्र कृष्णाय रुशदपिन्वतोधर्ऋतमत्र नकिरस्मा अपीपेत् ॥११॥
उत । कण्वं । नृऽसदः । पुत्रं । आहुः । उत । श्यावः । धनं । आ । अदत्त । वाजी ।
प्र । कृष्णाय । रुशत् । अपिन्वत । ऊधः । ऋतं । अत्र । नकिः । अस्मै । अपीपेत् ॥११॥

उतापि च कण्वमृषिं नृषदः पुत्रमाहुः । वेदवादिनो वदंति । उतापि च वाजी हविर्लक्षणान्नवान्कण्वः श्यावः श्यामवर्णः सन्नस्मादग्नेः सकाशाद्धनमादत्त । अगृह्णात् । कृष्णाय श्यामवर्णाय नार्षदाय कण्वायाग्निरूधो रुशद्रोचमानरूपं प्रापिन्वत । प्रासिंचत् । अत्रेत्थमग्निव्यतिरिक्तः कश्चिदपि देवोऽस्मै कण्वायर्तं यज्ञं नकिरपीपेत् । नावर्धयत् । युवं श्यावाय रुशतीमदत्तं । ऋ° १. ११७. ८. । इत्युक्तं ॥ ॥२८॥

प्र सु ग्मंतेति नवर्चं तृतीयं सूक्तं । आदितः पंच जगत्यः । अथ चतस्रस्त्रिष्टुभः । पूर्ववदृषिदेवते । तथा चानुक्रांतं । प्र सु ग्मंता नव पंचाद्या जगत्य इति ॥ गतो विनियोगः ॥

प्र सु ग्मंता धियसानस्य सक्षणि वरेभिर्वराँ अभि षु प्रसीदतः ।
अस्माकमिंद्र उभयं जुजोषति यत्सोम्यस्यांधसो बुबोधति ॥१॥
प्र । सु । ग्मंता । धियसानस्य । सक्षणि । वरेभिः । वरान् । अभि । सु । प्रऽसीदतः ।
अस्माकं । इंद्रः । उभयं । जुजोषति । यत् । सोम्यस्य । अंधसः । बुबोधति ॥१॥

इंद्रः स्वभूतौ हरी धियसानस्येंद्रागमनं चिंतयतो यजमानस्य मम संबंधिनि सक्षणि सेवायां सद्गुणके सेव्ये यज्ञे निमित्ते ग्मंतागच्छंतौ सु सुष्ठु प्रेरयति । ततः स इंद्रो वरेभिर्वरणीयैर्मार्गैः प्रसीदतो हविरासादयतो यजमानस्य वरानुत्कृष्टान्हविर्विशेषान् स्तुतिविशेषांश्चाभि लक्षीकृत्य सु सुष्ठागच्छतु । इंद्र आगतः सन्नस्माकं स्वभूतमुभयं हविश्च स्तुतिश्चेत्येतद्द्वयं जुजोषति । सेवतां । भक्षयतु शृणोतु चेत्यर्थः । यद्यदा सोम्यस्य सोमसंपादिनो ममांधसोऽन्नरूपस्य सोमस्य । रसमिति शेषः । बुबोधति बुध्यते जिह्वया विजानाति । सोमं पिबतीत्यर्थः । तदा जुजोषतीति पूर्वेण संबंधः ॥

वींद्र यासि दिव्यानि रोचना वि पार्थिवानि रजसा पुरुष्टुत ।
ये त्वा वहंति मुहुरध्वराँ उप ते सु वन्वंतु वग्वनाँ अराधसः ॥२॥

वि। इंद्र। यासि। दिव्यानि। रोचना। वि। पार्थिवानि। रजसा। पुरुऽस्तुत।
ये। त्वा। वहंति। मुहुः। अध्वराम्। उप। ते। सु। वन्वंतु। वग्वनान्। अराधसः ॥२॥

हे इंद्र दिव्यानि दिवि भवानि रोचना रोचनानि दीप्तिस्वभावकानि ज्योतींषि यद्वा दिव्याँल्लोकान्वि यासि। व्याप्नोषि। हे पुरुष्टुत बहुभिः स्तुतेंद्र पार्थिवानि पृथिव्यां भवानि रजसात्मीयेन ज्योतिषा विद्युल्लक्षणेन। यद्वा ॥ रजःशब्दाच्छस आकारः ॥ पार्थिवाँल्लोकान्। व्याप्नोषि। ये त्वदीया अश्वा मुहुः पुनःपुनरध्वरानस्मदीयान्यज्ञान्प्रति त्वा त्वामुप वहंति समीपे प्रापयंति तेऽश्वा वग्वनान्वचनेन स्तुत्या संभक्तॄनराधसो धनरहितानस्मान् सु सुष्ठु वन्वंतु। धनप्रदानार्थं संभजंतां ॥

तदिन्मे छंत्सद्वपुषो वपुष्टरं पुत्रो यज्जानं पित्रोरधीयति।
जाया पतिं वहति वग्नुना सुमत्पुंस इद्भद्रो वहतुः परिष्कृतः ॥३॥
तत्। इत्। मे। छंत्सत्। वपुषः। वपुःऽतरं। पुत्रः। यत्। जानं। पित्रोः। अधिऽइयति।
जाया। पतिं। वहति। वग्नुना। सुऽमत्। पुंसः। इत्। भद्रः। वहतुः। परिऽकृतः ॥३॥

वपुषः। वपु रूपं। तद्वाँल्लक्ष्यते। वपुष्मतोऽपि वपुष्टरं रूपवत्तरमत्यंतं सुरूपं तद्यज्ञकर्म मे मह्यं छंत्सत्। इंद्रः कामयतां। यद्यदा पुत्रो जानं जन्मात्मन उत्पत्तिं पित्रोर्मातापित्रोः सकाशादधीयति संकीर्तनद्वारेणाधिगच्छति। सुब्रह्मण्याह्वानकालेऽमुकशर्मणः पुत्रो यजत इत्यात्मनो जन्म संकीर्तयति। यद्वा। यज्जननादागतं धनं पित्रोः सकाशात्पुत्रोऽधिगच्छति तदेव मह्यमिच्छतु। जाया पत्नी पतिं यजमानं सुमत्कल्याणेन वग्नुना वाग्रूपेण शब्देन वहति। आत्मसमीपं प्रापयति। भद्रो भजनीयः परिष्कृतः सुसंस्कृतः पुंस इत्। पत्युरेवेत्यर्थः। वहतुर्जायायै प्रदातव्यः। तदुक्तं। सुभद्रमर्य भोजनं बिभर्षि। ऋ० ८. १. ३४.। इति। यद्वा। पुंसोऽतिशूरस्येंद्रस्यार्थाय भद्रो भजनीयो वहतुर्वहनशीलो देवान्प्रति स सोमः परिष्कृतः संस्कृतो भवति। तदिंद्रः कामयतामित्यर्थः ॥

तदित्सधस्थमभि चारु दीधय गावो यच्छासन्वहतुं न धेनवः।
माता यन्मंतुर्यूथस्य पूर्व्याभि वाणस्य सप्तधातुरिज्जनः ॥४॥
तत्। इत्। सधऽस्थं। अभि। चारु। दीधय। गावः। यत्। शासन्। वहतुं। न। धेनवः।
माता। यत्। मंतुः। यूथस्य। पूर्व्या। अभि। वाणस्य। सप्तऽधातुः। इत्। जनः ॥४॥

तदित्तदेव सधस्थं। सह तिष्ठंत्यत्रेति सधस्थं स्थानं यज्ञाख्यं। चारु शोभनमभि दीधय। हे इंद्र अभितो दीप्यस्व। यद्यदा गावः स्तुतिलक्षणा वाच इंद्र आगच्छ हरिव आगच्छेत्येवमाद्याः शासन् अस्मद्यज्ञं प्रति त्वदागमनमाशासते। तत्र दृष्टांतः। वहतुं न धेनवः यथा धेनवो नवप्रसूता गावः प्रापणसाधनं गृहमाशासते तद्वत्। यत आगत्यप्रकाशस्ततोऽत्र कारणमाह। यद्यस्मान्मंतुः। मन्यतिरर्चतिकर्मा। अर्चकस्य मम स्वभूता माता देवतागुणानां निष्पादयित्री स्तुतिर्यूथस्य यष्टृस्तोतृगणस्य पूर्व्या प्रथमभाविनी खलु। यस्माच्च सप्तधातुः। धार्यंते क्रियंते कर्माण्येष्विति धातवश्छंदांसि स्तुतयो वा। सप्तच्छंदस्कः सप्तर्तुकः सप्तहोत्रात्मको वायं जनो वाणस्य स्तुतिशब्दस्याभि कर्ता खलु। तस्माच्छीघ्रमागच्छेति भावः। यद्वा। यत्कल्याणं तदेव स्थानमस्माकमभिधारय। प्रयच्छ। यस्मिन्स्थाने धेनवः पयःप्रदानेन प्रीणयित्र्यो गावो वहतुं। उह्यते पुरुषोऽनेनेति वहतुरन्नं। पयोघृताद्यनुशासति। न संप्रत्यर्थे। इदानीं प्रयच्छंति। तथा यस्मिन्मंतुर्मंतव्या पूजनीया पुत्रसमूहस्य माताभिगच्छति वाणस्य वाद्यस्य सप्तधातुर्निषादादिसप्तस्वरोपेतो जनोऽभिगच्छति तद्वत्तद्गुणोपेतं प्रयच्छेति भावः ॥

प्र वोऽच्छा रिरिचे देवयुष्पदमेको रुद्रेभिर्याति तुर्वणिः ।
जरा वा येष्वमृतेषु दावने परि व ऊमेभ्यः सिंचता मधु ॥५॥
प्र । वः । अच्छ । रिरिचे । देवऽयुः । पदं । एकः । रुद्रेभिः । याति । तुर्वणिः ।
जरा । वा । येषु । अमृतेषु । दावने । परि । वः । ऊमेभ्यः । सिंचत । मधु ॥५॥

हे यजमानाः देवयुर्देवान्कामयमानो होता वो युष्माकं पदमच्छ स्थानं प्रति प्र रिरिचे । प्ररिक्तोऽभूत् । अथ होतृभ्यः सकाशादेको मुख्य इंद्रो रुद्रेभी रुद्रपुत्रैर्मरुद्भिः सह तुर्वणिः क्षिप्रगामी सन्याति । गच्छति युष्मदीयं यज्ञं । जरा वा । वाशब्दोऽप्यर्थे । स्तुतिरपि येष्वमृतेषु मरणधर्मरहितेषु देवेषु दावने धनप्रदानाय समर्था भवति । तस्माद्वो यूयं ॥ छांदसो वसादेशः ॥ ऊमेभ्यो रक्षितृभ्यो देवेभ्यो मधु मदकरं सोममद्भिः परि षिंचत ॥ ॥२९॥

निधीयमानमपगूळ्हमप्सु प्र मे देवानां व्रतपा उवाच ।
इंद्रो विद्वाँ अनु हि त्वा चचक्ष तेनाहमग्ने अनुशिष्ट आगां ॥६॥
निऽधीयमानं । अपऽगूळ्हं । अप्ऽसु । प्र । मे । देवानां । व्रतऽपाः । उवाच ।
इंद्रः । विद्वान् । अनु । हि । त्वा । चचक्ष । तेन । अहं । अग्ने । अनुऽशिष्टः । आ । अगां ॥६॥

कुरुश्रवणस्य यज्ञे निधीयमानोऽग्निरभिधीयते । निधीयमानमध्वर्युणाहवनीयेऽग्नावप्सु मातृभूतास्वपगूळ्हमंतर्हितं देवानां व्रतपाः कर्मणो रक्षक इंद्रो मे मह्यं प्रोवाच । प्रावादीत् । हे अग्ने विद्वाञ्जानान इंद्रः स्वाधिकारमस्मद्भक्ततां वा त्वा त्वामनु हि चचक्ष । अनुगतः पश्चाद्दर्श । तेनेंद्रेणानुशिष्टोऽहमनेन पथा त्वया स्वर्गो गंतव्य इत्येवमुपदिष्टः सन्नागां । आभिमुख्येन स्वर्गं गच्छेयं ॥

अक्षेत्रवित्क्षेत्रविदं ह्यप्राट् स प्रैति क्षेत्रविदानुशिष्टः ।
एतद्वै भद्रमनुशासनस्योत स्रुतिं विंदत्यंजसीनां ॥७॥
अक्षेत्रऽवित् । क्षेत्रऽविदं । हि । अप्राट् । सः । प्र । एति । क्षेत्रऽविदा । अनुऽशिष्टः ।
एतत् । वै । भद्रं । अनुऽशासनस्य । उत । स्रुतिं । विंदति । अंजसीनां ॥७॥

सेयमनुशासनस्तुतिः प्रासंगिकी । अक्षेत्रवित् ॥ क्षि निवासगत्योः ॥ क्षीयते गम्यतेऽनेनेति क्षेत्रं पंथाः । पंथानमजानन् पुरुषः क्षेत्रविदं क्षेत्रज्ञं पुरुषमप्राट् । पृष्टवान् । स क्षेत्रविदा पथिज्ञेन तेनानुशिष्टः प्रदर्शितमार्गः सन् प्रैति । स्वाभिलषितं देशं गच्छति । अनुशासनस्य मार्गोपदेशरूपस्यैतद्वा एतत्खलु भद्रं भजनीयं कल्याणकरं । किं तत् । उतापि चांजसीनामृजुना मार्गेण गंतव्यानामपां स्रुतिं मार्गं पिपासितः सन् विंदति । लभते । यद्वा । अंजसीनामिति स्रुतेर्विशेषणं । ऋजुमकुटिलमप्रयासेन गंतव्यं मार्गं लभते खलु ॥

अद्येदु प्राणीदममन्निमाहापीवृतो अधयन्मातुरूधः ।
एमेनमाप जरिमा युवानमहेळन्वसुः सुमना बभूव ॥८॥
अद्य । इत् । ऊं इति । प्र । आनीत् । अममन् । इमा । अहा । अपिऽवृतः । अधयत् । मातुः । ऊधः ।
आ । ईं । एनं । आप । जरिमा । युवानं । अहेळन् । वसुः । सुऽमनाः । बभूव ॥८॥

अयमग्निरवेदद्वीवाग्निन्धिने प्राणीत् । मथनेन चेष्टितोऽभवत् ॥ श्वस प्राणने अन चेति धातुः ॥ तदानीमेवेमेमान्यह्नाहानि सौमिकान्यममन् । नेतुममन्यत ॥ मन ज्ञाने । व्यत्ययेन शः । तिङ उत्तरत्वादनिघातः ॥ अपि चापीवृतस्तेजोभिः परिवृतः सन् मातुः पृथिव्या अधः सारभूतं सोमादिकं हविरधयत् । पिबति । तथा युवानं नित्यतरुणं देवानां हविषा मिश्रयंतं वैनमग्निं जरिमा ॥ जरतिः स्तुतिकर्मा । तस्मादौणादिक इमनिच् ॥ स्तोतृभिः क्रियमाणा स्तुतिराप । आभिमुख्येन व्याप्नोति । ईमिति पूरणः । ततोऽहेळन्नक्रुध्यन् स्तोतॄन्प्रति वसुर्वासयिता सर्वेषां धनदानेनाच्छादयिता तेजोभिः शत्रूणां वा वसुमान्वाग्निः सुमनाः शोभनमनस्को बभूव ॥

एतानि भद्रा कलश क्रियाम कुरुश्रवण ददतो मघानि ।
दान इद्वो मघवानः सो अस्त्वयं च सोमो हृदि यं बिभर्मि ॥९॥
एतानि । भद्रा । कलश । क्रियाम । कुरुऽश्रवण । ददतः । मघानि ।
दानः । इत् । वः । मघऽवानः । सः । अस्तु । अयं । च । सोमः । हृदि । यं । बिभर्मि ॥९॥

हे कलश सर्वकलापरिपूर्ण । यद्वा । लुप्तमत्वर्थीयः । द्रोणकलशवन् । हे कुरुश्रवण । कुरव ऋत्विजः । तेषां स्वभूतानां स्तुतीनां श्रोतर्हे इंद्र मघानि धनानि स्तोतृभ्यो यष्टृभ्यश्च ददतः प्रयच्छतस्तवेंद्रस्यार्थमेतानि भद्रा भजनीयानि हवींषि स्तोत्राणि च क्रियाम । विधेयास्म ॥ करोतेराशीर्लिङि रिङ् शयग्लिङ्क्षु । पा॰ ७.४.२८. । इति रिङादेशः ॥ अथ स्तोतॄन्प्रत्याह । हे मघवानो महनीयस्तोत्ररूपधनवंतः वो युष्माकं स इंद्रो दान इत्प्रमादेर्दातैवास्तु । भवतु । अयं च यत्र स्थितः सोमो दातास्तु हृदय आत्मीये यं पीतं सोमं बिभर्मि धारयामि ॥ डुभृञ् धारणपोषणयोः । जौहोत्यादिकः । भृञामिदित्यभ्यासस्येत्वं । यद्योगादनिघातः ॥ यद्वा । हे कलशकुलजात हे कुरुश्रवणेतन्नामक त्रसदस्योः पुत्र राजन् ऋत्विग्भ्यो धनानि प्रयच्छतस्तवार्थं वयं कर्माणि क्रियाम । मघवानः कुरुश्रवणाः । पूजायां बहुवचनपदं । यागकर्म कुर्वाणस्य तवेंद्रो दाता भवतु । अयं सोमश्च धनानि प्रयच्छतु ॥ ॥३०॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाश ऋक्संहिताभाष्ये सप्तमाष्टके सप्तमोऽध्यायः ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

अथाष्टमोऽध्याय आरभ्यते । तत्र प्र मेति नवर्चं चतुर्थं सूक्तं । ऐलूषस्य कवषस्यार्षं । आद्या त्रिष्टुप् सा च वैश्वदेवी । द्वितीयातृतीये बृहतीसतोबृहत्यावैंद्र्यौ । पराः षड्गायत्र्यः । कुरुश्रवणमावृणीति द्वाभ्यां त्रसदस्युपुत्रस्य कुरुश्रवणनाम्नो राज्ञो दानं तुष्टाव । अतस्तद्देवताके । अथ यस्य प्रस्वादस इत्यादिभिस्तस्याभिर्मित्रातिथिनाम्नि राज्ञि परलोकं गते शोकाभिभूतं तस्य पुत्रमुपमश्रवोनामानं कवष ऋषिः स्नेहवशादभिगत्य विगतशोकमकरोत् । अतस्तासां तद्देवतात्वं । तथा चानुक्रांतं । प्र माद्या वैश्वदेव्यैंद्रः प्रगाथः परा गायत्र्यो द्वे कुरुश्रवणस्य त्रासदस्यवस्य दानस्तुतिः पराभिर्मृते मित्रातिथौ राज्ञि तत्स्नेहादृषिरुपमश्रवसं पुत्रमस्य व्यशोकयदिति ॥ गतो विनियोगः ॥

प्र मा युयुज्रे प्रयुजो जनानां वहामि स्म पूषणमंतरेण ।
विश्वे देवासो अध मामरक्षन्दुःशासुरागादिति घोष आसीत् ॥१॥

प्र । मा । युयुजे । प्रऽयुजः । जनानां । वहामि । स्म । पूषणं । अंतरेण ।
विश्वे । देवासः । अध । मां । अरक्षन् । दुःऽशासुः । आ । अगात् । इति । घोषः । आसीत् ॥१॥

जनानां यजमानानां प्रयुजः प्रयोक्तारो देवा मा मां कवषमृषिं प्र युयुजे । कुरुश्रवणं प्रति युक्तवंतः । अंतरेण मार्गे पूषणं देवमध्वनां पतिं सखायमहं वहामि स्म । आढवानस्मि । तथा श्रूयते । ऐंद्राग्नमेकादशकपालं निर्वपेज्जनतामेष्यन्नित्युपक्रम्य पौष्णं चरुमनु निर्वपेत् । तै० सं० २.२.१.४. । इति । अधाथ मार्गे विश्वे देवा मां कवषमरक्षन् । रक्षितवंतः । दुःशासुः केनापि दुःशासनोऽयमृषिरागात् आगच्छतीति घोषः शब्दश्च मार्गे आसीत् । अभूत् ॥

सं मा तपंत्यभितः सपत्नीरिव पर्शवः ।
नि बाधते अमतिर्नग्नता जसुर्वेर्न वेवीयते मतिः ॥२॥
सं । मा । तपंति । अभितः । सपत्नीःऽइव । पर्शवः ।
नि । बाधते । अमतिः । नग्नता । जसुः । वेः । न । वेवीयते । मतिः ॥२॥

मा मां देवताप्रसादरहितं कवषं पर्शवः पार्श्वास्थीन्यन्नाभावाद्दौर्बल्यात्कुशयनाच्च सपत्नीरिव यथा सपत्न्यस्तद्वदभित उभयतः सं तपंति । दुःखयंतीत्यर्थः । किंचामतिर्दारिद्र्यादागता दुर्मतिः सर्वार्थविषया सा मां नि बाधते । मां पीडयति । वस्त्राभावादागता नग्नता च मां नि बाधते । जसुरन्नाभावादागत उपक्षयोऽपि मां नि बाधते । किंच वेर्न यथा पक्षिणो मतिः शाकुनिकव्याधभयात्कंपयते तथा मे मतिः शत्रोर्वेवीयते । भृशं कंपयते ॥

मूषो न शिश्ना व्यदंति माध्यः स्तोतारं ते शतक्रतो ।
सकृत्सु नो मघवन्निंद्र मृळयाधा पितेव नो भव ॥३॥
मूषः । न । शिश्ना । वि । अदंति । मा । आऽध्यः । स्तोतारं । ते । शतक्रतो इति शतऽक्रतो ।
सकृत् । सु । नः । मघऽवन् । इंद्र । मृळय । अध । पिताऽइव । नः । भव ॥३॥

हे शतक्रतो बहुकर्मन् मघवन् धनवन्निंद्र ते तव स्तोतारं मा मां कवषमाध्य आधयो मूषो न यथा मूषिकाः शिश्नास्नातानि सूत्राण्यश्नंति तथा व्यदंति । विविधमदंति । तथा च यास्कः । संतपंति मामभितः सपत्न्य इवेमाः पर्शवः कूपपर्शवो मूषिका इवास्नातानि सूत्राणि व्यदंति स्वांगाभिधानं वा स्याच्छिश्नानि व्यदंतीति संतपंति माध्यः कामाः । नि० ४.६. । इति । तथा च सति नोऽस्मान्सकृत्सु मृळय । अभीष्टप्रदानेन सम्यक् सुखय । अधाथ नोऽस्माकं पितेव यथा पिता तद्वद्रक्षिता भव ॥

कुरुश्रवणमावृणि राजानं त्रासदस्यवं । मंहिष्ठं वाघतामृषिः ॥४॥
कुरुऽश्रवणं । आऽवृणि । राजानं । त्रासदस्यवं । मंहिष्ठं । वाघतां । ऋषिः ॥४॥

ऋषिरतींद्रियपदार्थद्रष्टा कवषोऽहं त्रासदस्यवं त्रसदस्योः पुत्रं मंहिष्ठं धनानामतिशयेन दातारं कुरुश्रवणं । कुरव ऋत्विजः । तदीयानां स्तुतीनां श्रोतारं कुरुश्रवणं तन्नामकं राजानं वाघतामृत्विजामर्थायावृणि । धनानि प्रार्थये ॥

यस्य मा हरितो रथे तिस्रो वहंति साधुया । स्तवै सहस्रदक्षिणे ॥५॥
यस्य । मा । हरितः । रथे । तिस्रः । वहंति । साधुऽया । स्तवै । सहस्रऽदक्षिणे ॥५॥

यस्य कुरुश्रवणाख्यस्य राज्ञः स्वभूतास्तिस्रो हरितस्त्रयोऽश्वा रथे प्रष्टितं मा मां कवषं साधुया साधु वहंति कुरुश्रवणं राजानमहं सहस्रदक्षिणेऽस्मिन्यागे स्तवे । स्तौमि । प्रष्टिवाहिनं रथं परिगृह्यर्षिराशास्ते ॥ ॥१॥

अतः परं यस्येत्यादिकेन सूक्तशेषेण मित्रातिथौ राज्ञि मृते तत्पुत्रस्योपमश्रवसः समीपमागत्य कवषः स्नेहाच्छोकं निवारयति ॥

यस्य प्रस्वादसो गिर उपमश्रवसः पितुः । क्षेत्रं न रण्वमूचुषे ॥६॥

यस्य । प्रऽस्वादसः । गिरः । उपमऽश्रवसः । पितुः । क्षेत्रं । न । रण्वं । ऊचुषे ॥६॥

हे राजन् उपमश्रवसस्तव पितुर्यस्य मित्रातिथेर्गिरो वाचः प्रस्वादसः प्रकर्षेण स्वादयित्र्यः । तत्र दृष्टांतः । ऊचुषे सेवमानाय दरिद्राय दानार्थं प्रकल्पितं रण्वं रमणीयं क्षेत्रं न यथा क्षेत्रं स्वादयितृ तद्वदित्यर्थः । उत्तरत्र संबंधः ॥

अधि पुत्रोपमश्रवो नपान्मित्रातिथेरिहि । पितुष्टे अस्मि वंदिता ॥७॥

अधि । पुत्र । उपमऽश्रवः । नपात् । मित्रऽअतिथेः । इहि । पितुः । ते । अस्मि । वंदिता ॥७॥

हे पुत्रोपमश्रवो मित्रातिथेर्नपात्पुत्र त्वमधीहि । मत्समीपमागच्छ । ते तव पितुस्तस्य मित्रातिथेरहं वंदिता स्तोतास्मि । एतज्ज्ञात्वा शोकं मा कुरु । यद्द्वेयं द्रव्यमस्ति तत्सर्वं मह्यं देहि ॥

यदीशीयामृतानामुत वा मर्त्यानां । जीवेदिन्मघवा मम ॥८॥

यत् । ईशीय । अमृतानां । उत । वा । मर्त्यानां । जीवेत् । इत् । मघऽवा । मम ॥८॥

उतापि च यद्यद्यमृतानां देवानां मर्त्यानां मनुष्याणां वा मरणहेतूनामीशीय अहमीश्वरः स्यां तर्हि मम कवषस्य याज्यो मघवा धनवान्मित्रातिथी राजा जीवेत् । प्राणान्धारयेत् । तथा च नाहं मरणहेतोरीश्वरः तस्मादयं राजा मृत इत्यर्थः ॥

न देवानामति व्रतं शतात्मा चन जीवति । तथा युजा वि वावृते ॥९॥

न । देवानां । अति । व्रतं । शतऽआत्मा । चन । जीवति । तथा । युजा । वि । ववृते ॥९॥

देवानां ब्रह्मादीनां व्रतं मर्यादालक्षणं कर्मात्यतिक्रम्य शतात्मा चन शतसंवत्सरः कश्चन जीवति । तथा युजा सहायादिना वि ववृते । विवर्तते । वियुक्तो भवतीति ज्ञात्वा शोकं मा कुर्वित्यर्थः ॥ ॥२॥

प्रावेपा इति चतुर्दशर्चं पंचमं सूक्तमैलूषस्य कवषस्यार्षं मुजवतः पुत्रस्याक्षाख्यस्य वा । सप्तमी जगती शिष्टास्त्रयोदश त्रिष्टुभः । अत्र द्वादशाक्षान्स्तौति नवम्याद्या च सप्तमी । अतस्तास्तद्देवत्याः । त्रयोदशी कृषिं स्तौति । अतस्तस्याः सा देवता । एवं पंच गताः । शिष्टाभिर्नवभिः कितवोऽक्षास्च निंद्यंते । अतस्ता अपि तद्देवत्याः । तथा चानुक्रांतं । प्रावेपाः षळूना मौजवान्वाक्षोऽक्षकृषिप्रशंसा चाक्षकितवनिंदा च सप्तमी जगतीति ॥ गतो विनियोगः ॥

प्रावेपा मा बृहतो मादयंति प्रवातेजा इरिणे वर्वृतानाः ।
सोमस्येव मौजवतस्य भक्षो विभीदको जागृविर्मह्यमच्छान् ॥१॥

प्रावेपाः । मा । बृहतः । मादयंति । प्रवातेऽजाः । इरिणे । वर्वृतानाः ।
सोमस्यऽइव । मौजऽवतस्य । भक्षः । विऽभीदकः । जागृविः । मह्यं । अच्छान् ॥१॥

बृहतो महतो विभीतकस्य फलत्वेन संबंधिनः प्रवातेजाः प्रवणे देशे जाता इरिणे आस्फारे वर्वृतानाः प्रवर्तमानाः प्रावेपाः प्रवेपिणः कंपनशीला अक्षा मा मां मादयंति। हर्षयंति। किंच जागृविर्जयपराजययोर्हर्षशोकाभ्यां कितवानां जागरणस्य कर्ता विभीदको विभीतकविकारोऽक्षो मह्यं मामच्छान्। अचच्छदत्। अत्यर्थं मादयति। तत्र दृष्टांतः। सोमस्येव यथा सोमस्य मौजवतस्य। मुजवति पर्वते जातो मौजवतः। तस्य। तत्र ह्युत्तमः सोमो जायते। भक्षः पानं यजमानान्देवांश्च मादयति तद्वदित्यर्थः। तथा च यास्कः। प्रवेपिणो मा महतो विभीतकस्य फलानि मादयंति। प्रवातेजाः प्रवणेजा इरिणे वर्तमाना इरिणं निर्ऋणमृणातेरपार्णं भवत्यपरता अस्मादोषधय इति वा सोमस्येव मौजवतस्य भक्षो मौजवतो मुजवति जातो मुजवान्पर्वतो मुंजवान्मुंजो विमुच्यत इषीकयेषीकेषतेर्गतिकर्मण इयमपीतरेषीकैतस्मादेव विभीतको विभेदनाज्जागृविर्जागरणान्मह्यमचच्छदत्। नि० ९. ८.। इति॥

न मा मिमेथ न जिहीळ एषा शिवा सखिभ्य उत मह्यमासीत्।
अक्षस्याहमेकपरस्य हेतोरनुव्रतामप जायामरोधं ॥२॥

न। मा। मिमेथ। न। जिहीळे। एषा। शिवा। सखिऽभ्यः। उत। मह्यं। आसीत्।
अक्षस्य। अहं। एकऽपरस्य। हेतोः। अनुऽव्रतां। अप। जायां। अरोधं ॥२॥

एषास्मदीया जाया मा मां कितवं न मिमेथ न च चुक्रोध न जिहीळे न च लज्जितवती। सखिभ्योऽस्मदीयेभ्यः कितवेभ्यः शिवा सुखकर्यासीत्। अभूत्। उतापि च मह्यं शिवासीत्। इत्यमनुव्रतामनुकूलां जायामेकपरस्यैकः परः प्रधानं यस्य तस्यास्य हेतोः कारणादहमपारोधं। परित्यक्तवानस्मीत्यर्थः॥

द्वेष्टि श्वश्रूरप जाया रुणद्धि न नाथितो विंदते मर्डितारं।
अश्वस्येव जरतो वस्न्यस्य नाहं विंदामि कितवस्य भोगं ॥३॥

द्वेष्टि। श्वश्रूः। अप। जाया। रुणद्धि। न। नाथितः। विंदते। मर्डितारं।
अश्वस्यऽइव। जरतः। वस्न्यस्य। न। अहं। विंदामि। कितवस्य। भोगं ॥३॥

श्वश्रूर्जायाया माता गृहगतं कितवं द्वेष्टि। निंदतीत्यर्थः। किंच जाया भार्याप रुणद्धि। निरुणद्धि। अपि च नाथितो याचमानः कितवो धनं मर्डितारं धनदानेन सुखयितारं न विंदते। न लभते। इत्थं बुद्ध्या विमृशन्नहं जरतो वृद्धस्य वस्न्यस्य। वस्नं मूल्यं। तदर्हस्याश्वस्येव कितवस्य भोगं न विंदामि। न लभे॥

अन्ये जायां परि मृशंत्यस्य यस्यागृधद्वेदने वाज्य१क्षः।
पिता माता भ्रातर एनमाहुर्न जानीमो नयता बद्धमेतं ॥४॥

अन्ये। जायां। परि। मृशंति। अस्य। यस्य। अगृधत्। वेदने। वाजी। अक्षः।
पिता। माता। भ्रातरः। एनं। आहुः। न। जानीमः। नयत। बद्धं। एतं ॥४॥

यस्य कितवस्य वेदने धने वाजी बलवानक्षो देवोऽगृधत् अभिकांक्षां करोति तस्यास्य कितवस्य जायां भार्यामन्ये प्रतिकितवाः परि मृशंति। वस्त्रकेशाद्याकर्षणेन संस्पृशंति। किंच पिता जननी च भ्रातरः सहोदराश्चैनं कितवमाहुः। वदंति। न वयमस्मदीयमेनं जानीमः। रज्ज्वा बद्धमेतं कितवं हे कितवाः यूयं नयत। यथेष्टदेशं प्रापयतेति॥

यदादीध्ये न दविषाण्येभिः परायद्भ्योऽव हीये सखिभ्यः।
न्युप्ताश्च बभ्रवो वाचमक्रतँ एमीदेषां निष्कृतं जारिणीव ॥५॥

यत्। आऽदीध्ये। न। दविषाणि। एभिः। परायत्ऽभ्यः। अव। हीये। सखिऽभ्यः।
निऽउप्ताः। च। बभ्रवः। वाचं। अक्रत। एमि। इत्। एषां। निःऽकृतं। जारिणीऽइव ॥५॥

यद्यदाहमादीध्ये ध्यायामि तदानीमेभिरक्षैर्न दविषाणि। न दूषये। न परितपामि। यद्वा। न दविषाणि। न देविष्यामीत्यर्थः। परायद्भ्यः स्वयमेव परागच्छद्भ्यः सखिभ्यः सखिभूतेभ्यः कितवेभ्योऽव हीये। अवहितो भवामि। नाहं प्रथममक्षान्विसृजामीति। किंच बभ्रवो बभ्रुवर्णा अक्षा न्युप्ताः कितवैरवक्षिप्ताः संतो वाचमक्रत। शब्दं कुर्वंति। तदा संकल्पं परित्यज्याक्षव्यसनेनाभिभूयमानोऽहमेषामक्षाणां निष्कृतं स्थानं जारिणीव यथा कामव्यसनेनाभिभूयमाना स्वैरिणी संकेतस्थानं याति तद्वदेमीत्। गच्छाम्येव ॥ ॥३॥

सभामेति कितवः पृच्छमानो जेष्यामीति तन्वा३ शूशुजानः।
अक्षासो अस्य वि तिरंति कामं प्रतिदीव्ने दधत आ कृतानि ॥६॥
सभां। एति। कितवः। पृच्छमानः। जेष्यामि। इति। तन्वा। शूशुजानः।
अक्षासः। अस्य। वि। तिरंति। कामं। प्रतिऽदीव्ने। दधतः। आ। कृतानि ॥६॥

तन्वा शरीरेण शूशुजानः शोशुचानो दीप्यमानः कितवः कोऽत्रास्ति धनिकस्तं जेष्यामीति पृच्छमानः पृच्छन् सभां कितवसंबंधिनीमेति। गच्छति। तत्र प्रतिदीव्ने प्रतिदेविने कितवाय कृतानि देवनोपयुक्तानि कर्माण्या दधतो जयार्थमाभिमुख्येन मर्यादया वा दधतोऽस्य कितवस्य काममिच्छामक्षासोऽक्षा वि तिरंति। वर्धयंति ॥

अक्षास इदंकुशिनो नितोदिनो निकृत्वानस्तपनास्तापयिष्णवः।
कुमारदेष्णा जयतः पुनर्हणो मध्वा संपृक्ताः कितवस्य बर्हणा ॥७॥
अक्षासः। इत्। अंकुशिनः। निऽतोदिनः। निऽकृत्वानः। तपनाः। तापयिष्णवः।
कुमारऽदेष्णाः। जयतः। पुनःऽहनः। मध्वा। संऽपृक्ताः। कितवस्य। बर्हणा ॥७॥

अक्षास इदक्षा एवांकुशिनोऽंकुशवंतो नितोदिनो नितोदितवंतश्च निकृत्वानः पराजये निकर्तनशीलाश्छेत्तारो वा तपनाः पराजये कितवस्य संतापकास्तापयिष्णवः सर्वस्वहारकत्वेन कुटुंबस्य संतापनशीलाश्च भवंति। किंच जयतः कितवस्य कुमारदेष्णा धनदानेन धान्यतां लंभयंतः कुमाराणां दातारो भवंति। अपि च मध्वा मधुना संपृक्ताः प्रतिकितवेन बर्हणा परिवृढेन सर्वस्वहरणेन कितवस्य पुनर्हणः पुनर्हंतारो भवंति ॥

त्रिपंचाशः क्रीळति व्रात एषां देव इव सविता सत्यधर्मा।
उग्रस्य चिन्मन्यवे ना नमंते राजा चिदेभ्यो नम इत्कृणोति ॥८॥
त्रिऽपंचाशः। क्रीळति। व्रातः। एषां। देवःऽइव। सविता। सत्यऽधर्मा।
उग्रस्य। चित्। मन्यवे। न। नमंते। राजा। चित्। एभ्यः। नमः। इत्। कृणोति ॥८॥

एषामक्षाणां त्रिपंचाशस्त्र्यधिकपंचाशत्संख्याको व्रातः संघः क्रीळति। आस्फारे विहरति। अधिकाः प्रायेण तावद्भिरक्षैर्दीव्यंति हि। तत्र दृष्टांतः। सत्यधर्मा सविता सर्वस्य जगतः प्रेरकः सूर्यो देव इव। यथा सविता देवो जगति विहरति तद्वदक्षाणां संघ आस्फारे विहरतीत्यर्थः। किंचोग्रस्य चित् क्रूरस्यापि मन्यवे क्रोधायैतेऽक्षा न नमंते। न प्रह्वीभवंति। न वशे वर्तंते। तं नमयंतीत्यर्थः। राजा चिज्जगत ईश्वरोऽप्येभ्यो नम इन्नमस्कारमेव देवनवेलायां कृणोति। नावज्ञां करोतीत्यर्थः ॥

नीचा वर्तंत उपरि स्फुरंत्यहस्तासो हस्तवंतं सहंते ।
दिव्या अंगारा इरिणे न्युप्ताः शीताः संतो हृदयं निर्दहंति ॥९॥
नीचा । वर्तंते । उपरि । स्फुरंति । अहस्तासः । हस्तऽवंतं । सहंते ।
दिव्याः । अंगाराः । इरिणे । निऽउप्ताः । शीताः । संतः । हृदयं । निः । दहंति ॥९॥

अपि चैतेऽक्षा नीचा नीचीनस्थले वर्तंते । तथाप्युपरि पराजयाद्भीतानां द्यूतकराणां कितवानां हृदयस्योपरि स्फुरंति । अहस्तासो हस्तरहिता अप्यक्षा हस्तवंतं द्यूतकरं कितवं सहंते । पराजयकरणेनाभिभवंति । दिव्या दिवि भवा अपक्षता अंगारा अंगारसदृशा अक्षा इरिण इंधनरहित आस्फारे न्युप्ताः शीताः शीतस्पर्शाः संतोऽपि हृदयं कितवानामंतःकरणं निर्दहंति । पराजयजनितसंतापेन भस्मीकुर्वंति ॥

जाया तप्यते कितवस्य हीना माता पुत्रस्य चरतः क्व स्वित् ।
ऋणावा बिभ्यद्धनमिच्छमानोऽन्येषामस्तमुप नक्तमेति ॥१०॥
जाया । तप्यते । कितवस्य । हीना । माता । पुत्रस्य । चरतः । क्व । स्वित् ।
ऋणऽवा । बिभ्यत् । धनं । इच्छमानः । अन्येषां । अस्तं । उप । नक्तं । एति ॥१०॥

क्व स्वित् क्वापि चरतो निर्वेदाद्गच्छतः कितवस्य जाया भार्या हीना परित्यक्ता सती तप्यते । वियोगजसंतापेन संतप्ता भवति । माता जनन्यपि पुत्रस्य क्वापि चरतः कितवस्य संबंधाद्धीना तप्यते । पुत्रशोकेन संतप्ता भवति । ऋणावाक्षपराजयादृणवान् कितवः सर्वतो बिभ्यद्धनं स्तेयजनितमिच्छमानः कामयमानोऽन्येषां ब्राह्मणादीनामस्तं गृहं । अस्तं पस्त्यमिति गृहनामसु पाठात् । नक्तं रात्रावुपैति । चौर्यार्थमुपगच्छति ॥ ॥४॥

स्त्रियं दृष्ट्वाय कितवं तताप्यान्येषां जायां सुकृतं च योनिं ।
पूर्वाह्णे अश्वान्युयुजे हि बभ्रून्त्सो अग्नेरंते वृषलः पपाद ॥११॥
स्त्रियं । दृष्ट्वाय । कितवं । तताप । अन्येषां । जायां । सुऽकृतं । च । योनिं ।
पूर्वाह्णे । अश्वान् । युयुजे । हि । बभ्रून् । सः । अग्नेः । अंते । वृषलः । पपाद ॥११॥

कितवं कितवः ॥ विभक्तिव्यत्ययः ॥ अन्येषां स्वव्यतिरिक्तानां पुरुषाणां जायां जायाभूतां स्त्रियं नारीं सुखेन वर्तमानां सुकृतं सुष्ठु कृतं योनिं गृहं च दृष्ट्वाय मज्जाया दुःखिता गृहं चासंस्कृतमिति ज्ञात्वा तताप । तप्यते । पुनः पूर्वाह्णे प्रातःकाले बभ्रून्बभ्रुवर्णानश्वान्व्यापकानक्षान्युयुजे । युनक्ति । पुनश्च वृषलो वृषलकर्मा स कितवो रात्रावग्नेरंते समीपे पपाद । शीतार्तः सञ्छेते ॥

यो वः सेनानीर्महतो गणस्य राजा व्रातस्य प्रथमो बभूव ।
तस्मै कृणोमि न धना रुणध्मि दशाहं प्राचीस्तदृतं वदामि ॥१२॥
यः । वः । सेनाऽनीः । महतः । गणस्य । राजा । व्रातस्य । प्रथमः । बभूव ।
तस्मै । कृणोमि । न । धना । रुणध्मि । दश । अहं । प्राचीः । तत् । ऋतं । वदामि ॥१२॥

हे अक्षाः वो युष्माकं महतो गणस्य संघस्य योऽक्षः सेनानीर्नेता बभूव भवति व्रातस्य च । गणव्रातयोरल्पो भेदः । राजेश्वरः प्रथमो मुख्यो बभूव तस्मा अक्षाय कृणोम्यहं । अंजलिं करोमि । अतः परं धना

धनान्यर्थमहं न वृणध्मि । न संपादयामीत्यर्थः । एतदेव दर्शयति । अहं दश दशसंख्याका अंगुलीः प्राचीः प्राङ्मुखीः करोमि । तदेतदहमृतं सत्यमेव वदामि । नानृतं ब्रवीमीत्यर्थः ॥

अक्षैर्मा दीव्यः कृषिमित्कृषस्व वित्ते रमस्व बहु मन्यमानः ।
तत्र गावः कितव तत्र जाया तन्मे वि चष्टे सवितायमर्यः ॥१३॥
अक्षैः । मा । दीव्यः । कृषिं । इत् । कृषस्व । वित्ते । रमस्व । बहु । मन्यमानः ।
तत्र । गावः । कितव । तत्र । जाया । तत् । मे । वि । चष्टे । सविता । अयं । अर्यः ॥१३॥

हे कितव बहु मन्यमानो मद्वचने विश्वासं कुर्वंस्त्वमक्षैर्मा दीव्यः । द्यूतं मा कुरु । कृषिमित्कृषिमेव कृषस्व । कुरु । वित्ते कृष्या संपादिते धने रमस्व । मतिं कुरु । तत्र कृषौ गावो भवंति । तत्र जाया भवति । तदेव धर्मरहस्यं श्रुतिस्मृतिकर्ता सविता सर्वस्य प्रेरकोऽयं दृष्टिगोचरोऽर्य ईश्वरो वि चष्टे । विविधमाख्यातवान् ॥

मित्रं कृणुध्वं खलु मृळता नो मा नो घोरेण चरताभि धृष्णु ।
नि वो नु मन्युर्विशतामरातिरन्यो बभ्रूणां प्रसितौ न्वस्तु ॥१४॥
मित्रं । कृणुध्वं । खलु । मृळत । नः । मा । नः । घोरेण । चरत । अभि । धृष्णु ।
नि । वः । नु । मन्युः । विशतां । अरातिः । अन्यः । बभ्रूणां । प्रऽसितौ । नु । अस्तु ॥१४॥

हे अक्षाः यूयं मित्रं कृणुध्वं । अस्मासु मैत्रीं कुरुत । खल्विति पूरणः । नोऽस्मान्मृळत । सुखयत च । नो ऽस्मान्धृष्णु धृष्णुना । तृतीयार्थे प्रथमा । घोरेणासह्येन माभि चरत । मा गच्छत । किंच वो युष्माकं मन्युः क्रोधोऽरातिरस्माकं शत्रुर्नि विशतां । अस्मच्छत्रुषु तिष्ठतु । अन्योऽस्माकं शत्रुः कश्चिद्बभ्रूणां बभ्रुवर्णानां युष्माकं प्रसितौ प्रबंधने नु क्षिप्रमस्तु । भवतु ॥ ॥५॥

अबुध्रमिति चतुर्दशर्चं षष्ठं सूक्तं । धनाकपुत्रस्य लुशस्यार्षं । इदमुत्तरं च वैश्वदेवं । त्रयोदशीचतुर्दश्यौ त्रिष्टुभौ शिष्टा द्वादश जगत्यः । तथा चानुक्रांतं । अबुध्रं लुशो धानाको वैश्वदेवं तु द्वित्रिष्टुबंतं त्विति ॥ गतः सूक्तविनियोगः ॥ एकादशिनस्य वैश्वदेवस्य पशोर्वपायागस्यानुवाक्या विश्वे अद्येत्येषा । सूत्रितं च । विश्वे अद्य मरुतो विश्व ऊत्या नो देवानामुप वेतु शंसः । आ० ३.७. । इति ॥

अबुध्रमु त्य इंद्रवंतो अग्नयो ज्योतिर्भरंत उषसो व्युष्टिषु ।
मही द्यावापृथिवी चेततामपोऽद्या देवानामव आ वृणीमहे ॥१॥
अबुध्रं । ऊं इति । त्ये । इंद्रऽवंतः । अग्नयः । ज्योतिः । भरंतः । उषसः । विऽउष्टिषु ।
मही इति । द्यावापृथिवी इति । चेततां । अपः । अद्य । देवानां । अवः । आ । वृणीमहे ॥१॥

इंद्रवंतो यष्टव्यत्वेनेंद्रसंबंधिनस्त्ये तेऽमी आहवनीयादयोऽग्नय उषसो व्युष्टिषु व्युच्छनेषु तमसां विवासनकालेषु ज्योतिस्तेजो भरंतो धारयंतोऽबुध्रं । प्रबुद्धा आसन् । मही महत्यौ द्यावापृथिव्यावपः कर्म । अप इति कर्मनामसु पाठात् । चेततां । जानीतां । अद्यास्मिन्नहनि देवानामिंद्रादीनामवो रक्षणं वयमा वृणीमहे ॥

दिवस्पृथिव्योरव आ वृणीमहे मातॄन्त्सिंधून्पर्वताञ्छर्यणावतः ।
अनागास्त्वं सूर्यमुषासमीमहे भद्रं सोमः सुवानो अद्या कृणोतु नः ॥२॥

दिवःपृथिव्योः । अवः । आ । वृणीमहे । मातॄन् । सिंधून् । पर्वतान् । शर्यणाऽवतः ।
अनागाःऽत्वं । सूर्यं । उषसं । ईमहे । भद्रं । सोमः । सुवानः । अद्य । कृणोतु । नः ॥२॥

दिवःपृथिव्योर्द्यावापृथिव्योः कार्यत्वेन संबंध्यवो रक्षणं वयमा वृणीमहे । किंच मातॄँल्लोकस्य निर्मातॄन्सिंधूञ्शर्यणावतः सरसः संबंधिनः पर्वताञ्शिलोच्चयांश्च तथा सूर्यमुषसं चानागास्त्वं कर्मवैगुण्यजनितपापराहित्यमीमहे । वयं याचामहे । किंचाद्यास्मिन्नहनि नोऽस्माकं सुवानोऽभिषूयमाणः सोमो भद्रं कल्याणं कृणोतु । करोतु ॥

द्यावा नो अद्य पृथिवी अनागसो मही त्रायेतां सुविताय मातरा ।
उषा उच्छंत्यप बाधतामघं स्वस्त्य१ग्निं समिधानमीमहे ॥३॥
द्यावा । नः । अद्य । पृथिवी इति । अनागसः । मही इति । त्रायेतां । सुविताय । मातरा ।
उषाः । उच्छंती । अप । बाधतां । अघं । स्वस्ति । अग्निं । संऽइधानं । ईमहे ॥३॥

मही महत्यौ मातरा मातरौ सर्वस्य मातृभूते द्यावा पृथिवी द्यावापृथिव्यावद्यास्मिन्नहन्यनागसोऽपराधरहितान्नोऽस्मान्सुविताय सुखाय त्रायेतां । रक्षेतां । किंचोच्छंती तमांसि विवासयंत्युषा अस्माकमघं पापमप बाधतां । अपनयतु । अपि च समिधानं सम्यग्दीप्यमानमग्निं स्वस्ति सर्वप्रकाराविनाशमीमहे । वयं याचामहे ॥

इयं न उस्रा प्रथमा सुदेव्यं रेवत्सनिभ्यो रेवती व्युच्छतु ।
आरे मन्युं दुर्विदत्रस्य धीमहि स्वस्त्य१ग्निं समिधानमीमहे ॥४॥
इयं । नः । उस्रा । प्रथमा । सुऽदेव्यं । रेवत् । सनिऽभ्यः । रेवती । वि । उच्छतु ।
आरे । मन्युं । दुःऽविदत्रस्य । धीमहि । स्वस्ति । अग्निं । संऽइधानं । ईमहे ॥४॥

रेवती धनवती प्रथमा मुख्येयमुस्रा पापानामुत्सारिण्युषाः सुदेव्यं शोभनदेवार्हं रेवद्धनवत्प्रधानयागकालत्वं सनिभ्यो भजमानेभ्यो नोऽस्मभ्यं प्रयच्छंती व्युच्छतु । तमांसि विवासयतु । किंच दुर्विदत्रस्य दुर्धनस्य पुरुषस्य मन्युं क्रोधमारे दूरे धीमहि । निधीमहि । सिद्धमन्यत् ॥

प्र याः सिस्रते सूर्यस्य रश्मिभिर्ज्योतिर्भरंतीरुषसो व्युष्टिषु ।
भद्रा नो अद्य श्रवसे व्युच्छत स्वस्त्य१ग्निं समिधानमीमहे ॥५॥
प्र । याः । सिस्रते । सूर्यस्य । रश्मिऽभिः । ज्योतिः । भरंतीः । उषसः । विऽउष्टिषु ।
भद्राः । नः । अद्य । श्रवसे । वि । उच्छत । स्वस्ति । अग्निं । संऽइधानं । ईमहे ॥५॥

या उषसः सूर्यस्य रश्मिभिः किरणैः प्र सिस्रते संगच्छंते व्युष्टिषु व्युच्छनेषु तमसां विवासनकालेषु ज्योतिरात्मीयं तेजो भरंतीः भरंति च ता यूयं नोऽस्माकमद्यास्मिन्नहनि श्रवसेऽन्नाय भद्रा भजनीया भवत । व्युच्छत । तमांसि विवासयत च । सिद्धमन्यत् ॥ ॥६॥

अनमीवा उषस आ चरंतु न उदग्नयो जिहतां ज्योतिषा बृहत् ।
आयुक्षातामश्विना तूतुजिं रथं स्वस्त्य१ग्निं समिधानमीमहे ॥६॥

अनमीवाः । उषसः । आ । चरंतु । नः । उत् । अग्नयः । जिहतां । ज्योतिषा । बृहत् ।
अयुक्षातां । अश्विना । तूतुजिं । रथं । स्वस्ति । अग्निं । संऽइधानं । ईमहे ॥६॥

अनमीवा रोगरहिता उषसो नोऽस्माना चरंतु । आगच्छंतु । बृहद्बृहता महता ज्योतिषा तेजसा युक्ता अग्नयोऽप्युज्जिहतां । उद्गच्छंतु । अश्विनाश्विनौ तूतुजिं क्षिप्रगामिनं रथमायुक्षातां । अस्मान्प्रत्यागंतुं रासभाभ्यां युंक्तां । हरित आदित्यस्य रासभावश्विनोरिति पाठात् । सिद्धमन्यत् ॥

श्रेष्ठं नो अद्य सवितर्वरेण्यं भागमा सुव स हि रत्नधा असि ।
रायो जनित्रीं धिषणामुप ब्रुवे स्वस्त्य१ग्निं समिधानमीमहे ॥७॥
श्रेष्ठं । नः । अद्य । सवितः । वरेण्यं । भागं । आ । सुव । सः । हि । रत्नऽधाः । असि ।
रायः । जनित्रीं । धिषणां । उप । ब्रुवे । स्वस्ति । अग्निं । संऽइधानं । ईमहे ॥७॥

हे सवितः त्वमद्यास्मिन्नहनि नोऽस्मभ्यं वरेण्यं वरणीयं श्रेष्ठं प्रशस्यतमं भागं भजनीयं धनमा सुव । प्रेरय । देहीत्यर्थः । हि यस्मादप्रार्थितस्त्वं रत्नधाः श्रेष्ठानां धनानां संविभक्तासि भवसि । तथा च निगमांतरं । विभक्तारं हवामहे वसोश्चित्रस्य राधसः सवितारं नृचक्षसं । ऋ० १. २२. ७. । इति । रायो धनस्य जनित्रीं धिषणां सर्वदेवस्तुतिरूपां वाचमुप ब्रुवे । अहमुपब्रवीमि । यद्वा । धिषणां देवीमुप ब्रुवे । उपस्तौमीत्यर्थः । सिद्धमन्यत् ॥

पिपर्तु मा तदृतस्य प्रवाचनं देवानां यन्मनुष्या३ अमन्महि ।
विश्वा इदुस्राः स्पळुदेति सूर्यः स्वस्त्य१ग्निं समिधानमीमहे ॥८॥
पिपर्तु । मा । तत् । ऋतस्य । प्रऽवाचनं । देवानां । यत् । मनुष्याः । अमन्महि ।
विश्वाः । इत् । उस्राः । स्पट् । उत् । एति । सूर्यः । स्वस्ति । अग्निं । संऽइधानं । ईमहे ॥८॥

यदृतस्य यज्ञस्य सत्यस्य वा संबंधि देवानां प्रवाचनं प्रकर्षेण गुणानां कथनं स्तोत्रं मनुष्या वयममन्महि कर्तुं जानीमः तत्प्रवाचनं मा मां पिपर्तु । पालयतु । किंच सूर्यो विश्वाः सर्वा उस्रा उषसः स्पट् स्पृशन्नवगच्छन्नोदेति । सिद्धमन्यत् ॥

अद्वेषो अद्य बर्हिषः स्तरीमणि ग्राव्णां योगे मन्मनः साध ईमहे ।
आदित्यानां शर्मणि स्था भुरण्यसि स्वस्त्य१ग्निं समिधानमीमहे ॥९॥
अद्वेषः । अद्य । बर्हिषः । स्तरीमणि । ग्राव्णां । योगे । मन्मनः । साधे । ईमहे ।
आदित्यानां । शर्मणि । स्थाः । भुरण्यसि । स्वस्ति । अग्निं । संऽइधानं । ईमहे ॥९॥

अद्यास्मिन्नहनि बर्हिषः स्तरीमणि वेद्यां स्तरणे मन्मनो मननीयस्याभीष्टस्य फलस्य साधे साधके ग्राव्णामभिषवपाषाणानां योगे सोमेन सह संयोगे च सत्यद्वेषो द्वेषवर्जितानादित्यानीमहे । वयमभीष्टं याचामहे । हे स्तोतः त्वं तेषामादित्यानां देवानां शर्मणि सुखे स्थाने वा स्थाः । तिष्ठ । भुरण्यसि । कर्तव्यानि कर्माणि बिभर्षि । गच्छसि वा । सिद्धमन्यत् ॥

आ नो बर्हिः सधमादे बृहद्दिवि देवाँ ईळे सादया सप्त होतॄन् ।
इंद्रं मित्रं वरुणं सातये भगं स्वस्त्य१ग्निं समिधानमीमहे ॥१०॥

आ। नः। बर्हिः। सधऽमादे। बृहत्। दिवि। देवान्। ईळे। सादय। सप्त। होतॄन्।
इंद्रं। मित्रं। वरुणं। सातये। भगं। स्वस्ति। अग्निं। संऽइधानं। ईमहे ॥१०॥

नोऽस्माकं बृहद्बृहति महति दिवि दीप्ते सधमादे। सह माद्यंति देवा यत्र तस्मिन्। बर्हिर्बर्हिषि यज्ञे सप्त सप्तसंख्याकान्होतॄन्वषट्कर्तॄनिंद्रं मित्रं च वरुणं च भगं च देवानितरानपि यष्टव्यान्देवान् हे अग्ने त्वमा सादय। अग्नेराभिमुख्यकरणं इहाद्य दैव्यं जनं बर्हिरा सादया वसो। ऋ॰ १. ४५. ९.। इत्येवमादिमंत्रैरव-गम्यते। तत्र त्वयासादितांस्तानिंद्रादीन्देवानहं सातये धनलाभायेळे। स्तौमि। सिद्धमन्यत्॥ ॥७॥

त आदित्या आ गता सर्वतातये वृधे नो यज्ञमवता सजोषसः।
बृहस्पतिं पूषणमश्विना भगं स्वस्त्य१ग्निं समिधानमीमहे ॥११॥
ते। आदित्याः। आ। गत। सर्वऽतातये। वृधे। नः। यज्ञं। अवत। सऽजोषसः।
बृहस्पतिं। पूषणं। अश्विना। भगं। स्वस्ति। अग्निं। संऽइधानं। ईमहे ॥११॥

हे आदित्याः येऽस्माभिराहूतास्ते यूयं सर्वतातये यज्ञार्थमा गत। आगच्छत। आगत्य च हे सजोषसः संगताः यूयं नोऽस्माकं वृधे वर्धनाय यज्ञं प्रत्यवत। गच्छत। वयं च बृहस्पतिं पूषणं चाश्विनाश्विनौ च भगं भगाख्यं देवं च समिधानं सम्यग्दीप्तमग्निं च स्वस्ति सर्वप्रकाराविनाशमीमहे। याचामहे॥

तन्नो देवा यच्छत सुप्रवाचनं छर्दिरादित्याः सुभरं नृपाय्यं।
पश्वे तोकाय तनयाय जीवसे स्वस्त्य१ग्निं समिधानमीमहे ॥१२॥
तत्। नः। देवाः। यच्छत। सुऽप्रवाचनं। छर्दिः। आदित्याः। सुऽभरं। नृऽपाय्यं।
पश्वे। तोकाय। तनयाय। जीवसे। स्वस्ति। अग्निं। संऽइधानं। ईमहे ॥१२॥

हे आदित्या देवाः यूयं सुप्रवाचनमत्यंतं प्रशस्तं सुभरं सुसमृद्धं नृपाय्यं नृणां रक्षकं तदस्मदभिलषितं छर्दिर्गृहं नोऽस्माकं पश्वे पश्वात्मकाय तोकाय पुत्राय तनयाय पौत्राय च जीवसे जीवनार्थं यच्छत। दत्त। सिद्धमन्यत्॥

विश्वे अद्य मरुतो विश्व ऊती विश्वे भवंत्वग्नयः समिद्धाः।
विश्वे नो देवा अवसा गमंतु विश्वमस्तु द्रविणं वाजो अस्मे ॥१३॥
विश्वे। अद्य। मरुतः। विश्वे। ऊती। विश्वे। भवंतु। अग्नयः। संऽइद्धाः।
विश्वे। नः। देवाः। अवसा। आ। गमंतु। विश्वं। अस्तु। द्रविणं। वाजः। अस्मे इति ॥१३॥

अद्यास्मिन्नहनि प्रधानयागदिवसे विश्वे सर्वे मरुतो विश्वे सर्वे मरुद्गणसहचरिता रुद्रादयो देवाश्चोत्यूती रक्षणाय भवंतु। अपि च विश्वे सर्वेऽग्नय आहवनीयादयः समिद्धाः संदीप्ता भवंतु। अपि च विश्वे सर्वे इंद्रादयो देवा नोऽस्माकमवसा रक्षणेना गमंतु। आगच्छंतु। किंचास्मे अस्मासु विश्वं सर्वं द्रविणं धनं वाजोऽन्नं चास्तु। भवतु॥

यं देवासोऽवथ वाजसातौ यं त्रायध्वे यं पिपृथात्यंहः।
यो वो गोपीथे न भयस्य वेद ते स्याम देववीतये तुरासः ॥१४॥

यं । देवासः । अवथ । वाजऽसातौ । यं । त्रायध्वे । यं । पिपृथ । अति । अंहः ।
यः । वः । गोऽपीथे । न । भयस्य । वेद । ते । स्याम । देवऽवीतये । तुरासः ॥१४॥

हे तुरासोऽभीष्टप्रदाने क्षिप्रा देवासो देवाः यूयं वाजसातौ संग्रामे यं मनुष्यमवथ रक्षथ यं च त्रायध्वे शत्रोः पालयथ यं चांहः पापमत्यतिनीय पिपृथ कामैः पूरयथ यश्चापि मनुष्यो वो युष्माकं कार्यत्वेन संबंधिनि गोपीथे रक्षणे भयस्य भयं न वेद न जानाति ते सर्वे वयं देववीतये यज्ञार्थं स्याम । भवेम ॥ ॥८॥

उषासानक्तेति चतुर्दशर्चं सप्तमं सूक्तं । धानाकस्य सुशस्यार्षं । आदितो द्वादश जगत्यस्ततो द्वे त्रिष्टुभौ । विश्वे देवा देवता । पूर्वसूक्ते वैश्वदेवं तु द्वित्रिष्टुबंतं त्वित्युक्तत्वात् । उषासानक्तेत्यनुक्रांतं ॥ आभिप्लविके षष्ठेऽहनि वैश्वदेव इदं वैश्वदेवनिविद्धानं । सूत्रितं च । कतरा पूर्वोषासानक्तेति वैश्वदेवं । आ० ७.७. । इति ॥

उषासानक्ता बृहती सुपेशसा द्यावाक्षामा वरुणो मित्रो अर्यमा ।
इंद्रं हुवे मरुतः पर्वताँ अप आदित्यान्द्यावापृथिवी अपः स्वः ॥१॥
उषसानक्ता । बृहती इति । सुऽपेशसा । द्यावाक्षामा । वरुणः । मित्रः । अर्यमा ।
इंद्रं । हुवे । मरुतः । पर्वतान् । अपः । आदित्यान् । द्यावापृथिवी इति । अपः ।
स्व१रिति स्वः ॥१॥

बृहती बृहत्यौ महत्यौ सुपेशसा सुरूपे उषासानक्ता रात्र्युषसौ द्यावाक्षामा द्यावापृथिव्यौ च वरुणो मित्रो मित्रावरुणौ चार्यमा च येऽत्र विहिता देवाः तानेतानिंद्रं मरुतश्च पर्वतांश्चाप उदकानि चादित्यांश्च द्यावापृथिवी द्यावापृथिव्यौ च । पुनर्द्यावापृथिव्योर्ग्रहणमादरार्थं । अपोऽंतरिक्षं च स्वः सर्वं च यष्टव्यं देवजातं हुवे । ह्वयामि ॥

द्यौश्च नः पृथिवी च प्रचेतस ऋतावरी रक्षतामंहसो रिषः ।
मा दुर्विदत्रा निर्ऋतिर्न ईशत तद्देवानामवो अद्या वृणीमहे ॥२॥
द्यौः । च । नः । पृथिवी । च । प्रऽचेतसा । ऋतवरी इत्यृतऽवरी । रक्षतां । अंहसः । रिषः ।
मा । दुःऽविदत्रा । निःऽऋतिः । नः । ईशत । तत् । देवानां । अवः । अद्य । वृणीमहे ॥२॥

प्रचेतसा सुबुद्धी ऋतावरी यज्ञवत्यौ सत्यवत्यौ द्यौश्च पृथिवी च द्यावापृथिव्यावुभे नोऽस्मान्रिषो हिंसकादंहसः पापाच्च रक्षतां । किंच दुर्विदत्रा कुत्सितज्ञाना निर्ऋतिर्मृत्युदेवता नोऽस्माकं मेशत । ईश्वरी मा भूत् । किंच वयं देवानां संबंधि तदसाधारणमवो रक्षणमद्यास्मिन्नहनि प्रधानयागदिवसे वृणीमहे । प्रार्थयामहे ॥

विश्वस्मान्नो अदितिः पात्वंहसो माता मित्रस्य वरुणस्य रेवतः ।
स्वर्वज्ज्योतिरवृकं नशीमहि तद्देवानामवो अद्या वृणीमहे ॥३॥
विश्वस्मात् । नः । अदितिः । पातु । अंहसः । माता । मित्रस्य । वरुणस्य । रेवतः ।
स्वःऽवत् । ज्योतिः । अवृकं । नशीमहि । तत् । देवानां । अवः । अद्य । वृणीमहे ॥३॥

रेवतो धनवतो मित्रस्य वरुणस्य च धनवतोर्मित्रावरुणयोर्माता अनन्यदितिर्देवी नोऽस्मान्विश्वस्मात्सर्वस्मादंहसः पापात्पातु । रक्षतु । किंच वयमवृकं बाधकरहितं स्वर्वत् सर्वं ज्योतिस्तेजो नशीमहि । नशिः पलायनकर्मा । पलायनं च शीघ्रगमनं । शीघ्रं प्राप्नुम इत्यर्थः । सिद्धमन्यत् ॥

ग्रावा वदन्नप रक्षांसि सेधतु दुष्ष्वप्न्यं निर्ऋतिं विश्वमत्रिणं ।
आदित्यं शर्म मरुतामशीमहि तद्देवानामवो अद्या वृणीमहे ॥४॥
ग्रावा । वदन् । अप । रक्षांसि । सेधतु । दुःऽस्वप्न्यं । निःऽऋतिं । विश्वं । अत्रिणं ।
आदित्यं । शर्म । मरुतां । अशीमहि । तत् । देवानां । अवः । अद्य । वृणीमहे ॥४॥

ग्रावाभिषवपाषाणो वदन्नभिषववेलायां शब्दं कुर्वन्रक्षांसि यागविघ्नकारीण्यप सेधतु । विनिवारयतु । दुःस्वप्न्यं दुःष्वप्नप्रभवमस्मदीयमनिष्टं चाप सेधतु । निर्ऋतिं मृत्युदेवतां चाप सेधतु । अत्रिणमदनशीलं विश्वं सर्वं पिशाचादिकं चाप सेधतु । एवं निर्विघ्नत्वेन निष्पन्ने यागे वयमादित्यमादित्यानां संबंधि मरुतां च संबंधि शर्म सुखमशीमहि । प्राप्नुयाम । सिद्धमन्यत् ॥

एंद्रो बर्हिः सीदतु पिन्वतामिळा बृहस्पतिः सामभिर्ऋक्को अर्चतु ।
सुप्रकेतं जीवसे मन्म धीमहि तद्देवानामवो अद्या वृणीमहे ॥५॥
आ । इंद्रः । बर्हिः । सीदतु । पिन्वतां । इळा । बृहस्पतिः । सामऽभिः । ऋक्कः । अर्चतु ।
सुऽप्रकेतं । जीवसे । मन्म । धीमहि । तत् । देवानां । अवः । अद्य । वृणीमहे ॥५॥

इंद्रो बर्हिरा सीदतु । इळा माध्यमिका स्तनयित्नुलक्षणा वागपि पिन्वतां । किंतु सामभिर्गीयमान ऋक्कः स्तुतिमान्बृहस्पतिरप्यर्चतु । अस्मान्पूजयतु । किंच वयं सुप्रकेतं सुप्रज्ञानं मन्म मननीयं धनं स्तोत्रं वा धीमहि निदधीमहि जीवसे जीवनाय । सिद्धमन्यत् ॥ ॥९॥

दिविस्पृशं यज्ञमस्माकमश्विना जीराध्वरं कृणुतं सुम्नमिष्टये ।
प्राचीनरश्मिमाहुतं घृतेन तद्देवानामवो अद्या वृणीमहे ॥६॥
दिविऽस्पृशं । यज्ञं । अस्माकं । अश्विना । जीरऽअध्वरं । कृणुतं । सुम्नं । इष्टये ।
प्राचीनऽरश्मिं । आऽहुतं । घृतेन । तत् । देवानां । अवः । अद्य । वृणीमहे ॥६॥

हे अश्विनौ युवां नोऽस्माकं यज्ञं दिविस्पृशं दिवि स्प्रष्टारं गंतारं कृणुतं । कुरुतं । तथा जीराध्वरं क्षिप्रं हिंसारहितं च यज्ञं नोऽस्माकं कृणुतं । कुरुतं । इष्टयेऽभिलषितसिद्ध्यर्थं सुम्नं सुखं च कुरुतं । किंच घृतेनाज्येनाहुतमग्निं प्राचीनरश्मिं देवाभिमुखं कुरुतमित्यर्थः । सिद्धमन्यत् ॥

उप ह्वये सुहवं मारुतं गणं पावकमृष्वं सख्याय शंभुवं ।
रायस्पोषं सौश्रवसाय धीमहि तद्देवानामवो अद्या वृणीमहे ॥७॥
उप । ह्वये । सुऽहवं । मारुतं । गणं । पावकं । ऋष्वं । सख्याय । शंऽभुवं ।
रायः । पोषं । सौश्रवसाय । धीमहि । तत् । देवानां । अवः । अद्य । वृणीमहे ॥७॥

सुहवं स्वाह्वानं पावकं शोधकमृष्वं दर्शनीयं शंभुवं सुखस्य भावयितारं रायो धनस्य पोषं पोषकं मारुतं मरुतां संबंधिनं गणं संघं सख्याय सखिभावायोप ह्वये । उपगम्य ह्वयामि । आगतं गणं सौश्रवसाय शोभनान्नवत्त्वाय सुयशस्त्वाय वा वयं धीमहि । धुञो निदधीमहि । सिद्धमन्यत् ॥

अपां पेरुं जीवधन्यं भरामहे देवाव्यं सुहवमध्वरश्रियं ।
सुरश्मिं सोममिंद्रियं यमीमहि तद्देवानामवो अद्या वृणीमहे ॥८॥

अपां। पेरुं। जीवऽधन्यं। भरामहे। देवऽअव्यं। सुऽहवं। अध्वरऽश्रियं।
सुऽरश्मिं। सोमं। इंद्रियं। यमीमहि। तत्। देवानां। अवः। अद्य। वृणीमहे ॥८॥

अपामुदकानां पेरुं पालकं जीवधन्यं। धन्या जीवा यस्मिन्नसौ जीवधन्यः। तं देवाव्यं देवानां तर्पकं सुहवं शोभनाह्वानं शोभनस्तुतिं वाध्वरश्रियं सुरश्मिं शोभनांशुं सोमं भरामहे। धारयामः। पत्नीशालातो हविर्धानं प्रति प्रापयामो वा। भृतं तं सोममिंद्रियं वीर्यं यमीमहि। वयं याचामहे। सिद्धमन्यत् ॥

सनेम तत्सुसनिता सनित्वभिर्वयं जीवा जीवपुत्रा अनागसः।
ब्रह्मद्विषो विष्वगेनो भरेरत तद्देवानामवो अद्या वृणीमहे ॥९॥
सनेम। तत्। सुऽसनिता। सनित्वऽभिः। वयं। जीवाः। जीवऽपुत्राः। अनागसः।
ब्रह्मऽद्विषः। विष्वक्। एनः। भरेरत। तत्। देवानां। अवः। अद्य। वृणीमहे ॥९॥

जीवा जीवंतो जीवपुत्रा जीवनवत्पुत्राश्चानागसोऽपराधवर्जिताश्च वयं धनाका सुप्राः सनित्वभिः संभक्तृभिः पुत्रपौत्रादिभिः सह सुसनिता शोभनेन भजनेन तद्देवजातं सनेम। स्तुत्या हविष्प्रदानेन च संभजेमहि। किंच ब्रह्मद्विषो ब्राह्मणानामस्माकं द्वेष्टारो विष्वग्मानागच्छदेनोऽस्मदीयं पापं भरेरत। आत्मनि धारयंतु। पोषयंतु। सिद्धमन्यत् ॥

ये स्था मनोर्यज्ञियास्ते शृणोतन यद्वो देवा ईमहे तद्ददातन।
जैत्रं क्रतुं रयिमद्वीरवद्यशस्तद्देवानामवो अद्या वृणीमहे ॥१०॥
ये। स्थ। मनोः। यज्ञियाः। ते। शृणोतन। यत्। वः। देवाः। ईमहे। तत्। ददातन।
जैत्रं। क्रतुं। रयिऽमत्। वीरऽवत्। यशः। तत्। देवानां। अवः। अद्य। वृणीमहे ॥१०॥

हे देवाः ये यूयं मनोर्मनुष्यस्य यज्ञिया यज्ञार्हाः स्थ भवथ ते यूयं शृणोतन। अस्मदीयां स्तुतिं शृणुत। किंच हे देवाः वो युष्मान्यदभीष्टमीमहे याचामहे तज्जैत्रं जयशीलं क्रतुं प्रज्ञानं रयिमद्धनवद्वीरवत्पुत्राद्युपेतं यशश्च ददातन। नोऽस्मभ्यं प्रयच्छत। सिद्धमन्यत् ॥ ॥१०॥

महदद्य महतामा वृणीमहेऽवो देवानां बृहतामनर्वणां।
यथा वसु वीरजातं नशामहै तद्देवानामवो अद्या वृणीमहे ॥११॥
महत्। अद्य। महतां। आ। वृणीमहे। अवः। देवानां। बृहतां। अनर्वणां।
यथा। वसु। वीरऽजातं। नशामहै। तत्। देवानां। अवः। अद्य। वृणीमहे ॥११॥

अद्यास्मिन्नहनि महतां श्रेष्ठानां बृहतां वृद्धानामनर्वणामप्रतिगतानां देवानामिंद्रादीनां संबंधि महदधिकमवो रक्षणमा वृणीमहे। प्रार्थयामहे। किंच वयं यथा वसु धनं वीरजातमपत्यजातं च नशामहै प्राप्नुयाम तथा ते देवाः कुर्वंत्विति शेषः ॥

महो अग्नेः समिधानस्य शर्मण्यनागा मित्रे वरुणे स्वस्तये।
श्रेष्ठे स्याम सवितुः सवीमनि तद्देवानामवो अद्या वृणीमहे ॥१२॥
महः। अग्नेः। संऽइधानस्य। शर्मणि। अनागाः। मित्रे। वरुणे। स्वस्तये।
श्रेष्ठे। स्याम। सवितुः। सवीमनि। तत्। देवानां। अवः। अद्य। वृणीमहे ॥१२॥

समिधानस्य समिध्यमानस्य महो महतोऽग्नेः शर्मणि सुखे वयं स्याम । भवेम । किंच वयमनागा अनागसः ॥ वचनव्यत्ययः ॥ स्याम । अपि च मित्रे वरुणे मित्रावरुणयोः । षष्ठ्यर्थे सप्तमी । सवितुश्च सवीमनि प्रसवे स्वस्तये सर्वप्रकाराविनाशाय स्याम । सिद्धमन्यत् ॥

ये सवितुः सत्यसवस्य विश्वे मित्रस्य व्रते वरुणस्य देवाः ।
ते सौभगं वीरवद्गोमदप्नो दधातन द्रविणं चित्रमस्मे ॥१३॥
ये । सवितुः । सत्यऽसवस्य । विश्वे । मित्रस्य । व्रते । वरुणस्य । देवाः ।
ते । सौभगं । वीरऽवत् । गोऽमत् । अप्नः । दधातन । द्रविणं । चित्रं । अस्मे इति ॥१३॥

ये विश्वे देवाः सत्यसवस्य सत्यप्रसवस्य सवितुर्मित्रस्य वरुणस्य मित्रावरुणयोश्च व्रते प्रसवाख्ये कर्मणि भवंति ते यूयं सौभगं सौभाग्यं वीरवत्पुत्राद्युपेतं गोमद्गोयुक्तं चित्रं पूजनीयं द्रविणं धनं चाप्नः कर्म चास्मे मह्यं दधातन । प्रयच्छत ॥

सविता पश्चातात्सविता पुरस्तात्सवितोत्तरात्तात्सविताधरात्तात् ।
सविता नः सुवतु सर्वतातिं सविता नो रासतां दीर्घमायुः ॥१४॥
सविता । पश्चातात् । सविता । पुरस्तात् । सविता । उत्तरात्तात् । सविता । अधरात्तात् ।
सविता । नः । सुवतु । सर्वऽतातिं । सविता । नः । रासतां । दीर्घं । आयुः ॥१४॥

पश्चातात्पश्चिमतः स्थितः सविता पुरस्तात्पूर्वतश्च स्थितः सवितोत्तरात्तादुत्तरतः स्थितश्च सविता नोऽस्माकं सर्वतातिं सर्वमभिलषितं धनादिकं सुवतु । प्रेरयतु । किंच सवितैव नोऽस्मभ्यं दीर्घं बहुकालीनमायू रासतां । ददातु । बहुधा सवितृपदग्रहणमत्यंतमादरार्थं ॥ ॥११॥

नमो मित्रस्येति द्वादशर्चमष्टमं सूक्तं । अभितपा नाम सूर्यपुत्र ऋषिः । इदमादीनि पंच सूक्तानि जागतानि । अस्य सूक्तस्य दशमी त्रिष्टुप् । सूर्यो देवता । तथा चानुक्रांतं । नमो द्वादश सौर्योऽभितपाः सौर्यं जागतं वै त्रिष्टुब्दशमीति ॥ आश्विनशस्त्रे सूर्योदयादूर्ध्वं सौर्यकांड एतत्सूक्तं । सूत्रितं च । चित्रं देवानां नमो मित्रस्य । आ० ६.५. । इति ॥ विषुवति निष्कैवल्य आद्यस्तृचोऽनुरूपः । सूत्रितं च । विभ्राड्बृहत्पिबतु सोम्यं मधु नमो मित्रस्य वरुणस्य चक्षस इति स्तोत्रियानुरूपौ । आ० ८.६. । इति ॥ स्वपंतमभ्यस्तमये सति रात्रिशेषं स्थित्वा प्रातर्येन सूर्यो ज्योतिषेत्यादिभिः पंचभिः सूर्य उपस्थेयः । सूत्रितं च । अव्याधितं चेत्स्वपंतमादित्योऽभ्यस्तमियाद्वाग्यतोऽनुपविशन्रात्रिशेषं भूत्वा येन सूर्य ज्योतिषा बाधसे तम इति पंचभिरादित्यमुपतिष्ठेत । स्वपंतमभ्युदिते यस्य ते विश्वेत्यादिभिश्चतसृभिः सूर्य उपस्थेयः । सूत्रितं च । अभ्युदियाच्चेदकर्मश्रांतमनभिरूपेण कर्मणा वाग्यत इति समानमुत्तराभिश्चतसृभिरुपस्थानं । आ० गृ० ३.७.१–२. । इति ॥ एकादशिनस्य सौर्यस्य पशोर्हविषो याज्या । सूत्रितं च । शं नो भव चक्षसा शं नो अह्ना वायो भूष शुचिपाः । आ० ३.८. । इति ॥ होत्रकाणां शकलाधाने यद्वो देवा इत्येषा । आ० ६.१२.॥ विवाहे कन्यारोदनीये जीवं रुदंतीत्येषा जप्या । आ० गृ० १.८.४.॥

नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतं सपर्यत ।
दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शंसत ॥१॥
नमः । मित्रस्य । वरुणस्य । चक्षसे । महः । देवाय । तत् । ऋतं । सपर्यत ।
दूरेऽदृशे । देवऽजाताय । केतवे । दिवः । पुत्राय । सूर्याय । शंसत ॥१॥

हे ऋत्विजः यूयं मित्रस्य वरुणस्य मित्रावरुणयोश्चक्षसे द्रष्ट्रे महो महते देवाय द्योतमानाय दूरेदृशे दूरे संतमपि पश्यते देवजाताय देवेषु जाताय देवार्थमुत्पन्नाय केतवे विश्वस्य प्रज्ञापकाय दिवः पुत्राय पुत्रभूताय। दिवि जायमानत्वात्तत्पुत्रत्वव्यपदेशः। सूर्याय सूर्यार्थं नमः कृत्वा तद्विहितमृतं यागादिलक्षणं कर्म सपर्यत। पूजयत। शंसत। स्तुतिमपि कुरुत ॥

सा मा सत्योक्तिः परि पातु विश्वतो द्यावा च यत्र ततनन्नहानि च।
विश्वमन्यन्नि विशते यदेजति विश्वाहापो विश्वाहोदेति सूर्यः ॥२॥
सा। मा। सत्यऽउक्तिः। परि। पातु। विश्वतः। द्यावा। च। यत्र। ततनन्। अहानि। च।
विश्वं। अन्यत्। नि। विशते। यत्। एजति। विश्वाहा। आपः। विश्वाहा। उत्।
एति। सूर्यः ॥२॥

सा सत्योक्तिस्तत्सत्यवचनं मा मां विश्वतः सर्वतः परि पातु। परिरक्षतु। यया सत्योक्त्या यत्र यस्मिन्देशे द्यावा च द्यावापृथिव्यावहानि रात्रयश्च ततनन् अतन्वन् तत्र विश्वं सर्वमन्यद्भूतजातं नि विशते। विश्राम्यति। यदेतद्भूतजातमेजति कंपते विश्वाहा सर्वदापश्च स्यंदंते विश्वाहा सर्वदा सूर्यश्चोदेति। सा सत्योक्तिर्मा परिपात्वित्यर्थः ॥

न ते अदेवः प्रदिवो नि वासते यदेतशेभिः पतरै रथर्यसि।
प्राचीनमन्यदनु वर्तते रज उदन्येन ज्योतिषा यासि सूर्य ॥३॥
न। ते। अदेवः। प्रऽदिवः। नि। वासते। यत्। एतशेभिः। पतरैः। रथर्यसि।
प्राचीनं। अन्यत्। अनु। वर्तते। रजः। उत्। अन्येन। ज्योतिषा। यासि। सूर्य ॥३॥

हे सूर्य ते तव समीपे प्रदिवः प्रत्नः पुरातनः कश्चिददेवोऽसुरो राक्षसो वा न नि वासते। न निवसति। कदेत्यत आह। यद्यदा त्वं पतरैर्गमनशीलैरेतशेभिरश्वै रथर्यसि रथं कामयसे योक्तुं। किंच प्राचीनमन्यत्त्वदीयं ज्योती रज उदकमनु वर्तते। अन्येन तेन ज्योतिषोद्यासि। उदेषि। यद्वा। प्राचीनमन्यद्रजश्चंद्राख्यं ज्योतिस्त्वामनु वर्तते ततस्त्वमन्येन ज्योतिषा सहोदेषीत्यर्थः ॥

येन सूर्य ज्योतिषा बाधसे तमो जगच्च विश्वमुदियर्षि भानुना।
तेनास्मद्विश्वामनिरामनाहुतिमपामीवामप दुष्ष्वप्न्यं सुव ॥४॥
येन। सूर्य। ज्योतिषा। बाधसे। तमः। जगत्। च। विश्वं। उत्ऽइयर्षि। भानुना।
तेन। अस्मत्। विश्वां। अनिरां। अनाहुतिं। अप। अमीवां। अप। दुःऽस्वप्न्यं। सुव ॥४॥

हे सूर्य त्वं येन ज्योतिषा तेजसा तमोऽंधकारं बाधसे निवारयसि येन च भानुना तेजसा विश्वं सर्वं जगज्जंगममुदियर्षि उन्नमयसि तेन ज्योतिषास्मदस्मत्तोऽनिरामन्नाभावमनाहुतिमहोमं चामीवां रोगजातं चाप सुव। अपगमय। दुःस्वप्न्यं दुःस्वप्नप्रभवमनिष्टं चाप सुव ॥

विश्वस्य हि प्रेषितो रक्षसि व्रतमहेळयन्नुच्चरसि स्वधा अनु।
यदद्य त्वा सूर्योपब्रवामहै तं नो देवा अनु मंसीरत क्रतुं ॥५॥

विश्वस्य। हि। प्रऽईषितः। रक्षसि। व्रतं। अहेळयन्। उत्ऽचरसि। स्वधाः। अनु।
यत्। अद्य। त्वा। सूर्य। उपऽब्रवामहै। तं। नः। देवाः। अनु। मंसीरत। क्रतुं ॥५॥

हे सूर्य प्रेषितः प्रेरितस्त्वमहेळयन्नक्रुध्यन्विश्वस्य सर्वस्य यजमानस्य व्रतं कर्म रक्षसि हि। यज्ञविध्वंसकेभ्यो राक्षसेभ्यः पालयसि। स्वधा हवींष्यनुचरसि। उद्गच्छसि च। प्रातर्होमे निवृत्ते सति पश्चादुद्गच्छसीत्यर्थः। तथा च यद्यदाद्यास्मिन्नहनि त्वा त्वामुपब्रवामहै उपब्रूमः तदा नोऽस्माकं तं क्रतुं तत्कर्म देवा इंद्रादयोऽनु मंसीरत। अनुमन्यंतां॥

तं नो द्यावापृथिवी तन्न आप इंद्रः शृण्वंतु मरुतो हवं वचः।
मा शूने भूम सूर्यस्य संदृशि भद्रं जीवंतो जरणामशीमहि ॥६॥
तं। नः। द्यावापृथिवी इति। तत्। नः। आपः। इंद्रः। शृण्वंतु। मरुतः। हवं। वचः।
मा। शूने। भूम। सूर्यस्य। संऽदृशि। भद्रं। जीवंतः। जरणां। अशीमहि ॥६॥

द्यावापृथिवी द्यावापृथिव्यावापश्चेंद्रश्च मरुतश्च नोऽस्माकं तं हवमाह्वानं नोऽस्माकं तद्वचः स्तुतिरूपं वाक्यं च। न इति द्विरुक्तिरादरार्था। शृण्वंतु। किंच वयं सूर्यस्य संदृशि संदर्शने शूने प्रवृद्धाय दुःखाय मा भूम। मैव भवेम। किंतु जीवंतश्चिरं प्राणान्धारयंतो वयं भद्रं कल्याणं जरणां वृद्धत्वममरत्वं चाशीमहि। प्राप्नुयाम॥ ॥१२॥

विश्वाहा त्वा सुमनसः सुचक्षसः प्रजावंतो अनमीवा अनागसः।
उद्यंतं त्वा मित्रमहो दिवेदिवे ज्योग्जीवाः प्रति पश्येम सूर्य ॥७॥
विश्वाहा। त्वा। सुऽमनसः। सुऽचक्षसः। प्रजाऽवंतः। अनमीवाः। अनागसः।
उत्ऽयंतं। त्वा। मित्रऽमहः। दिवेऽदिवे। ज्योक्। जीवाः। प्रति। पश्येम। सूर्य ॥७॥

हे सूर्य त्वा त्वां सुमनसः प्रीतियुक्तमनस्काः सुचक्षसः सुदर्शनाः प्रजावंतः पुत्राद्युपेता अनमीवा रोगरहिता अनागसोऽपराधवर्जिताश्च वयं विश्वाहा सर्वदा यजेमेति शेषः। किंच हे मित्रमहो मित्राणां पूजयितः सूर्य दिवेदिवे प्रतिदिनमुद्यंतमुदयं प्राप्नुवंतं त्वा त्वां ज्योक् चिरं जीवा जीवंतो वयं प्रति पश्येम॥

महि ज्योतिर्बिभ्रतं त्वा विचक्षण भास्वंतं चक्षुषेचक्षुषे मयः।
आरोहंतं बृहतः पाजसस्परि वयं जीवाः प्रति पश्येम सूर्य ॥८॥
महि। ज्योतिः। बिभ्रतं। त्वा। विऽचक्षण। भास्वंतं। चक्षुषेऽचक्षुषे। मयः।
आऽरोहंतं। बृहतः। पाजसः। परि। वयं। जीवाः। प्रति। पश्येम। सूर्य ॥८॥

हे विचक्षण विद्रष्टः सूर्य महि महज्ज्योतिस्तेजो बिभ्रतं धारयंतं भास्वंतं दीप्तिमंतं चक्षुषे चक्षुषे सर्वेषां द्रष्टॄणां चक्षुषे मयः सुखकरं बृहतो महतः पाजसो बलवतः परि। महतो बलवतः समुद्रस्योदकस्योपरीत्यर्थः। आरोहंतं त्वा त्वां जीवाश्चिरं जीवंतो वयं प्रति प्रतिदिनं पश्येम॥

यस्य ते विश्वा भुवनानि केतुना प्र चेरते नि च विशंते अक्तुभिः।
अनागास्त्वेन हरिकेश सूर्याह्नाह्ना नो वस्यसावस्यसोदिहि ॥९॥

यस्य । ते । विश्वा । भुवनानि । केतुना । प्र । च । ईरते । नि । च । विशंते । अक्तुऽभिः ।
अनागाःऽत्वेन । हरिऽकेश । सूर्य । अह्नाऽअह्ना । नः । वस्यसाऽवस्यसा । उत् । इहि ॥९॥

हे हरिकेश हरितवर्णकेश सूर्य यस्य ते तव केतुना प्रज्ञानेन विश्वा विश्वानि भुवनानि भूतजातानि प्र चेरते प्रकर्षेण गच्छंति अक्तुभी रात्रिभिर्नि विशंते च विश्राम्यंति च । स्वपंतीत्यर्थः । स त्वं नोऽस्माकमनागास्त्वेनापराधवर्जितत्वेन वस्यसा वस्यसात्यंतश्रेयस्करेण वसुमत्तरेण वाह्नाह्ना तेन तेन दिवसेनोदिहि । उद्गच्छ ॥

शं नो भव चक्षसा शं नो अह्ना शं भानुना शं हिमा शं घृणेन ।
यथा शमध्वञ्छमसद्दुरोणे तत्सूर्य द्रविणं धेहि चित्रं ॥१०॥

शं । नः । भव । चक्षसा । शं । नः । अह्ना । शं । भानुना । शं । हिमा । शं । घृणेन ।
यथा । शं । अध्वन् । शं । असत् । दुरोणे । तत् । सूर्य । द्रविणं । धेहि । चित्रं ॥१०॥

हे सूर्य त्वं चक्षसा तेजसा नोऽस्माकं शं सुखकरो भव । अह्ना दिवसेन च शं सुखकरो नोऽस्माकं भव । भानुना रश्मिना च शं भव । अस्माकं सुखकरो भव । हिमा शैत्येन च शं भव । घृणेनौष्ण्येन च शंकरो भव । यथा यादृशेन नोऽस्माकमध्वन्नध्वनि मार्गे शं भवति दुरोणे गृहे च शं सुखमसत् भवति तच्चित्रं पूजनीयं द्रविणं धनं धेहि । अस्मभ्यं प्रयच्छ ॥

अस्माकं देवा उभयाय जन्मने शर्म यच्छत द्विपदे चतुष्पदे ।
अदत्पिबदूर्जयमानमाशितं तदस्मे शं योररपो दधातन ॥११॥

अस्माकं । देवाः । उभयाय । जन्मने । शर्म । यच्छत । द्विऽपदे । चतुःऽपदे ।
अदत् । पिबत् । ऊर्जयमानं । आशितं । तत् । अस्मे इति । शं । योः । अरपः । दधातन ॥११॥

हे देवाः सूर्येणाभ्यनुज्ञाता यूयमस्माकं द्विपदे मनुष्यात्मकाय चतुष्पदे पश्वात्मकाय चोभयायोभयविधाय जन्मने भूतजाताय शर्म सुखं यच्छत । दत्त । किंच यथास्मत्पुत्रादिकमदन्नक्षणीयं भक्षयत् पिबत्पानीयं पिबन्नोर्जयमानं बलवंतमिवात्मानमाचरन्नाशितं सुहितं च भवति तथा शं रोगशांतिनिमित्तकं सुखं योर्विषययोगजनितं सुखं चारपोऽपापं च दधातन । प्रयच्छत ॥

यद्वो देवाश्चकृम जिह्वया गुरु मनसो वा प्रयुती देवहेळनं ।
अरावा यो नो अभि दुच्छुनायते तस्मिन्तदेनो वसवो नि धेतन ॥१२॥

यत् । वः । देवाः । चकृम । जिह्वया । गुरु । मनसः । वा । प्रऽयुती । देवऽहेळनं ।
अरावा । यः । नः । अभि । दुच्छुनऽयते । तस्मिन् । तत् । एनः । वसवः । नि । धेतन ॥१२॥

हे वसवो वासयितारो देवाः वो युष्माकं वयं जिह्वया वाचा मनसः प्रयुती प्रयुत्या प्रयोगेण गुरु महद्देवहेळनं देवक्रोधनं च यदेनश्चकृम अकार्ष्म योऽस्मच्छत्रुर्नोऽस्मानभि प्रत्यरावा गमनवान्भूत्वा दुच्छुनायते पापान्याचरत्यस्मानुद्वेजयति वा तस्मिन्नस्मच्छत्रौ तदेनोऽस्माभिः कृतं पापं नि धेतन । सूर्यस्याज्ञया विधत्त । स्थापयतेत्यर्थः ॥ ॥१३॥

अस्मिन्न इति पंचर्चं नवमं सूक्तं आगतमैंद्रं । मुष्कविशिष्ट इंद्राख्य ऋषिः । तथा चानुक्रांतं । अस्मिन्नः पंच मुष्कवानिंद्र इति ॥ गतो विनियोगः ॥ अपरे तु तांडवाः शाट्यायनका अस्य सूक्तस्य मुष्कवानिंद्रो देवता लुश ऋषिरिति वर्णयंति ॥

अस्मिन्न इंद्र पृत्सुतौ यशस्वति शिमीवति क्रंदसि प्राव सातये ।
यत्र गोषाता धृषितेषु खादिषु विष्वक्पतंति दिद्यवो नृषाह्ये ॥१॥
अस्मिन् । नः । इंद्र । पृत्सुतौ । यशस्वति । शिमीऽवति । क्रंदसि । प्र । अव । सातये ।
यत्र । गोऽसाता । धृषितेषु । खादिषु । विष्वक् । पतंति । दिद्यवः । नृऽसह्ये ॥१॥

हे इंद्र त्वं यशस्वति कीर्तिमति शिमीवति परस्परप्रहारलक्षणकर्मवत्यस्मिन्नुपस्थिते पृत्सुतौ संग्रामे क्रंदसि । सिंहनादं करोषि । सातये धनलाभाय प्राव नोऽस्मान्प्ररक्षसि च । कस्मिन्नित्यत्राह । यत्र यस्मिन्गोषाता गोसातौ लब्धपशुके नृषाह्ये नृणामभिभावुके च संग्रामे खादिषु परस्परखादकेषु च योद्धृषु धृषितेषु धृष्टेषु सत्सु दिद्यव आयुधानि विष्वक् सर्वतः पतंति ॥

स नः क्षुमंतं सदने व्यूर्णुहि गोअर्णसं रयिमिंद्र श्रवाय्यं ।
स्याम ते जयतः शक्र मेदिनो यथा वयमुश्मसि तद्वसो कृधि ॥२॥
सः । नः । क्षुऽमंतं । सदने । वि । ऊर्णुहि । गोऽअर्णसं । रयिं । इंद्र । श्रवाय्यं ।
स्याम । ते । जयतः । शक्र । मेदिनः । यथा । वयं । उश्मसि । तत् । वसो इति । कृधि ॥२॥

हे इंद्र स सर्वानुग्राहकत्वेन प्रसिद्धस्त्वं नोऽस्माकं सदने गृहे क्षुमंतमन्नवंतं शब्दवंतं वा गोअर्णसं । गावोऽर्ण उदकमिव प्रवृद्धा यस्मिन् । तं श्रवाय्यं श्रवणीयं रयिं धनं व्यूर्णुहि । विविधमाच्छादय । किंच हे वसो वासक शक्रेंद्र जयतः शत्रुं ते तव प्रसादाद्वयं मेदिनो मेदसा युक्ता बलवंतः स्याम । भवेम । किं बहूक्त्या । यथा यद्वयमुश्मसि कामयामहे तत्सर्वं कृधि । कुरु ॥

यो नो दास आर्यो वा पुरुष्टुतादेव इंद्र युधये चिकेतति ।
अस्माभिष्टे सुषहाः संतु शत्रवस्त्वया वयं तान्वनुयाम संगमे ॥३॥
यः । नः । दासः । आर्यः । वा । पुरुऽस्तुत । अदेवः । इंद्र । युधये । चिकेतति ।
अस्माभिः । ते । सुऽसहाः । संतु । शत्रवः । त्वया । वयं । तान् । वनुयाम । संऽगमे ॥३॥

हे पुरुष्टुत बहुस्तुतेंद्र यो दासः कर्मकरः शूद्र आर्यस्त्रैवर्णिकोऽदेवो देवादन्योऽसुरो वा नोऽस्मान्युधये युद्धाय चिकेतति जानाति ते सर्वे शत्रवोऽस्मदरयस्ते तव प्रसादादस्माभिः सुसहाः स्वभिभवाः संतु । भवंतु । किंच वयं त्वया सहायेन ताञ्छत्रून्संगमे संग्रामे वनुयाम । हन्याम ॥

यो दभ्रेभिर्हव्यो यश्च भूरिभिर्यो अभीके वरिवोविन्नृषाह्ये ।
तं विखादे सस्निमद्य श्रुतं नरमर्वाचमिंद्रमवसे करामहे ॥४॥
यः । दभ्रेभिः । हव्यः । यः । च । भूरिऽभिः । यः । अभीके । वरिवःऽवित् । नृऽसह्ये ।
तं । विऽखादे । सस्निं । अद्य । श्रुतं । नरं । अर्वाचं । इंद्रं । अवसे । करामहे ॥४॥

नृसह्ये नृणामभिभावुके विखादे विशेषेण भक्षकेऽभीके संग्रामे वरिवोविद्धनस्य लंभको य इंद्रो दभ्रेभिः स्वल्पैर्हव्यो ह्वातव्यो यश्च भूरिभिर्बहुभिर्ह्वय्यः तं सस्निं शुचिं श्रुतं सर्वत्र विख्यातं नरं नेतारमिंद्रमद्यास्मिन्नहन्यवसेऽस्मद्रक्षणायार्वाचमस्मदभिमुखं करामहे । कुर्मः ॥

स्ववृजं हि त्वामहमिंद्र शुश्रवानानुदं वृषभ रध्रचोदनं।
प्र मुंचस्व परि कुत्सादिहा गहि किमु त्वावान्मुष्कयोर्बद्ध आसते ॥५॥
स्वऽवृजं। हि। त्वां। अहं। इंद्र। शुश्रवं। अनानुऽदं। वृषभ। रध्रऽचोदनं।
प्र। मुंचस्व। परि। कुत्सात्। इह। आ। गहि। किं। ऊं इति। त्वाऽवान्। मुष्कयोः।
बद्धः। आसते ॥५॥

हे वृषभ कामानां वर्षकेंद्र स्ववृजं स्वयमेव छेत्तारमननुदमनपेक्षितबलानुप्रदानं रध्रचोदनं राधकस्य चोदकं प्रेरकं त्वामहं लुशः शुश्रव अश्रौषं हि यस्मात् तस्मात्प्र मुंचस्व। कुत्सेन वार्ध्रीशतेनांडयोर्बद्धमात्मानं बंधनाद्विमुंच। अथ परि सर्वतः परिवृतस्त्वं कुत्सात्कुत्साख्यादृषेरिहास्मद्याग आ गहि। आगच्छ। किमु त्वावांस्त्वत्सदृशोऽन्यः कश्चिन्मुष्कयोर्बद्ध आसते। न कोऽप्येतादृशो निर्लज्जस्त्वत्तोऽन्योऽस्तीत्यभिप्रायः। तत्र शाट्यायनकं। कुत्सश्च लुशश्चेंद्रं व्यह्वयेतां स कुत्सस्याह्वमागच्छत् तं शतेन वार्ध्रीभिरांडयोरबध्नात् तं लुशो ऽभ्यवदत् स्ववृजं हि त्वामहमिंद्र शुश्रवानानुदं वृषभ रध्रचोदनं प्र मुंचस्व परि कुत्सादिहा गहि किमु त्वावान्मुष्कयोर्बद्ध आसत इति ताः सर्वाः संलुप्य लुशमभि प्रादुद्रवदिति। छंदोगब्राह्मणमपि। कुत्सश्च लुशश्च युगपदिंद्रमाहूतवंतौ स्वं स्वं यज्ञं प्रत्यंगभावाय सखित्वादिंद्रः कुत्सं प्रति जगाम तं तु गतं वशित्वात्कुत्सो वार्ध्रीशतेनांडयोरबध्नादिति ॥ ॥१४॥

यो वामिति चतुर्दशर्चं दशमं सूक्तं। कक्षीवतो दुहिता घोषा नाम ब्रह्मवादिन्यृषिः। अंत्या त्रिष्टुप्। शिष्टा जगत्यः। अश्विनौ देवता। तथा चानुक्रांतं। यो वां षळूना काक्षीवती घोषाश्विनं हि त्रिष्टुबंतमिति॥ प्रातरनुवाकाश्विनशस्त्रयोर्जागते छंदसीदमादीनि त्रीणि सूक्तानि। सूचितं च। यो वां परिज्मेति त्रीणि त्रिश्विन्नो अद्य। आ० ४. १५. । इति ॥

यो वां परिज्मा सुवृदश्विना रथो दोषामुषासो हव्यो हविष्मता।
शश्वत्तमासस्तमु वामिदं वयं पितुर्न नाम सुहवं हवामहे ॥१॥
यः। वां। परिऽज्मा। सुऽवृत्। अश्विना। रथः। दोषां। उषसः। हव्यः। हविष्मता।
शश्वत्ऽतमासः। तं। ऊं इति। वां। इदं। वयं। पितुः। न। नाम। सुऽहवं। हवामहे ॥१॥

हे अश्विनाश्विनौ वां युवयोः परिज्मा परितो गंता सुवृत्सुष्ठु वर्तमानो यो रथो दोषां रात्रिमुषसश्च। अहोरात्रयोरित्यर्थः। हविष्मता यजमानेन हव्यो ह्वातव्यो वां युवयोः स्वभूतं सुहवं शोभनाह्वानं तमु तमेव रथं शश्वत्तमासोऽतिशयेन चिरंतना वयं पितुर्न यथा पितुरिदं नाम तथा हवामहे। ह्वयामः ॥

चोदयतं सूनृताः पिन्वतं धिय उत्पुरंधीरीरयतं तदुश्मसि।
यशसं भागं कृणुतं नो अश्विना सोमं न चारुं मघवत्सु नस्कृतं ॥२॥
चोदयतं। सूनृताः। पिन्वतं। धियः। उत्। पुरंऽधीः। ईरयतं। तत्। उश्मसि।
यशसं। भागं। कृणुतं। नः। अश्विना। सोमं। न। चारुं। मघवत्ऽसु। नः। कृतं ॥२॥

हे अश्विनाश्विनौ युवां सूनृता वाच उषसो वा चोदयतं। प्रेरयतं। अस्माकं धियः कर्माणि च पिन्वतं। पूरयतं। पुरंधीर्बह्वीः प्रज्ञाश्चोदीरयतं। उन्नमयतं। प्रेरयतं। उत्पादयतमित्यर्थः। तदेतत्त्वयमुश्मसि। वयं कामयामहे। किंच नोऽस्माकं यशसं यशस्विनं भागं भजनीयं धनादिकं कृणुतं। कुरुतं। चारुं कल्याणं सोमं न सोममिव नोऽस्मान्मघवत्सु धनवत्सु कृतं। कुरुतं ॥

अमाजुरश्चिद्भवथो युवं भगोऽनाशोश्चिदवितारापमस्य चित् ।
अंधस्य चिन्नासत्या कृशस्य चिद्युवामिदाहुर्भिषजा रुतस्य चित् ॥३॥

अमाऽजुरः । चित् । भवथः । युवं । भगः । अनाशोः । चित् । अवितारा । अपमस्य । चित् ।
अंधस्य । चित् । नासत्या । कृशस्य । चित् । युवां । इत् । आहुः । भिषजा । रुतस्य । चित् ॥३॥

हे नासत्या नासत्यौ युवं युवाममाजुरश्चित्पितृगृहे जूर्यत्या अपि दुर्भगाया घोषाया भगो भवथः । शोभनरूपेणात्मानं परिणमय्य पतिं दत्तवंतौ स्थ इत्यर्थः । तथा च निगमांतरं । घोषायै चित्पितृषदे दुरोणे पतिं जूर्यत्या अश्विनावदत्तं । ऋ॰ १. ११७. ७. । इति । अनाशोश्चिदनशनस्याप्यवितारा रक्षितारौ युवां भवथः । अपमस्य चिज्जात्यातिनिकृष्टस्यापि रक्षितारौ भवथः । अंधस्य चिच्चक्षुर्विकलस्यापि रक्षितारौ भवथः । कृशस्य चिद्दुर्बलस्यापि रक्षितारौ भवथः । किंच युवामिद्युवामेवर्तस्य चिद्यज्ञस्यापि भिषजौ वैद्यावाज्ञर्विद्वांसः ॥

युवं च्यवानं सनयं यथा रथं पुनर्युवानं चरथाय तक्षथुः ।
निष्टौग्र्यमूहथुरद्भ्यस्परि विश्वेत्ता वां सवनेषु प्रवाच्या ॥४॥

युवं । च्यवानं । सनयं । यथा । रथं । पुनः । युवानं । चरथाय । तक्षथुः ।
निः । तौग्र्यं । ऊहथुः । अत्ऽभ्यः । परि । विश्वा । इत् । ता । वां । सवनेषु । प्रऽवाच्या ॥४॥

हे अश्विनौ युवं युवां सनयं पुराणं च्यवानमृषिं यथा रथं जीर्णं रथमिव पुनर्युवानं तरुणं चरथाय चरणार्थं तक्षथुः । ततक्षथुः । अकुरुतमित्यर्थः । तथा च यास्कः । युवं च्यवानं सनयं पुराणं यथा रथं पुनर्युवानं चरणाय ततक्षथुर्युवा प्रयौति कर्माणि तक्षतिः करोतिकर्मा । नि॰ ४. १९. । इति । किंच युवां तौग्र्यं तुग्रपुत्रं भुज्युमद्भ्यः परि समुद्रस्योपरि निरूहथुः । किंच वां युवयोर्विश्वा विश्वानि ता तानि कर्माणि सवनेषु यज्ञेषु प्रवाच्या प्रवाच्यानि प्रकर्षेण वक्तव्यानि ॥

पुराणा वां वीर्याउ प्र ब्रवा जनेऽथो हासथुर्भिषजा मयोभुवा ।
ता वां नु नव्याववसे करामहेऽयं नासत्या श्रदरिर्यथा दधत् ॥५॥

पुराणा । वां । वीर्या । प्र । ब्रव । जने । अथो इति । ह । आसथुः । भिषजा । मयःऽभुवा ।
ता । वां । नु । नव्यौ । अवसे । करामहे । अयं । नासत्या । श्रत् । अरिः । यथा । दधत् ॥५॥

हे अश्विनौ वां युवयोः पुराणा पुराणानि वीर्याणि जने लोके प्र ब्रव । प्रब्रवीमि । अथो अपि च हे नासत्या नासत्यौ युवां मयोभुवा सुखस्य भावयितारौ भिषजा भिषजौ वैद्यावासथुः । बभूवथुः । ता तौ युवामवसे रक्षणाय नव्यौ स्तुत्यौ करामहे । कुर्मः । अयमरिर्गंता पतिर्यजमानो यथा श्रद्धधत् । श्रद्दध्यादिति ॥ ॥१५॥

इयं वामह्वे शृणुतं मे अश्विना पुत्रायेव पितरा मह्यं शिक्षतं ।
अनापिरज्ञा असजात्यामतिः पुरा तस्या अभिशस्तेरव स्पृतं ॥६॥

इयं । वां । अह्वे । शृणुतं । मे । अश्विना । पुत्रायऽइव । पितरा । मह्यं । शिक्षतं ।
अनापिः । अज्ञाः । असजात्या । अमतिः । पुरा । तस्याः । अभिऽशस्तेः । अव । स्पृतं ॥६॥

हे अश्विनाश्विनौ वां युवामियं घोषाहमह्वे। आह्वयामि। मे मम संबंधिनमिममाह्वानं शृणुतं। श्रुत्वा चाह्वानं मह्यं पुत्रायेव यथा पुत्राय पितरा मातापितरौ तद्वच्छिक्षतं। धनं दत्तं। अनापिरबंधुरज्ञा अज्ञातज्ञासजात्यामतिरश्रद्धेया चाभिशस्तिर्मामागच्छति। तस्या अभिशस्तेः पुरा प्रागेवाव स्पृतं। मामवपारयतं॥

युवं रथे॑न विम॒दाय॑ शुं॒ध्युवं॒ न्यू॑हथुः पुरुमि॒त्रस्य॒ योष॑णां।
युवं हवं॑ वध्रिम॒त्या अ॑गच्छतं युवं सुषु॑तिं चक्रथुः पुरं॑धये ॥७॥
युवं। रथे॑न। वि॒ऽम॒दाय॑। शुं॒ध्युव॑। नि। ऊ॒ह॒थुः॒। पु॒रु॒ऽमि॒त्रस्य॑। योष॑णां।
युवं। हवं॑। व॒ध्रि॒ऽम॒त्याः। अ॒ग॒च्छ॒तं॒। युवं। सु॒ऽसु॑तिं। च॒क्र॒थुः॒। पुरं॑ऽधये ॥७॥

हे अश्विनौ युवं युवां पुरुमित्रस्य पुरुमित्रनामधेयस्य योषणां दुहितरं शुंध्युवं नाम जायां विमदाय विमदनामधेयायर्षये रथेन स्वसेनापरिवृतेन रथेन न्यूहथुः। प्रापयतं। विमदस्य गृहं नीतवंतौ स्थ इत्यर्थः। तथा च निगमांतरं। यावर्भगाय विमदाय जायां सेनाजुवा न्यूहतू रथेन। ऋ० १. ११६. १.। इति। किंच युवं युवां वध्रिमत्याः संग्रामे शत्रुभिश्छिन्नहस्ताया हवमाह्वानमगच्छतं। आगत्य च तस्यै हिरण्मयं हस्तं प्रायच्छतं। तथा च निगमांतरं। अजोहवीन्नासत्या करा वां महे यामन्पुरुभुजा पुरंधिः श्रुतं तच्छासुरिव वध्रिमत्या हिरण्यहस्तमश्विनावदत्तं। ऋ० १. ११६. १३.। इति। किंच युवं युवां पुरंधये बहुप्रज्ञायै वध्रिमत्यै सुषुतिं सुप्रसवं शोभनमैश्वर्यं वा चक्रथुः। कृतवंतौ स्थः॥

युवं विप्र॑स्य जर॒णामु॑पे॒युषः॒ पुनः॑ क॒लेर॑कृणुतं॒ युव॒द्वयः॑।
युवं वंद॑नमृश्य॒दादुद॑पथु॒र्युवं स॒द्यो वि॒श्पला॒मेत॑वे कृथः ॥८॥
युवं। विप्र॑स्य। ज॒र॒णां। उ॒प॒ऽई॒युषः॑। पुन॒रिति॑। क॒लेः। अ॒कृ॒णु॒त॒म्। युव॑त्। वयः॑।
युवं। वंद॑नं। ऋ॒श्य॒ऽदात्। उत्। ऊ॒प॒थुः॒। युवं। स॒द्यः। वि॒श्पलां॑। एत॑वे। कृ॒थः॒ ॥८॥

हे अश्विनौ युवं युवां विप्रस्य मेधाविनो जरणां जरामुपेयुष उपगतवतः कलेः कलिनामधेयस्यर्षेर्वयः पुनरपि युवद्युवत्वयुक्तमकृणुतं। अकुरुतं। तथा च निगमांतरं। कलिं याभिर्वित्तजानिं दुवस्यथः। ऋ० १. ११२. १५.। इति। किंच युवं युवां वंदनं जायावियोगसंतापेन कूपपतितं वंदनाख्यमृषिमृश्यदात्कूपादुदूपथुः। उदैरयतं। तथा निगमांतरं। उद्वंदनमैरयतं स्वर्दृशे। ऋ० १. ११२. ५.। इति। किंच युवं युवां विश्पलां। खेलस्य राज्ञः सेनायां योद्ध्री विश्पला नाम काचित् स्त्री। तां संग्रामे शत्रुभिश्छिन्नजंघां सद्यस्तदैवैतवे गमनाय कृथः। अकुरुतं। तथा च निगमांतरं। चरित्रं हि वेरिवाच्छेदि पर्णमाजा खेलस्य परितक्म्यायां। सद्यो जंघामायसीं विश्पलायै धने हिते सर्तवे प्रत्यधत्तं। ऋ० १. ११६. १५.। इति॥

युवं ह॑ रे॒भं वृ॑षणा॒ गुहा॑ हि॒तमुदै॑रयतं ममृ॒वांस॑मश्विना।
युवमृ॒बीस॑मु॒त त॒प्तमत्र॑य॒ ओम॑न्वंतं चक्रथुः स॒प्तव॑ध्रये ॥९॥
युवं। ह॒। रे॒भं। वृ॒ष॒णा॒। गुहा॑। हि॒तं। उत्। ऐ॒र॒य॒त॒म्। म॒मृ॒ऽवांस॑। अ॒श्वि॒ना॒।
युवं। ऋ॒बीस॑। उ॒त। त॒प्तं। अत्र॑ये। ओम॑न्ऽवंतं। च॒क्र॒थुः॒। स॒प्तऽव॑ध्रये ॥९॥

हे वृषणा वर्षितारावश्विनाश्विनौ युवं युवां गुहा गुहायां हितमसुरैर्निहितं ममृवांसं म्रियमाणं रेभं रेभाख्यमृषिमुदैरयतं। उत्तारितवंतौ स्थः। तथा च निगमांतरं। दश रात्रीरशिवेना नव द्यूनवनद्धं श्नथितमप्स्वंतः। विप्रुतं रेभमुदनि प्रवृक्तमुन्निन्यथुः सोममिव स्रुवेण। ऋ० १. ११६. २४.। इति। उत किंच युवं युवां तप्तमृबीसमग्निकुंडमत्रयेऽत्रेरर्थायोमन्वंतमवनवंतं चक्रथुः। वृष्ट्या निशमय्य शीतं कृतवंतौ स्थ इत्यर्थः। तथा च निगमांतरं। हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तं। ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः

सर्वगणं स्वस्ति । ऋ॰ १. ११६. ८. । इति । किंच युवां सप्तवध्रयेऽश्वमेधेन राज्ञा केनचिदपराधेन काष्ठमयमंजूषायां निहितस्य सप्तवध्रिनामधेयस्यर्षेरर्थाय चक्रथुः । मंजूषोद्घाटनं कृतवंतौ स्थ इत्यर्थः । तथा च निगमांतरं । वि जिहीष्व वनस्पते योनिः सूष्यंत्या इव । श्रुतं मे अश्विना हवं सप्तवध्रिं च मुंचतं । ऋ॰ ५. ७८. ५. । इति ॥

युवं श्वेतं पेदवेऽश्विनाश्वं नवभिर्वाजैर्नवती चं वाजिनं ।
चर्कृत्यं ददथुर्द्रावयत्सखं भगं न नृभ्यो हव्यं मयोभुवं ॥१०॥
युवं । श्वेतं । पेदवे । अश्विना । अश्वं । नवऽभिः । वाजैः । नवती । च । वाजिनं ।
चर्कृत्यं । ददथुः । द्रवयत्ऽसखं । भगं । न । नृऽभ्यः । हव्यं । मयःऽभुवं ॥१०॥

हे अश्विनाश्विनौ युवं युवां पेदवे पेदुनामधेयाय राज्ञे श्वेतं श्वेतवर्णं वाजिनं बलिनं नवभिर्नवती नवत्याश्वैः सहितं चर्कृत्यं संग्रामाणामत्यर्थं कर्तारं शत्रूणां जेतारं वा द्रवयत्सखं शत्रुसखीनां द्रावयितारं हव्यं ह्वातव्यं मयोभुवं सुखस्य भावयितारमश्वं नृभ्यो मनुष्येभ्यो भगं न भजनीयं धनमिव ददथुः । प्रायच्छतं ॥ ॥१६॥

न तं राजानावदिते कुतश्चन नांहो अश्नोति दुरितं नकिर्भयं ।
यमश्विना सुहवा रुद्रवर्तनी पुरोरथं कृणुथः पत्न्या सह ॥११॥
न । तं । राजानौ । अदिते । कुतः । चन । न । अंहः । अश्नोति । दुःऽइतं । नकिः । भयं ।
यं । अश्विना । सुऽहवा । रुद्रवर्तनी इति रुद्रऽवर्तनी । पुरःऽरथं । कृणुथः । पत्न्या ।
सह ॥११॥

हे राजानावीश्वरावदिते अदीनौ सुहवौ स्वाह्वानौ रुद्रवर्तनी स्तोत्रयुक्तमार्गौ हे अश्विनाश्विनौ युवां यं जनं पुरोरथमग्रतोरथं पत्न्या सह स्वयंवरे कृणुथः कुरुथः तं जनं कुतश्चन कुतोऽप्यंहः पापं नाश्नोति । न व्याप्नोति । दुरितं दुर्गतिरपि नाश्नोति । नकिर्न च भयं संसारभयं न प्राप्नोति ॥

आ तेन यातं मनसो जवीयसा रथं यं वामृभवश्चक्रुरश्विना ।
यस्य योगे दुहिता जायते दिव उभे अहनी सुदिने विवस्वतः ॥१२॥
आ । तेन । यातं । मनसः । जवीयसा । रथं । यं । वां । ऋभवः । चक्रुः । अश्विना ।
यस्य । योगे । दुहिता । जायते । दिवः । उभे इति । अहनी इति । सुदिने इति सुऽदिने ।
विवस्वतः ॥१२॥

हे अश्विनाश्विनौ वां युवयोर्यं रथमृभवश्चक्रुः अकार्षुः यस्य रथस्य योगे संबंधे सति दिवो दुहितोषा जायते प्रादुर्भवति यस्य च योगे विवस्वतो भास्करादुभे अहनी अहोरात्रे सुदिने शोभने जायेते तेन रथेन मनसोऽपि जवीयसा वेगवत्तरेण यातं । युवामागच्छतं ॥

ता वर्तिर्यातं जयुषा वि पर्वतमपिन्वतं शयवे धेनुमश्विना ।
वृकस्य चिद्वर्तिकामंतरास्याद्युवं शचीभिर्ग्रसितामसुंचतं ॥१३॥

ता। वर्तिः। यातं। जयुषा। वि। पर्वतं। अपिन्वतं। शयवे। धेनुं। अश्विना।
वृकस्य। चित्। वर्तिकां। अंतः। आस्यात्। युवं। शचीभिः। ग्रसितां। अमुंचतं॥१३॥

हे अश्विनाश्विनौ ता तौ युवां जयुषा जयशीलेन रथेन पर्वतमद्रिं प्रति वर्तिर्मार्गं वि यातं। विविधं गच्छथः। तथा च निगमांतरं। वि जयुषा रथ्या यातमद्रिं श्रुतं हवं वृषणा वध्रिमत्याः। ऋ० ६. ६२. ७.। इति। किंच युवां शयवे शयोरर्थाय धेनुमपिन्वतं। निवृत्तप्रसवां वृद्धां गां प्रभूतस्य पयसो दोग्ध्रीं कृतवंतौ स्थ इत्यर्थः। तथा च निगमांतरं। युवं धेनुं शयवे नाधितायापिन्वतमश्विना पूर्व्याय। ऋ० १. ११८. ८.। इति। किंच युवं युवां वृकस्यांतरनुप्रविष्टां ग्रसितां वृकेण ग्रस्तां वर्तिकां। वर्तिका नाम चटका। तामास्याद्वृकस्य मुखाच्छचीभिः प्रज्ञाभिः कर्मभिर्वामुंचतं। अमोचयतं। तथा च निगमांतरं। अजोहवीदश्विना वर्तिका वामास्नो यत्सीममुंचतं वृकस्य। ऋ० १. ११७. १६.। इति॥

एतं वां स्तोममश्विनावकर्मातक्षाम भृगवो न रथं।
न्यमृक्षाम योषणां न मर्ये नित्यं न सूनुं तनयं दधानाः॥१४॥
एतं। वां। स्तोमं। अश्विनौ। अकर्म। अतक्षाम। भृगवः। न। रथं।
नि। अमृक्षाम। योषणां। न। मर्ये। नित्यं। न। सूनुं। तनयं। दधानाः॥१४॥

हे अश्विनाश्विनौ ततो वां युवयोरेतं यथोक्तं स्तोमं स्तोत्रमकर्म। अकुर्म। तदेवाह। भृगवो न भृगव इव रथमतक्षाम। वयं स्तोत्रं संस्कृतवंतः। कर्मयोगादृभवो भृगव उच्यंते। अथवा रथकारा भृगवः। किंच वयं नित्यं शाश्वतं तनयं यागादीनां कर्मणां तनितारं सूनुं नौरसं पुत्रमिव स्तोमं दधाना धारयंतो मर्ये मनुष्ये न्यमृक्षाम। युवयोः स्तुतिं नितरां संस्कृतवंतः। तत्र दृष्टांतः। योषणां न। यथा जायां तद्वदित्यर्थः॥ ॥१७॥

रथं यांतमिति चतुर्दशर्चमेकादशं सूक्तं। काक्षीवत्या घोषाया आर्षं। जागतमाश्विनं। रथं यांतमित्यनुक्रांतं॥ प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः॥

रथं यांतं कुह को ह वां नरा प्रति द्युमंतं सुविताय भूषति।
प्रातर्यावाणं विभ्वं विशेविशे वस्तोर्वस्तोर्वहमानं धिया शमि॥१॥
रथं। यांतं। कुह। कः। ह। वां। नरा। प्रति। द्युऽमंतं। सुविताय। भूषति।
प्रातःऽयावानं। विऽभ्वं। विशेऽविशे। वस्तोःऽवस्तोः। वहमानं। धिया। शमि॥१॥

हे नरा कर्मणां नेताराविश्विनौ वां युवयोः संबंधिनं द्युमंतं दीप्तिमंतं प्रातर्यावाणं यज्ञं प्रति प्रातःकाले गंतारं विभ्वं विभुं व्यापिनं विशे विशे सर्वेषु मनुष्येषु वस्तोर्वस्तोरन्वहं वहमानं धनं प्रापयंतं यांतं गच्छंतं रथं कुह कस्मिन्देशे को ह कः खलु यजमानः शमि यज्ञरूपे कर्मणि धिया स्तुतिरूपेण कर्मणा सुवितायाभ्युदयार्थं प्रति भूषति। अलंकरोति। कस्मिन्देशे यज्ञे कोऽन्यो यजमानो युवां स्तुतिभिर्हविर्भिश्च पूजितवान् येनास्मद्यज्ञं प्रति विलंबेनागतवंतौ स्थ इत्यभिप्रायः॥

कुह स्विद्दोषा कुह वस्तोरश्विना कुहाभिपित्वं करतः कुहोषतुः।
को वां शयुत्रा विधवेव देवरं मर्यं न योषा कृणुते सधस्थ आ॥२॥
कुह। स्वित्। दोषा। कुह। वस्तोः। अश्विना। कुह। अभिऽपित्वं। करतः। कुह। ऊषतुः।
कः। वां। शयुऽत्रा। विधवाऽइव। देवरं। मर्यं। न। योषा। कृणुते। सधऽस्थे। आ॥२॥

हे अश्विनाश्विनौ कुह स्वित् क्व चिद्दोषा रात्रौ भवथ इति शेषः। कुह वस्तोः क्व वा दिवा भवथः। कुह क्व वाभिपित्वमभिप्राप्तिं करतः। कुरुथः। कुह क्व योषथुः। वसथः। किंच वां युवां को यजमानः सधस्थे सहस्थाने वेद्याख्य आ कृणुते। आकुरुते। परिचरणार्थमात्माभिमुखीकरोति। तत्र दृष्टांतौ दर्शयति। शयुत्रा शयने विधवेव यथा मृतभर्तृका नारी देवरं भर्तृभ्रातरमभिमुखीकरोति। मर्यं न यथा च सर्वं मनुष्यं योषा सर्वा नारी संभोगकालेऽभिमुखीकरोति तद्वदित्यर्थः। तथा च यास्कः। क्व स्विद्रात्रौ भवथः क्व दिवा क्वाभिप्राप्तिं कुरुथः क्व वसथः को वां शयने विधवेव देवरं देवरः कस्माद्द्वितीयो वर उच्यते विधवा विधातृका भवति विधवनाद्वा विधावनाद्वेति चर्मशिरा अपि वा धव इति मनुष्यनाम तद्वियोगाद्विधवा देवरो दीव्यतिकर्मा मर्यो मनुष्यो मरणधर्मा योषा यौतेराकुरुते सधस्थाने। नि० ३.१५.। इति ॥

प्रातर्जरेथे जरणेव कापया वस्तोर्वस्तोर्यजता गच्छथो गृहं।
कस्य ध्वस्रा भवथः कस्य वा नरा राजपुत्रेव सवनाव गच्छथः ॥३॥
प्रातः। जरेथे इति। जरणाऽइव। कापया। वस्तोःऽवस्तोः। यजता। गच्छथः। गृहं।
कस्य। ध्वस्रा। भवथः। कस्य। वा। नरा। राजपुत्राऽइव। सवना। अव। गच्छथः ॥३॥

हे नरा नेतारावश्विनौ युवां प्रातः प्रातःकाले जरेथे। स्तोतृभिः स्तूयेथे। तत्र दृष्टांतः। जरणेव यथा जरणावैश्वर्येण वृद्धौ राजानौ कापया। प्रातःप्रबोधकस्य वंदिनो वाणी कापा। तया स्तूयेते। तद्वदित्यर्थः। किंच वस्तोर्वस्तोरन्वहं यजता यष्टव्यौ युवां गृहं यजमानस्य मंदिरं गच्छथः। प्राप्नुथः। तौ युवां कस्य यजमानसंबंधिनो दोषस्य ध्वस्रा ध्वंसकौ विनाशयितारौ भवथः। कस्य यजमानस्य सवना सवनानि राजपुत्रेव राजकुमाराविव युवामव गच्छथः। प्राप्नुथः ॥

युवां मृगेव वारणा मृगण्यवो दोषा वस्तोर्हविषा नि ह्वयामहे।
युवं होत्रामृतुथा जुह्वते नरेषं जनाय वहथः शुभस्पती ॥४॥
युवां। मृगाऽइव। वारणा। मृगण्यवः। दोषा। वस्तोः। हविषा। नि। ह्वयामहे।
युवं। होत्रां। ऋतुऽथा। जुह्वते। नरा। इषं। जनाय। वहथः। शुभः। पती इति ॥४॥

हे अश्विनौ युवां वारणा वारणौ मृगेव यथा शार्दूलौ मृगण्यवो मृगयवः तद्वद्वयं दोषा रात्रौ वस्तोरहनि च हविषा नि ह्वयामहे। नियमेन ह्वयामः। किंच हे नरा नेतारावश्विनौ युवं युवामृतुथा काले काले होत्रामाहुतिं जुह्वते। जुह्वति। यजमाना इति शेषः। किंच युवां शुभः शुभस्य वृष्ट्युदकस्य पती स्वामिनौ संतौ जनाय जनार्थमिषमन्नं वहथः। प्रापयथः ॥

युवां ह घोषा पर्यश्विना यती राज्ञ ऊचे दुहिता पृच्छे वां नरा।
भूतं मे अह्न उत भूतमक्तवेऽश्वावते रथिने शक्तमर्वते ॥५॥
युवां। ह। घोषा। परि। अश्विना। यती। राज्ञः। ऊचे। दुहिता। पृच्छे। वां। नरा।
भूतं। मे। अह्ने। उत। भूतं। अक्तवे। अश्वंऽवते। रथिने। शक्तं। अर्वते ॥५॥

हे नरा नेतारावश्विनौ युवां खलु परि परितो यती गच्छंती राज्ञो दीप्तस्य कक्षीवतो दुहिता पुत्री घोषा घोषाख्याहमूचे। संनिहितेभ्यो वृद्धेभ्य उक्तवत्यस्मि। किंच वां युवां पृच्छे। वृद्धान्संनिहितान् कीदृशावश्विनाविति पृच्छामि। तथा सति मे ममाह्ने दिवसाय दिवसनिर्वर्त्यकर्मणे भूतं। भवतं। उतापि चाक्तवे रात्र्यै रात्रिनिर्वर्त्यकर्मणे भूतं। भवतं। तथाश्ववतेऽश्वयुक्ताय रथिने रथवते चार्वते भ्रातृव्याय शक्तं। निरसने शक्तौ भवतं ॥ ॥१८॥

युवं कवी ष्ठः पर्यश्विना रथं विशो न कुत्सो जरितुर्नशायथः ।
युवोर्ह मक्षा पर्यश्विना मध्वासा भरत निष्कृतं न योषणा ॥ ६ ॥
युवं । कवी इति । स्थः । परि । अश्विना । रथं । विशः । न । कुत्सः । जरितुः । नशायथः ।
युवोः । ह । मक्षा । परि । अश्विना । मधु । आसा । भरत । निःऽकृतं । न । योषणा ॥ ६ ॥

हे अश्विनाश्विनौ कवी मेधाविनौ युवं युवां रथं परि ष्ठः । परितो भवथः । अथ जरितुः स्तोतुर्यज्ञं प्रति गमनाय नशायथः । रथं प्राप्नुथः । तत्र दृष्टांतः । कुत्सो न यथा कुत्सश्चेंद्रश्च सरथमधितिष्ठतः । तथा च मंत्रांतरं । यासि कुत्सेन सरथमवस्युस्तोदो वातस्य हर्योरीशानः । ऋ० ४. १६. ११. । इति । किंच हे अश्विनाश्विनौ युवोर्ह युवयोः खलु स्वभूतं मधु मक्षा मक्षिकासास्येन परि भरत । बिभर्ति । तत्र दृष्टांतः । निष्कृतं न यथा निष्कृतं संस्कृतं मधु योषणा नारी । तद्वदित्यर्थः । तथा च मंत्रांतरं । उत स्या वां मधुमन्मक्षिकारपन्मदे सोमस्यौशिजो हुवन्यति । ऋ० १. ११९. ९. । इति ॥

युवं ह भुज्युं युवमश्विना वशं युवं शिंजारमुशनामुपारथुः ।
युवो ररावा परि सख्यमासते युवोरहमवसा सुम्नमा चके ॥ ७ ॥
युवं । ह । भुज्युं । युवं । अश्विना । वशं । युवं । शिंजारं । उशनां । उप । आरथुः ।
युवोः । ररावा । परि । सख्यं । आसते । युवोः । अहं । अवसा । सुम्नं । आ । चके ॥ ७ ॥

हे अश्विनाश्विनौ युवं ह युवां खलु भुज्युं समुद्रमध्ये विपन्ननावं तुग्रपुत्रं भुज्युमुपारथुः । उत्तारयितुमुपगतवंतौ भवथः । किंच युवं युवां वशं हस्तिबलेन शत्रुभिः पराजयमानं वशनामधेयं राजानं रक्षणायोपारथुः । किंच युवं युवां शिंजारमत्रिमग्निकूटादुत्तारयितुमुशनां कमनीयां स्तुतिं च श्रोतुमुपारथुः । तथा च मंत्रांतरं । अत्रिं शिंजारमश्विना । ऋ० ८. ५. २५. । इति । किंच युवोर्युवयोः सख्यं मित्रत्वं ररावा हविषां प्रदाता यजमानो पर्यासते । पर्यास्ते ॥ वचनव्यत्ययः ॥ किंच युवोर्युवयोरवसा रक्षणेनाहं घोषा सुम्नं सुखमा चके । कामये ॥

युवं ह कृशं युवमश्विना शयुं युवं विधंतं विधवामुरुष्यथः ।
युवं सनिभ्यः स्तनयंतमश्विनाप व्रजमूर्णुथः सप्तास्यं ॥ ८ ॥
युवं । ह । कृशं । युवं । अश्विना । शयुं । युवं । विधंतं । विधवां । उरुष्यथः ।
युवं । सनिऽभ्यः । स्तनयंतं । अश्विना । अप । व्रजं । ऊर्णुथः । सप्तऽआस्यं ॥ ८ ॥

हे अश्विनाश्विनौ युवं ह युवां खलु कृशं दुर्बलं कृशनामधेयं चोरुष्यथः । रक्षथः । किंच युवं युवां शयुं शयुनामानमृषिमुरुष्यथः । किंच युवं युवां विधंतं परिचरंतं मनुष्यं विधवां चापतिकां वध्रिमतीं योद्ध्रीं स्त्रियं चोरुष्यथः । किंच हे अश्विनाश्विनौ युवं युवां स्तनयंतं शब्दं कुर्वंतं सप्तास्यं सर्पणशीलद्वारं व्रजं मेघं । व्रजश्चरुरिति मेघनामसु पाठात् । सनिभ्यो हविषां दातृभ्योऽपोर्णुथः । विवृतद्वारं कृतवंतौ स्थ इत्यर्थः ॥

जनिष्ट योषा पतयत्कनीनको वि चारुहन्वीरुधो दंसना अनु ।
आस्मै रीयंते निवनेव सिंधवोऽस्मा अह्ने भवति तत्पतित्वनं ॥ ९ ॥
जनिष्ट । योषा । पतयत् । कनीनकः । वि । च । अरुहन् । वीरुधः । दंसनाः । अनु ।
आ । अस्मै । रीयंते । निवनाऽइव । सिंधवः । अस्मै । अह्ने । भवति । तत् । पतिऽत्वनं ॥ ९ ॥

हे अश्विनौ युवयोः प्रसादादियं घोषा योषा स्त्रीगुणोपेता सुभगा जनिष्ट। जाता। अस्याः समीपे कनीनकः कन्याकामः पतिः पतयत्। पततु। अस्मै कनीनकाय युवयोर्दंसना अनु वृष्टिलक्षणानि कर्माणि लक्षीकृत्य वीरुध ओषधयो वि यावहन्। विरोहंतु। प्रादुर्भवंतु। अस्मै कनीनकाय निवनेव प्रवणेनेव सिंधव उदकान्या रीयंते। ता वीरुधोऽभिगच्छंतु। किंचाह्ने केनाप्यहंतव्यायास्मै कनीनकाय तत्संभोगसमर्थं पतित्वनं यौवनं भवति। भवतु॥

जीवं रुदंति वि मयंते अध्वरे दीर्घामनु प्रसितिं दीधियुर्नरः।
वामं पितृभ्यो य इदं समेरिरे मयः पतिभ्यो जनयः परिष्वजे॥१०॥
जीवं। रुदंति। वि। मयंते। अध्वरे। दीर्घां। अनु। प्रऽसितिं। दीधियुः। नरः।
वामं। पितृऽभ्यः। ये। इदं। संऽएरिरे। मयः। पतिऽभ्यः। जनयः। परिऽस्वजे॥१०॥

हे अश्विनौ युवयोरनुग्रहाद्ये नरः पतयो जायानां जीवं जीवनमुद्दिश्य रुदंति। रोदनेनापि जायानां जीवनमेवाशासत इत्यर्थः। ता जाया अध्वरे यज्ञे वि मयंते निवेशयंति च किंच तासु दीर्घां महतीं प्रसितिं भुजयोः प्रबंधनमनु दीधियुः अनुदधति इदं वामं वननीयमपत्यं पितृभ्यः समेरिरे संप्रेरयंति च तेभ्यः पतिभ्यो जनयो जायाः परिष्वजे परिष्वंगार्थं मयः सुखं कुर्वंतीति शेषः॥ ॥१९॥

न तस्य विद्म तदु षु प्र वोचत युवा ह यद्युवत्याः क्षेति योनिषु।
प्रियोस्रियस्य वृषभस्य रेतिनो गृहं गमेमाश्विना तदुश्मसि॥११॥
न। तस्य। विद्म। तत्। ऊं इति। सु। प्र। वोचत। युवा। ह। यत्। युवत्याः।
क्षेति। योनिषु।
प्रियऽउस्रियस्य। वृषभस्य। रेतिनः। गृहं। गमेम। अश्विना। तत्। उश्मसि॥११॥

हे अश्विनाश्विनौ तस्य तत्सुखं वयं न विद्म। न जानीमः। तत्सुखं यूयं सु सुष्ठु प्र वोचत। बहुवचनं पूजार्थं। युवा ह तरुणः खलु मत्पतिर्युवत्या यौवनान्विताया मम योनिषु गृहेषु यत्क्षेति निवसतीति। किंच प्रियोस्रियस्य प्रिययुवतेर्वृषभस्य सेक्तू रेतिनो रेतस्विनो मत्पतेर्गृहं गमेम। गच्छेम। वयं तद्गृहमुश्मसि। कामयामहे॥

आ वामगन्त्सुमतिर्वाजिनीवसू न्यश्विना हृत्सु कामा अयंसत।
अभूतं गोपा मिथुना शुभस्पती प्रिया अर्यम्णो दुर्याँ अशीमहि॥१२॥
आ। वां। अगन्। सुऽमतिः। वाजिनीवसू इति वाजिनीऽवसू। नि। अश्विना।
हृत्ऽसु। कामाः। अयंसत।
अभूतं। गोपा। मिथुना। शुभः। पती इति। प्रियाः। अर्यम्णः। दुर्यान्। अशीमहि॥१२॥

हे वाजिनीवसू अन्नधनौ शुभस्पती उदकस्य स्वामिनौ हे अश्विनाश्विनौ मिथुना मिथुनौ परस्परं सहितौ वां युवां सुमतिरागन्। आगच्छतु। हृत्स्वस्मदीयेषु हृदयेषु कामा अभिलाषा न्ययंसत। नियम्यंतां। किंच युवां गोपा मम गोपायितारावभूतं। भवतं। अपि च प्रियाः सत्यो वयमर्यम्णः पत्युर्दुर्यान्गृहानशीमहि। प्राप्नुयाम॥

ता मंदसाना मनुषो दुरोण आ धत्तं रयिं सहवीरं वचस्यवे ।
कृतं तीर्थं सुप्रपाणं शुभस्पती स्थाणुं पथेष्ठामप दुर्मतिं हतं ॥१३॥
ता । मंदसाना । मनुषः । दुरोणे । आ । धत्तं । रयिं । सहऽवीरं । वचस्यवे ।
कृतं । तीर्थं । सुऽप्रपानं । शुभः । पती इति । स्थाणुं । पथेऽस्थां । अप । दुःऽमतिं । हतं ॥१३॥

हे अश्विनौ मंदसाना मंदसानौ ता तौ युवां मनुषो मनुष्यस्य मत्पतेर्दुरोणे गृहे वचस्यवे युष्मत्स्तुतिकामाये मह्यं सहवीरं पुत्रादिसहितं रयिं धनमा धत्तं । स्थापयतं । किंच हे अश्विनौ शुभस्पती उदकस्य स्वामिनौ युवां पतिगृहं गच्छंत्या मम तीर्थं पानाय सुप्रपाणं कृतं । कुरुतं । किंच युवां पथेष्ठां मार्गस्थं स्थाणुं वृक्षं दुर्मतिं दुर्बुद्धिं परिपंथिनं चाप हतं । अपगमयतं ॥

क्व स्विदद्य कतमास्वश्विना विक्षु दस्रा मादयेते शुभस्पती ।
क ईं नि येमे कतमस्य जग्मतुर्विप्रस्य वा यजमानस्य वा गृहं ॥१४॥
क्व । स्वित् । अद्य । कतमासु । अश्विना । विक्षु । दस्रा । मादयेते इति । शुभः । पती इति ।
कः । ईं । नि । येमे । कतमस्य । जग्मतुः । विप्रस्य । वा । यजमानस्य । वा । गृहं ॥१४॥

हे अश्विनाश्विनौ दस्रा दर्शनीयौ शुभस्पती उदकस्य पती स्वामिनौ भवंतौ क्व स्वित्क्व स्थितौ जनपदेऽद्यास्मिन्नहनि कतमासु कासु विक्षु प्रजासु मादयेते । आत्मानं तर्पयतः । किंच को यजमान ईमेतौ नि येमे । नियच्छति । किंच भवंतौ कतमस्य विप्रस्य मेधाविनः स्तोतुर्यजमानस्य गृहं वा जग्मतुः । गतवंतौ ॥ ॥२०॥

समानमिति तृचं द्वादशं सूक्तं घोषायाः पुत्रस्य सुहस्त्यस्यार्षं जागतमाश्विनं । अनुक्रांतं च । समानं तृचं सुहस्त्यो घौषेय इति ॥ प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

समानमु त्यं पुरुहूतमुक्थ्यं१ रथं त्रिचक्रं सवना गनिग्मतं ।
परिज्मानं विदथ्यं सुवृक्तिभिर्वयं व्युष्टा उषसो हवामहे ॥१॥
समानं । ऊं इति । त्यं । पुरुऽहूतं । उक्थ्यं । रथं । त्रिऽचक्रं । सवना । गनिग्मतं ।
परिऽज्मानं । विदथ्यं । सुवृक्तिऽभिः । वयं । विऽउष्टौ । उषसः । हवामहे ॥१॥

हे अश्विनौ युवयोः समानमु साधारणमेव त्यं तं पुरुहूतं बहुभिराहूतमुक्थ्यं प्रशस्यं त्रिचक्रं सवना सवनानि यज्ञान्गनिग्मतं प्रतिगच्छंतं परिज्मानं परितो गंतारं विदथ्यं यज्ञहितं रथमुषसो व्युष्टौ सुवृक्तिभिः सुष्ठु दोषवर्जिताभिः स्तुतिभिर्वयं हवामहे । आह्वयामः ॥

प्रातर्युजं नासत्याधि तिष्ठथः प्रातर्यावाणं मधुवाहनं रथं ।
विशो येन गच्छथो यज्वरीर्नरा कीरेश्चिद्यज्ञं होतृमंतमश्विना ॥२॥
प्रातःऽयुजं । नासत्या । अधि । तिष्ठथः । प्रातःऽयावानं । मधुऽवाहनं । रथं ।
विशः । येन । गच्छथः । यज्वरीः । नरा । कीरेः । चित् । यज्ञं । होतृऽमंतं । अश्विना ॥२॥

हे नासत्या नासत्यभूतौ सत्यस्य प्रणेतारौ वा नरा नेतारावश्विनौ युवां प्रातर्युजं प्रातःकालेऽश्वैर्युज्यमानं प्रातर्यावाणं प्रातर्गंतारं मधुवाहनं मधुनोऽमृतस्य वाहकं तं रथमधि तिष्ठथः । आरोहतमित्यर्थः । यज्वरीर्यजनशीला विशः प्रजा येन रथेन गच्छथः । येन च कीरेश्चित्स्तोतुरपि होतृमंतमृत्विग्युक्तं यज्ञं गच्छथः ॥

अध्वर्युं वा मधुपाणिं सुहस्त्यमग्निधं वा धृतदक्षं दमूनसं ।
विप्रस्य वा यत्सवनानि गच्छथोऽत आ यातं मधुपेयमश्विना ॥३॥
अध्वर्युं । वा । मधुऽपाणिं । सुऽहस्त्यं । अग्निधं । वा । धृतऽदक्षं । दमूनसं ।
विप्रस्य । वा । यत् । सवनानि । गच्छथः । अतः । आ । यातं । मधुऽपेयं । अश्विना ॥३॥

हे अश्विनौ युवां मधुपाणिं सोमपाणिमध्वर्युं वा सुहस्त्यं सुहस्त्यनामानमृषिं मां धृतदक्षं धृतबलं दमूनसं दानमनसमग्निधं वर्त्विग्विशेषं समायातं । तदेव दर्शयति । यद्यद्यपि विप्रस्यान्यस्य मेधाविनः सवनानि यज्ञान्गच्छथः तथाप्यतस्तेभ्यो यज्ञेभ्यो मधुपेयमस्माकं सोमात्मकं पेयमा यातं । अन्वागच्छतं ॥ ॥२१॥

अस्तेवेत्येकादशर्चं चयोदशं सूक्तमांगिरसस्य कृष्णाख्यस्यार्षं त्रैष्टुभमैंद्रं । अनुक्रांतं च । अस्तेवैकादश कृष्ण इति ॥ आभिप्लविकेषूक्थ्येषु स्तोमवृद्धाविदं सूक्तं ब्राह्मणाच्छंसिन आवापार्थं । सूचितं च । यज्ञो दिव इति सूक्ते अस्तेव सु प्रतरं । आ॰ ७. ९. । इति ॥

अस्तेव सु प्रतरं लायमस्यन्भूषन्निव प्र भरा स्तोममस्मै ।
वाचा विप्रास्तरत वाचमर्यो नि रामय जरितः सोम इंद्रं ॥१॥
अस्ताऽइव । सु । प्रऽतरं । लायं । अस्यन् । भूषन्ऽइव । प्र । भर । स्तोमं । अस्मै ।
वाचा । विप्राः । तरत । वाचं । अर्यः । नि । रमय । जरितरिति । सोमे । इंद्रं ॥१॥

प्रतरं प्रवृद्धतरं लायं संश्लेषणं हृदयवेधिनं शरं सु सुष्ठस्यन् क्षिपन्नस्तेव यथा क्षेप्ता धानुष्को भूषन्निव यथा चालंकारमलंकुर्वन्नलंकर्ता तद्वत्स्तोममस्मा इंद्राय प्र भर । प्रापय । हे अंतरात्मन् त्वमिति शेषः । किंच हे विप्रा मेधाविनः यूयं वाचा स्तुत्यार्योऽरेः शत्रोर्वाचं तरत । नितरां तरत । निराकुरुतेत्यर्थः । हे जरितः स्तोतः त्वं सोमे सोमयाग इंद्रं नि रमय । क्रीडय ॥

दोहेन गामुप शिक्षा सखायं प्र बोधय जरितर्जारमिंद्रं ।
कोशं न पूर्णं वसुना न्यृष्टमा च्यावय मघदेयाय शूरं ॥२॥
दोहेन । गां । उप । शिक्ष । सखायं । प्र । बोधय । जरितः । जारं । इंद्रं ।
कोशं । न । पूर्णं । वसुना । निऽऋष्टं । आ । च्यवय । मघऽदेयाय । शूरं ॥२॥

हे जरितः त्वं दोहेन कामानां दोहनार्थं गां गोरूपं सखायं प्रियमिंद्रमुप शिक्ष । वशं नय । किंच जारं भूतानां जरयितारमिंद्रं प्र बोधय । स्तुतिभिः प्रबुद्धं कुरु । किंच पूर्णमुदकेन पूरितं कोशं न पात्रमिव वसुना हिरण्यादिना धनेन न्यृष्टं नीचैर्गतं शूरं वीरमिंद्रं मघदेयाय धनदानाया च्यवय । अभिमुखं कुर्वित्यर्थः ॥

किमंग त्वा मघवन्भोजमाहुः शिशीहि मा शिशयं त्वा शृणोमि ।
अप्नस्वती मम धीरस्तु शक्र वसुविदं भगमिंद्रा भरा नः ॥३॥
किं । अंग । त्वा । मघऽवन् । भोजं । आहुः । शिशीहि । मा । शिशयं । त्वा । शृणोमि ।
अप्नस्वती । मम । धीः । अस्तु । शक्र । वसुऽविदं । भगं । इंद्र । आ । भर । नः ॥३॥

अंगेति सामान्याह्वानं । अंग हे मघवन्धनवञ्छक्रेंद्र त्वा त्वां किं किमर्थं भोजं स्तोतॄणां भोजकमभीष्टमाहुः सर्वे विद्वांसः । यदि न ददासीत्यध्याहारः । तस्माद्ददास्येव स्तोतृभ्यो धनानीत्यर्थः । तथा सति मा

स्तोतारं शिशीहि। धनदानेन तीक्ष्णीकुरु। त्वा त्वां शिशयं स्तोतॄणां संस्कर्तारं शृणोमि। किंच मम धीर्बुद्धिरप्नस्वती कर्मवत्यस्तु। भवतु। किंच नोऽस्माकं वसुविदं धनस्य लंभकं भगं भाग्यमा भर। आहर॥

त्वां जना ममसत्येष्विंद्र संतस्थाना वि ह्वयंते समीके।
अत्रा युजं कृणुते यो हविष्मान्नासुन्वता सख्यं वष्टि शूरः॥४॥
त्वां। जनाः। ममऽसत्येषु। इंद्र। संऽतस्थानाः। वि। ह्वयंते। संऽईके।
अत्र। युजं। कृणुते। यः। हविष्मान्। न। असुन्वता। सख्यं। वष्टि। शूरः॥४॥

हे इंद्र त्वां जना ममसत्येषु संग्रामेषु वि ह्वयंते। विविधमाह्वयंति साहाय्यार्थं। एतदेव दर्शयति। समीके युद्धे संतस्थानाः सह तिष्ठंतो जना वि ह्वयंत इति। अत्रास्मिन्नाह्वाने स शूरो वीर इंद्रस्तं युजं सखायं कृणुते कुरुते यो हविष्मान्भवति। असुन्वता सोमाभिषवमकुर्वता पुरुषेण सह सख्यं सखित्वं न वष्टि। न कामयते॥

धनं न स्यंद्रं बहुलं यो अस्मै तीव्रान्सोमाँ आसुनोति प्रयस्वान्।
तस्मै शत्रून्सुतुकान्प्रातरह्नो नि स्वष्ट्रान्युवति हंति वृत्रं॥५॥
धनं। न। स्यंद्रं। बहुलं। यः। अस्मै। तीव्रान्। सोमान्। आऽसुनोति। प्रयस्वान्।
तस्मै। शत्रून्। सुऽतुकान्। प्रातः। अह्नः। नि। सुऽअष्ट्रान्। युवति। हंति। वृत्रं॥५॥

प्रयस्वान् हविष्मान्यो यजमानः स्यंद्रं स्यंदनशीलं गवाश्वादिकं बहुलं प्रभूतं धनं न यथा धनं दरिद्राय पात्रभूताय दातुं संस्करोति तद्वदस्मा इंद्राय तीव्रांस्तीव्ररसान्सोमानासुनोति अभिषुणोति। अभिषवाख्येन संस्कारेण संस्करोतीत्यर्थः। तस्मै यजमानाय प्रातरह्नः पूर्वाह्णे सुतुकान्सुप्रेरणाञ्शोभनपुत्रसहितान्वा स्वष्ट्राञ्शोभनायुधाञ्शत्रून्नि युवति। स इंद्रः पृथक्करोति। किंच वृत्रं तदीयमुपद्रवं हंति। हिनस्ति॥ ॥२२॥

यस्मिन्वयं दधिमा शंसमिंद्रे यः शिश्राय मघवा काममस्मे।
आराच्चित्सन्भयतामस्य शत्रुर्न्यस्मै द्युम्ना जन्या नमंतां॥६॥
यस्मिन्। वयं। दधिम। शंसं। इंद्रे। यः। शिश्राय। मघऽवा। कामं। अस्मे इति।
आरात्। चित्। सन्। भयतां। अस्य। शत्रुः। नि। अस्मै। द्युम्ना। जन्या। नमंतां॥६॥

यस्मिन्निंद्रे वयं घौषेयाः सुहस्त्याः शंसं स्तुतिं दधिम विदध्मः। यश्च मघवा धनवानिंद्रोऽस्मे अस्मासु काममभिलाषं शिश्राय श्राययति। अस्येंद्रस्य शत्रुराराद्दूर एव संस्थित् सन्नपि भयतां। बिभेतु। किंचास्मा इंद्राय जन्या जन्यानि शत्रुजनपदभवानि द्युम्ना द्युम्नान्यन्नानि नि नमंतां। प्रह्वीभवंतु। भोजनीयानि भवंत्वित्यर्थः॥

आराच्छत्रुमप बाधस्व दूरमुग्रो यः शंबः पुरुहूत तेन।
अस्मे धेहि यवमद्गोमदिंद्र कृधी धियं जरित्रे वाजरत्नां॥७॥
आरात्। शत्रुं। अप। बाधस्व। दूरं। उग्रः। यः। शंबः। पुरुऽहूत। तेन।
अस्मे इति। धेहि। यवऽमत्। गोऽमत्। इंद्र। कृधि। धियं। जरित्रे। वाजऽरत्नां॥७॥

हे पुरुहूत बहुभिराहूतेंद्र तव य उग्र उद्गूर्णः शंबो वज्रः । तथा च यास्कः । शंब इति वज्रनाम शमयतेर्वा शातयतेर्वा । नि॰ ५. २४. । इति । तेन वज्रेण शत्रुमस्मदरिमारादस्मत्समीपाद्दूरमप बाधस्व । त्वमपगमय । किंचास्मे अस्मासु यवमद्यवयुक्तं गोमद्गोयुक्तं च धनं धेहि । निधेहि । किंच जरित्रे स्तोत्रे मह्यं वाजरत्नां रमणीयान्नं धियं कर्म कृधि । कुरु ॥

प्र यमंतर्वृषसवासो अग्मन्तीव्राः सोमा बहुलांतास इंद्रं ।
नाहं दामानं मघवा नि यंसन्नि सुन्वते वहति भूरि वामं ॥८॥
प्र । यं । अंतः । वृषऽसवासः । अग्मन् । तीव्राः । सोमाः । बहुलऽअंतासः । इंद्रं ।
न । अह । दामानं । मघऽवा । नि । यंसत् । नि । सुन्वते । वहति । भूरि । वामं ॥८॥

अंतर्जठरे यमिंद्रं वृषसवासो वृषसवा अमी सोमस्य वर्षितृभिरध्वर्युभिरभिषुतास्तीव्रास्तीव्ररसा बहुलांतासो बहुलमन्नादिकमंते येभ्यस्ते बहुलांताः सोमाः प्रागमन् प्रगच्छंति स मघवा धनवानिंद्रो दामानं दातारं यजमानं नाह नैव नि यंसत् । नियच्छति । किंतु सुन्वते सोमाभिषवं कुर्वते यजमानाय भूर्यधिकं वामं वननीयं धनं नि वहति । नितरां प्रापयति ॥

उत प्रहामतिदीव्या जयाति कृतं यच्छ्वघ्नी विचिनोति काले ।
यो देवकामो न धना रुणद्धि समित्तं राया सृजति स्वधावान् ॥९॥
उत । प्रऽहां । अतिऽदीव्य । जयाति । कृतं । यत् । श्वऽघ्नी । विऽचिनोति । काले ।
यः । देवऽकामः । न । धना । रुणद्धि । सं । इत् । तं । राया । सृजति । स्वधाऽवान् ॥९॥

उतापि चेंद्रः प्रहां प्रहंतारमतिदीव्य । अतिरभिपूजितार्थे वर्तते । दीव्यतिर्गत्यर्थे । अभिपूजितं गमयित्वा जयाति । जयति । किंच यद्यथा । अत्र प्रकारवचनप्रत्ययस्य लोपो द्रष्टव्यः । श्वघ्नी कितवः कृतं कृतसमयं प्रतिकितवं कितवानां मध्ये विचिनोति परीक्ष्य गृह्णाति तद्वदिंद्रः काले युद्धकाले बलवंतं शत्रुं परीक्ष्य वधार्थं गृह्णातीत्यर्थः । किंच यो मनुष्यो देवकामो देवान्यष्टुं स्तोतुं वाभिलाषवान्भवति तस्यार्थाय धना धनानि न रुणद्धि । नावृणोति । नाच्छादयतीत्यर्थः । किंतु स्वधावान्बलवानिंद्रस्तं देवकामं राया धनेन सं सृजति । संयोजयत्येव ॥

गोभिष्टरेमामतिं दुरेवां यवेन क्षुधं पुरुहूत विश्वां ।
वयं राजभिः प्रथमा धनान्यस्माकेन वृजनेना जयेम ॥१०॥
गोभिः । तरेम । अमतिं । दुःऽएवां । यवेन । क्षुधं । पुरुऽहूत । विश्वां ।
वयं । राजऽभिः । प्रथमाः । धनानि । अस्माकेन । वृजनेन । जयेम ॥१०॥

हे पुरुहूत बहुभिराहूतेंद्र तव प्रसादाद्दुरेवां दुष्टागमनां दारिद्र्यादागताममतिं दुर्बुद्धिं वयं घोषेयाः सुहस्त्या गोभिः पशुभिस्तरेम । निस्तरेम । किंच यवेन विश्वां व्याप्तां क्षुधं तरेम । किंच प्रथमा मुख्यानि धनानि राजभिर्धनानामीश्वरैः । लभेमहीति शेषः । यद्वा । प्रथमा वयमिति संबंधः । किंचास्माकेनास्मदीयेन वृजनेन बलेन जयेम । शत्रूनिति शेषः ॥

बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः ।
इंद्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु ॥११॥

बृहस्पतिः। नः। परि। पातु। पश्चात्। उत। उत्ऽतरस्मात्। अधरात्। अघऽयोः।
इंद्रः। पुरस्तात्। उत। मध्यतः। नः। सखा। सखिऽभ्यः। वरिवः। कृणोतु ॥११॥

पश्चात्पश्चिमतो योऽघायुरागच्छति तस्मादघायोः पापकाच्चोरोन्नोऽस्मान्बृहस्पतिः परि पातु। रक्षतु। उतापि चोत्तरस्मादुत्तरतोऽधरादधस्ताच्च योऽघायुरागच्छति तस्मादघायोर्नोऽस्मान्परि पातु। उतापि चेंद्रः पुरस्तात्पूर्वतो मध्यतश्च योऽघायुरागच्छति तस्मादघायोर्नोऽस्मान्परि पातु। किंच सखा सखिभूतेंद्रः सखिभ्यः प्रियेभ्योऽस्मभ्यं वरिवो धनं कृणोतु। करोतु॥ ॥२३॥ ॥३॥

चतुर्थेऽनुवाकेऽष्टादश सूक्तानि। तत्राच्छा म इत्येकादशर्चं प्रथमं सूक्तं। दशम्येकादश्यौ त्रिष्टुभौ। शिष्टा जगत्यः। पूर्ववदृषिदेवते। तथा चानुक्रांतं। अच्छा मे द्वित्रिष्टुबंतमिति॥ उक्थ्ये ब्राह्मणाच्छंसिनस्तृतीयसवन एतत्सूक्तं। सूत्रितं च। अच्छा म इंद्रं बृहस्पते युवमिंद्रश्च वस्व इति याज्ये। आ० ६. १.। इति॥ षष्ठेऽहन्यप्येतत्सूक्तं। सूत्रितं च। अच्छा म इंद्रमिति नित्यमैकाहिकं। आ० ८. ३.। इति॥

अच्छा म इंद्रं मतयः स्वर्विदः सध्रीचीर्विश्वा उशतीरनूषत।
परि ष्वजंते जनयो यथा पतिं मर्यं न शुंध्युं मघवानमूतये ॥१॥
अच्छ। मे। इंद्रं। मतयः। स्वःऽविदः। सध्रीचीः। विश्वाः। उशतीः। अनूषत।
परि। स्वजंते। जनयः। यथा। पतिं। मर्यं। न। शुंध्युं। मघऽवानं। ऊतये ॥१॥

आंगिरसस्य कृष्णस्य मे मम स्वर्विदः सर्वस्य लंभयित्र्यः सध्रीचीः संगता विश्वा व्याप्ता उशतीः कामयमाना मतयः स्तुतय इंद्रमच्छानूषत। अभिष्टुवंति। किंच जनयो जाया यथा पतिं भर्तारं मर्यं न यथा च मनुष्यं शुंध्युं शुद्धं दोषरहितं मघवानं धनवंतमूतये रक्षणार्थं परि ष्वजंते आलिंगंति तद्वदिंद्रं मे स्तुतयः परि ष्वजंते॥

न घा त्वद्रिगप वेति मे मनस्त्वे इत्कामं पुरुहूत शिश्रय।
राजेव दस्म नि षदोऽधि बर्हिष्यस्मिन्त्सु सोमेऽवपानमस्तु ते ॥२॥
न। घ। त्वद्रिक्। अप। वेति। मे। मनः। त्वे इति। इत्। कामं। पुरुऽहूत। शिश्रय।
राजाऽइव। दस्म। नि। सदः। अधि। बर्हिषि। अस्मिन्। सु। सोमे। अवऽपानं।
अस्तु। ते ॥२॥

हे पुरुहूत बहुभिराहूत दस्म दर्शनीयेंद्र त्वद्रिक् त्वदभिमुखं मे मदीयं मनो न घ न खल्वप वेति। त्वत्तोऽपगच्छति। किंच त्वे इत् त्वय्येव काममभिलाषं शिश्रय। स्थापयामि। किंच राजेवेश्वर इव बर्हिष्यधि नि षदः। निषीद। किंच ते तवास्मिन्सोमेऽवपानमस्तु। भवतु॥

विषूवृदिंद्रो अमतेरुत क्षुधः स इद्रायो मघवा वस्व ईशते।
तस्येदिमे प्रवणे सप्त सिंधवो वयो वर्धंति वृषभस्य शुष्मिणः ॥३॥
विषुऽवृत्। इंद्रः। अमतेः। उत। क्षुधः। सः। इत्। रायः। मघऽवा। वस्वः। ईशते।
तस्य। इत्। इमे। प्रवणे। सप्त। सिंधवः। वयः। वर्धंति। वृषभस्य। शुष्मिणः ॥३॥

इंद्रोऽमतेरस्माकं दुर्बुद्धेः प्रज्ञापहारिण्याः पिपासाया वा विषूवृद्विष्वग्वर्तको भवतु। उतापि च क्षुधो बुभुक्षाया विषूवृद्भवतु। किंच स इत् स एव मघवा धनवानिंद्रो वस्वो वासयितू रायो धनस्येशते। ईष्टे।

किंच वृषभस्य वर्षितुस्तस्येंद्रस्यैवेमे प्रसिद्धाः सप्त सप्तसंख्याकाः सिंधवो नद्यः प्रवणे देशे वयोऽन्नं वर्धंति। वर्धयंति ॥

वयो न वृक्षं सुपलाशमासदन्त्सोमास इंद्रं मंदिनश्चमूषदः।
प्रैषामनीकं शवसा दविद्युतद्विदत्स्व१र्मनवे ज्योतिरार्यं ॥४॥
वयः। न। वृक्षं। सुऽपलाशं। आ। असदन्। सोमासः। इंद्रं। मंदिनः। चमूऽसदः।
प्र। एषां। अनीकं। शवसा। दविद्युतत्। विदत्। स्वः। मनवे। ज्योतिः। आर्यं ॥४॥

वयो न यथा पक्षिणः सुपलाशं शोभनपर्णं वृक्षमासीदंति तद्वन्मंदिनो मदकराश्चमूषदश्चमसपात्रेषु स्थातारः सोमासः सोमा इंद्रमासदन्। आसीदंति। अधितिष्ठंतीत्यर्थः। एषामिंद्रमधितिष्ठतां सोमानां शवसा वेगेन युक्तमनीकमग्रं प्र दविद्युतत्। प्रद्योतते। किंचायमिंद्रः स्वः स्वात्मनार्यं प्रेर्यं ज्योतिरादित्याख्यं तेजो मनवे मनुष्येभ्यो विदत्। प्रयच्छतु ॥

कृतं न श्वघ्नी वि चिनोति देवने संवर्गं यन्मघवा सूर्यं जयत्।
न तत्ते अन्यो अनु वीर्यं शकन्न पुराणो मघवन्नोत नूतनः ॥५॥
कृतं। न। श्वऽघ्नी। वि। चिनोति। देवने। संऽवर्गं। यत्। मघऽवा। सूर्यं। जयत्।
न। तत्। ते। अन्यः। अनु। वीर्यं। शकत्। न। पुराणः। मघऽवन्। न। उत। नूतनः ॥५॥

श्वघ्नी परस्वानां हंता कितवो देवने द्यूते कृतं न यथा कृतं वि चिनोति तद्वदिंद्रः सूर्यं मृगयते। कदेत्यत आह। यद्यदा मघवा धनवानिंद्रः संवर्गं सम्यग्वृष्टेर्वर्जयितारं सूर्यमादित्यं जयत् तदीयरसापहरणद्वारेण जयति। अथ प्रत्यक्षस्तुतिः। हे मघवन्धनवन्निंद्र ते तव तत्सूर्यजयलक्षणं वीर्यं वीरत्वमन्यस्त्वत्तोऽन्यो भविष्यत्कालीनः पुमानन्वनुकर्तुं न शकत्। न शक्नोति। पुराणः पूर्वोऽपि त्वद्वीर्यमनुकर्तुं न शकत्। न शक्नोति। उतापि च नूतनो वर्तमानकालीनोऽपि त्वदीयं वीर्यमनुकर्तुं न शक्नोति ॥ ॥२४॥

विशंविशं मघवा पर्यशायत जनानां धेना अवचाकशद्वृषा।
यस्याह शक्रः सवनेषु रण्यति स तीव्रैः सोमैः सहते पृतन्यतः ॥६॥
विशंऽविशं। मघऽवा। परि। अशायत। जनानां। धेनाः। अवऽचाकशत्। वृषा।
यस्य। अह। शक्रः। सवनेषु। रण्यति। सः। तीव्रैः। सोमैः। सहते। पृतन्यतः ॥६॥

वृषा कामानां वर्षिता मघवा धनवानिंद्रो विशंविशं सर्वान्मनुष्यान्पर्यशायत। परिशेते। किंच जनानां स्तोतृजनानां धेनाः स्तुतीरवचाकशत्। अभिपश्यति। किंच शक्र इंद्रो यस्याह यस्यैव यजमानस्य सवनेषु रण्यति रमते स यजमानस्तीव्रैस्तीव्रकरैः प्रदीयमानैः सोमैः पृतन्यतः संग्राममिच्छतः शत्रून् सहते। अभिभवति ॥

आपो न सिंधुमभि यत्समक्षरन्त्सोमास इंद्रं कुल्या इव ह्रदं।
वर्धंति विप्रा महो अस्य सादने यवं न वृष्टिर्दिव्येन दानुना ॥७॥
आपः। न। सिंधुं। अभि। यत्। संऽअक्षरन्। सोमासः। इंद्रं। कुल्याःऽइव। ह्रदं।
वर्धंति। विप्राः। महः। अस्य। सदने। यवं। न। वृष्टिः। दिव्येन। दानुना ॥७॥

यद्यदा सोमासः सोमा इंद्रमभि समचरन् अभिचरंति । अभिगच्छंतीत्यर्थः । तत्र दृष्टांतौ दर्शयति । आपो न यथापः सिंधुं समुद्रमभिसंचरंति । कुल्या इव यथा च कुल्या ह्रदमभिसंचरंति तद्वदित्यर्थः । तदानीमस्येंद्रस्य महो महत्त्वं सदने यज्ञगृहे विप्रा मेधाविनो वर्धंति । तत्र दृष्टांतमाह । यवं न यथा यवं यवसस्यं वृष्टिः ॥ कर्तरि क्तत् ॥ वर्षिता पर्जन्यो दिव्येन दिवि भवेन दानुना दानेन वर्षणेन वर्धयति तद्वदित्यर्थः ॥

वृषा न क्रुद्धः पतयद्रजःस्वा यो अर्यपत्नीरकृणोदिमा अपः ।
स सुन्वते मघवा जीरदानवेऽविंदज्ज्योतिर्मनवे हविष्मते ॥८॥
वृषा । न । क्रुद्धः । पतयत् । रजःऽसु । आ । यः । अर्यऽपत्नीः । अकृणोत् । इमाः । अपः ।
सः । सुन्वते । मघऽवा । जीरऽदानवे । अविंदत् । ज्योतिः । मनवे । हविष्मते ॥८॥

रजःसु लोकेषु वृषा न यथा वृषभः क्रुद्धः सन् प्रतिवृषभवधाय पतयत् गच्छति तद्वद्य इंद्रः क्रुद्धः सन्मेघवधाय पतयति हत्वा च मेघमर्यपत्नीः सर्वस्य जगतः स्वामिन इंद्रस्य पालयितव्या इमाः प्रसिद्धा अपो वृष्ट्युदकान्याकृणोत् आकृणोति अस्मदभिमुखं करोति स मघवा धनवानिंद्रः सुन्वते सोमाभिषवं कुर्वते जीरदानवे चिप्रदानाय हविष्मते मनवे मनुष्याय । यजमानायेत्यर्थः । ज्योतिस्तेजोऽविंदत् । प्रायच्छत् ॥

उज्जायतां परशुर्ज्योतिषा सह भूया ऋतस्य सुदुघा पुराणवत् ।
वि रोचतामरुषो भानुना शुचिः स्वर्१ण शुक्रं शुशुचीत सत्पतिः ॥९॥
उत् । जायतां । परशुः । ज्योतिषा । सह । भूयाः । ऋतस्य । सुऽदुघा । पुराणऽवत् ।
वि । रोचतां । अरुषः । भानुना । शुचिः । स्वः । न । शुक्रं । शुशुचीत । सत्ऽपतिः ॥९॥

परशुरिंद्रस्य वज्रो ज्योतिषा तेजसा सहोज्जायतां । असच्छत्रुवधे मेघवधे च व्याप्रियतामित्यर्थः । किंचर्तस्य सत्यस्य सुदुघा माध्यमिका वाक् पुराणवत् प्रत्नवत्काले भूयाः । भूयात् ॥ पुरुषव्यत्ययः ॥ किंचेंद्रो ऽरुष आरोचमानो भानुना दीप्त्या शुचिर्ज्वलन् वि रोचतां । प्रकाशतां । किंच सत्पतिः सतां पतिरिंद्रः स्वर्नादित्य इव शुक्रं ज्वलच्छुशुचीत । अत्यंतं दीप्यतां ॥

गोभिष्टरेमामतिं दुरेवां यवेन क्षुधं पुरुहूत विश्वां ।
वयं राजभिः प्रथमा धनान्यस्माकेन वृजनेना जयेम ॥१०॥
गोभिः । तरेम । अमतिं । दुःऽएवां । यवेन । क्षुधं । पुरुऽहूत । विश्वां ।
वयं । राजऽभिः । प्रथमाः । धनानि । अस्माकेन । वृजनेन । जयेम ॥१०॥

बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः ।
इंद्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु ॥११॥
बृहस्पतिः । नः । परि । पातु । पश्चात् । उत । उत्ऽतरस्मात् । अधरात् । अघऽयोः ।
इंद्रः । पुरस्तात् । उत । मध्यतः । नः । सखा । सखिऽभ्यः । वरिवः । कृणोतु ॥११॥

एतदृग्द्वयं प्रागेव व्याख्यातं ॥ ॥२५॥

आ यात्विति एकादशर्चं द्वितीयं सूक्तमांगिरसस्य कृष्णस्यार्षमैंद्रं । आदितस्तिस्रस्त्रिष्टुभः । ततः षड्जगत्यः । ततो द्वे त्रिष्टुभौ । तथा चानुक्रांतं । आ यातु त्रिजगत्यत्रिष्टुबादीति ॥ आभिप्लविकेषूक्थ्येषु ब्राह्मणाच्छंसिनः सोमवृद्धाविदमावापार्थं । सूचितं च । आ यात्विंद्रः स्वपतिरिमां धियमिति ब्राह्मणाच्छंसी । आ॰ ७. ९. । इति ॥

आ यात्विंद्रः स्वपतिर्मदाय यो धर्मणा तूतुजानस्तुविष्मान् ।
प्रत्वक्षाणो अति विश्वा सहांस्यपारेण महता वृष्ण्येन ॥१॥
आ । यातु । इंद्रः । स्वऽपतिः । मदाय । यः । धर्मणा । तूतुजानः । तुविष्मान् ।
प्रऽत्वक्षाणः । अति । विश्वा । सहांसि । अपारेण । महता । वृष्ण्येन ॥१॥

य इंद्रस्तूतुजानस्त्वरमाणस्तुविष्मान्वृद्धिमान्विश्वा विश्वानि सहांसि शत्रुबलान्यपारेण महताधिकेन वृष्ण्येन बलेन प्रत्वक्षाणः प्रकर्षेण तनूकुर्वन्नति । गच्छतीति शेषः । स्वपतिर्धनपतिरिंद्रो मदाय मदार्थं धर्मणा धारकेण रथेना यातु । अस्मद्यज्ञं प्रत्यागच्छतु ॥

सुष्ठामा रथः सुयमा हरी ते मिम्यक्ष वज्रो नृपते गभस्तौ ।
शीभं राजन्त्सुपथा याह्यर्वाङ् वर्धाम ते पपुषो वृष्ण्यानि ॥२॥
सुऽस्थामा । रथः । सुऽयमा । हरी इति । ते । मिम्यक्ष । वज्रः । नृऽपते । गभस्तौ ।
शीभं । राजन् । सुऽपथा । आ । याहि । अर्वाङ् । वर्धाम । ते । पपुषः । वृष्ण्यानि ॥२॥

हे नृपते नृणां पालकेंद्र ते तव रथः सुष्ठामा शोभनावस्थानो हरी अश्वावपि सुयमा सुयमौ । सुबद्धावित्यर्थः । किंच तव गभस्तौ बाहौ वज्रो मिम्यक्ष । संहतो भवति । तथा सति हे राजन् सर्वस्येश्वरेंद्र शीभं शीघ्रं सुपथा शोभनेन मार्गेणार्वाङस्मदभिमुख आ याहि । आगच्छ । आगत्य पपुषः सोमं पीतवतस्ते तव वृष्ण्यानि बलानि वर्धाम । वयं वर्धयामः ॥

एंद्रवाहो नृपतिं वज्रबाहुमुग्रमुग्रासस्तविषास एनं ।
प्रत्वक्षसं वृषभं सत्यशुष्ममेमस्मत्रा सधमादो वहंतु ॥३॥
आ । इंद्रऽवाहः । नृऽपतिं । वज्रऽबाहुं । उग्रं । उग्रासः । तविषासः । एनं ।
प्रऽत्वक्षसं । वृषभं । सत्यऽशुष्मं । आ । ईं । अस्मऽत्रा । सधऽमादः । वहंतु ॥३॥

नृपतिं नरां नेतॄणां पालकं वज्रबाहुं वज्रहस्तमुग्रमुद्गूर्णं प्रत्वक्षसं शत्रुबलानां प्रकर्षेण तनूकर्तारं वृषभं कामानां वर्षितारं सत्यशुष्ममविसंवादिबलमेनमिंद्रं । आ ईमिति पूरणौ । उग्रास उद्गूर्णास्तविषासः प्रवृद्धाः सधमादः सह माद्यंत इंद्रवाह इंद्रस्य वोढारोऽस्मत्रास्मास्वा वहंतु ॥

एवा पतिं द्रोणसाचं सचेतसमूर्जः स्कंभं धरुण आ वृषायसे ।
ओजः कृष्व सं गृभाय त्वे अप्यसो यथा केनिपानामिनो वृधे ॥४॥
एव । पतिं । द्रोणऽसाचं । सऽचेतसं । ऊर्जः । स्कंभं । धरुणे । आ । वृषऽयसे ।
ओजः । कृष्व । सं । गृभाय । त्वे इति । अपि । असः । यथा । केऽनिपानां । इनः । वृधे ॥४॥

हे इंद्र त्वमेवैवं पतिं पालकं द्रोणसाचं द्रोणकलशस्य सेवितारं सचेतसं समानमूर्जः स्कंभं बलस्य धारकं सोमं धरुणे धारके जठर आ वृषायसे । आसिंचसे । धारयसीत्यर्थः । किंच मह्यमोजो बलं कृष्व । कुरुष्व ।

त्वे त्वय्यस्मानपि सं गृभाय। संगृहाण च। किंच केनिपानां मेधाविनामस्माकं। केनिप उशिज इति मेधाविनामसु पाठात्। वृधे वर्धनाय यथा यथावत्सर्वथेनः स्वाम्यसः। भवसि॥

गमन्नस्मे वसून्या हि शंसिषं स्वाशिषं भरमा याहि सोमिनः।
त्वमीशिषे सास्मिन्ना सत्सि बर्हिष्यनाधृष्या तव पात्राणि धर्मणा ॥५॥
गमन्। अस्मे इति। वसूनि। आ। हि। शंसिषं। सुऽआशिषं। भरं। आ। याहि। सोमिनः।
त्वं। ईशिषे। सः। अस्मिन्। आ। सत्सि। बर्हिषि। अनाधृष्या। तव। पात्राणि। धर्मणा ॥५॥

हे इंद्र वसूनि त्वद्देयानि धनान्यस्मे मह्यां गमन्। आगच्छंतु। हि यस्मात्त्वामहं शंसिषं स्तौमि। किंच सोमिनः सोमवतो मम स्वाशिषं शोभना आशिषो यस्मिंस्तं भरं यज्ञमा याहि। त्वमागच्छ। किंच त्वमीशिषे। धनस्येश्वरोऽसि। एवंविधः स त्वमस्मिन्नस्मदीये वेद्यास्तृते बर्हिष्या सत्सि। आसीद। किंच तव सोमपात्राणि धर्मणा राक्षसानां कर्मणानाधृष्याणि धर्षयितुमशक्यानि॥ ॥२६॥

पृथक् प्रायन्प्रथमा देवहूतयोऽकृण्वत श्रवस्यानि दुष्टरा।
न ये शेकुर्यज्ञियां नावमारुहमीर्मैव ते न्यविशंत केपयः ॥६॥
पृथक्। प्र। आयन्। प्रथमाः। देवऽहूतयः। अकृण्वत। श्रवस्यानि। दुस्तरा।
न। ये। शेकुः। यज्ञियां। नावं। आऽरुहं। ईर्मा। एव। ते। नि। अविशंत। केपयः ॥६॥

हे इंद्र तव प्रसादात्ते पृथक् प्रायन् देवलोकान्पृथग्गच्छंति ये प्रथमाः पूर्वे मुख्या वा देवहूतयो देवानामाह्वातारः॥ कर्तरि क्तिन्॥ किंच दुष्टराण्यैर्दुस्तराणि श्रवस्यानि श्रवणीयानि यशांस्यकृण्वत अकुर्वत। किंच ये त्वत्प्रसादरहिता जना यज्ञियां यज्ञसंबंधिनीं। यज्ञमयीमित्यर्थः। नावमारुहमारोढुं न शेकुः न शक्नुवंति ते केपयः कुत्सितपूयकर्माणः पापकर्माणो जना ईर्मैव ऋणेनैव न्यविशंत। नीचैरविशंत। अधोगतिं प्राप्ता इत्यर्थः। तथा च यास्कः। पृथक् प्रायन् पृथक् प्रथतेः प्रथमा देवहूतयो ये देवानाह्वयंताकुर्वत श्रवणीयानि यशांसि दुरनुकराण्यन्यैर्येऽशक्नुवन्यज्ञियां नावमारोढुमथ ये नाशक्नुवन्यज्ञियां नावमारोढुमीर्मैव ते न्यविशंत ऋणेनैव ते न्यविशंतास्मिन्नेव लोक इति वा। नि० ५. २५.। इति॥

एवैवापागपरे संतु दूढ्योऽश्वा येषां दुर्युज आयुयुज्रे।
इत्था ये प्रागुपरे संति दावने पुरूणि यत्र वयुनानि भोजना ॥७॥
एव। एव। अपाक्। अपरे। संतु। दुःऽध्यः। अश्वाः। येषां। दुःऽयुजः। आऽयुयुज्रे।
इत्था। ये। प्राक्। उपरे। संति। दावने। पुरूणि। यत्र। वयुनानि। भोजना ॥७॥

एवैवैवमेव दूढ्यो दुर्बुद्धयोऽपरेऽन्ये। अयज्वान इत्यर्थः। अपागपाचीना अधोगंतारः संतु भवंतु येषां यज्ञमकुर्वतामश्वा दुर्युजो दुर्योजाः प्रबला अश्वा आयुयुज्रे रथेषु युज्यंते। ये सत्यपि सामर्थ्ये न यजंति ते नरकं गच्छंतीति भावः। किंचेत्थेत्थं ते स्वर्गगामिनो भवंति य उपरे यज्वानः प्राङ्मरणात्पूर्वमेव दावने देवानां हविर्दानाय संति भवंति। यत्र येषु च यज्ञकारिषु वयुनानि प्रज्ञानानि कांतानि वा भोजना भोग्यानि धनानि पुरूणि बहूनि देवेभ्यो दानाय संति॥

गिरीँरज्रान्रेजमानाँ अधारयद्द्यौः क्रंदद॑ंतरिक्षाणि कोपयत् ।
समीचीने धिषणे वि ष्कभायति वृष्णः पीत्वा मद उक्थानि शंसति ॥८॥
गिरीन् । अज्रान् । रेजमानान् । अधारयत् । द्यौः । क्रंदत् । अंतरिक्षाणि । कोपयत् ।
समीचीने इति संऽईचीने । धिषणे इति । वि । स्कभायति । वृष्णः । पीत्वा । मदे ।
उक्थानि । शंसति ॥८॥

गिरीन्मेघानज्रान्गमनशीलान्रेजमानान्कंपमानानधारयत् । इंद्रो धारितवान् । निश्चलान्कृतवानित्यर्थः । किंच द्यौर्द्युलोकस्तन्निवासी वा जनोऽसुरराक्षसेभ्यो भीतः सन् क्रंदत् । क्रंदति । इंद्रमाह्वयत्यात्मनः परित्राणार्थं । किंचेंद्रोऽंतरिक्षाणि कोपयत् । कोपयति । संक्षोभयतीत्यर्थः । किंचेंद्रः समीचीने परस्परं संगते धिषणे द्यावापृथिव्यौ वि ष्कभायति । अंतरिक्षेण स्तभ्नाति । स्तंभयतीत्यर्थः । किंचेंद्रो वृष्णः स्वोदरस्यासेक्तृन्सोमान्पीत्वा मदे सत्युक्थानि प्रशस्यानि वचनानि शंसति । प्रब्रवीति ॥

इमं बिभर्मि सुकृतं ते अंकुशं येनारुजासि मघवञ्छफारुजः ।
अस्मिन्त्सु ते सवने अस्त्वोक्यं सुत इष्टौ मघवन्बोध्याभगः ॥९॥
इमं । बिभर्मि । सुऽकृतं । ते । अंकुशं । येन । आऽरुजासि । मघऽवन् । शफऽआरुजः ।
अस्मिन् । सु । ते । सवने । अस्तु । ओक्यं । सुते । इष्टौ । मघऽवन् । बोधि । आऽभगः ॥९॥

हे मघवन्धनवन्निंद्र ते तव सुकृतं संस्कृतमिममंकुशं बिभर्मि । धारयामि । अत्रांकुशशब्देन प्रेरकत्वगुणयोगात्स्तुतिरुच्यते । स्तुतिं धारयामीत्यर्थः । येन स्तुतिलक्षणांकुशेन स्तुतः संस्त्वं शफारुज आभिमुख्येन परबलानां हंतॄनैरावतादीन्गजानारुजासि आभिमुख्येन रुजसि । पीडयसीत्यर्थः । किंच ते तवास्मिन्नस्मदीये सवन ओक्यमोको निवासोऽस्तु । भवतु । किंच हे मघवन्धनवन्निंद्र आभग आभजनीयस्त्वं सुते सुतसोम इष्टौ यज्ञे बोधि । अस्मदीयाः स्तुतीर्बुध्यस्व ॥

गोभिष्टरेमामतिं दुरेवां यवेन क्षुधं पुरुहूत विश्वां ।
वयं राजभिः प्रथमा धनान्यस्माकेन वृजनेना जयेम ॥१०॥
गोभिः । तरेम । अमतिं । दुःऽएवां । यवेन । क्षुधं । पुरुऽहूत । विश्वां ।
वयं । राजऽभिः । प्रथमाः । धनानि । अस्माकेन । वृजनेन । जयेम ॥१०॥

बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः ।
इंद्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु ॥११॥
बृहस्पतिः । नः । परि । पातु । पश्चात् । उत । उत्ऽतरस्मात् । अधरात् । अघऽयोः ।
इंद्रः । पुरस्तात् । उत । मध्यतः । नः । सखा । सखिऽभ्यः । वरिवः । कृणोतु ॥११॥

इदमृग्द्वयं व्याख्यातचरं ॥ ॥२७॥

दिवस्परीति द्वादशर्चं तृतीयं सूक्तं भालंदनस्य वत्सप्रेरार्षं त्रैष्टुभमाग्नेयं । तथा चानुक्रांतं । दिवस्परि द्वादश वत्सप्रिराग्नेयं त्विति ॥ प्रातरनुवाकाश्विनशस्त्रयोरिदमादिके द्वे सूक्ते अस्य सूक्तस्यांत्यां वर्जयित्वा ।

सूचितं च । दिवस्परीति सूक्तयोः पूर्वस्योत्तमामुद्धरेत् । आ० ४. १३. । इति ॥ धामवत्यामक्रंददग्निरित्येषा याज्या । सूचितं च । अग्ने त्वमस्मद्युयोध्यमीवा अक्रंददग्निः स्तनयन्निव द्यौः । आ० ३. १३. । इति ॥

दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परि जातवेदाः ।
तृतीयमप्सु नृमणा अजस्रमिंधान एनं जरते स्वाधीः ॥१॥
दिवः । परि । प्रथमं । जज्ञे । अग्निः । अस्मत् । द्वितीयं । परि । जातऽवेदाः ।
तृतीयं । अप्ऽसु । नृऽमनाः । अजस्रं । इंधानः । एनं । जरते । सुऽआधीः ॥१॥

अग्निः प्रथमं पूर्वं दिवो द्युलोकस्य पर्युपर्यादित्यात्मना जज्ञे । जातः । जातवेदा जातप्रज्ञो जातधनो वाग्निर्द्वितीयमस्मदस्माकं पर्युपरि पार्थिवात्मना जज्ञे । नृमणा नृषु मनुष्येष्वनुग्राहकतयासक्तचित्तोऽग्निस्तृतीयमप्स्वंतरिक्षे वैद्युतात्मना जज्ञे । एवंविधमेनमग्निं स्वाधीः सुप्रज्ञाताजस्रमनवरतमिंधानो दीपयञ्जरते । स्तौति । यद्वा । वाजसनेयकोक्तप्रकारेणास्य मंत्रस्यार्थो द्रष्टव्यः । तद्यथा । दिवस्परि प्रथमं जज्ञे अग्निरिति प्राणो वै द्यौः प्राणाद्वा एष प्रथममजायतास्मद्द्वितीयं परि जातवेदा इति यदेनमदो द्वितीयं पुरुषविधोऽजनयत्तृतीयमप्स्विति यदेनमदस्तृतीयमद्भ्योऽजनयन्नृमणा अजस्रमिति प्रजापतिर्वै नृमणा अग्निरजस्रमिंधान एनं जरते स्वाधीरिति यो वा एनमिंधे स एनं जनयते स्वाधीः । शत० ६. ७. ४. ३. । इति ॥

विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते धाम विभृता पुरुत्रा ।
विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं यत आजगंथ ॥२॥
विद्म । ते । अग्ने । त्रेधा । त्रयाणि । विद्म । ते । धाम । विऽभृता । पुरुऽत्रा ।
विद्म । ते । नाम । परमं । गुहा । यत् । विद्म । तं । उत्सं । यतः । आऽजगंथ ॥२॥

हे अग्ने ते तव त्रेधा त्रिषु स्थानेषु पृथिव्यंतरिक्षद्युलोकेषु स्थितानि त्रयाण्यग्निवाय्वादित्याख्यानि त्रीणि रूपाणि विद्म । वयं जानीमः । किंच हे अग्ने ते तव धाम सद्मानि स्थानानि विभृता विभृतानि पुरुत्रा बहुधा बहूनि वा गार्हपत्याहवनीयान्वाहार्यपचनादीनि विद्म । किंच ते तव गुहा गूढमवेदविद्भिरविज्ञातं परममुत्कृष्टं वेदे प्रसिद्धं यन्नामास्ति तद्विद्म । वेदविदो वयं विजानीमः । किंच त्वं यतो यस्मादाजगंथ आगतवानसि । उत्पन्नवानित्यर्थः । तमुत्समुत्स्यंदयितारमुत्पादयितारं कारणात्मानं विद्म । जानीमः ॥

समुद्रे त्वा नृमणा अप्स्व१ंतर्नृचक्षा ईधे दिवो अग्न ऊधन् ।
तृतीये त्वा रजसि तस्थिवांसमपामुपस्थे महिषा अवर्धन् ॥३॥
समुद्रे । त्वा । नृऽमनाः । अप्ऽसु । अंतः । नृऽचक्षाः । ईधे । दिवः । अग्ने । ऊधन् ।
तृतीये । त्वा । रजसि । तस्थिऽवांसं । अपां । उपऽस्थे । महिषाः । अवर्धन् ॥३॥

हे अग्ने समुद्रे महोदधौ जायमानमप्स्वंतरपां मध्ये वडवात्मना स्थितं त्वा त्वां नृमणा नृषु मनुष्येष्वनुग्राहकतयासक्तचित्तो वरुण ईधे । संदीपितवान् । किंच नृचक्षा नृणां प्रत्यक्षेण द्रष्टादित्यो दिवो द्युलोकस्य संबंधिन्यूधन्नूधस्यूधःस्थानीय आदित्यमंडले यज्ञे वेधे । संदीपितवान् । किंच तृतीये त्रयाणां पूरकेऽपां वृष्ट्युदकानामुपस्थे स्थाने रजस्यंतरिक्षलोके तस्थिवांसं विद्युद्रूपेणावस्थितं त्वां महिषा महांतो माध्यमिका देवगणा मरुदादयः स्तोतारोऽवर्धन् । स्तुतिभिरवर्धयन् । यद्वा । वाजसनेयकोक्तप्रकारेणार्थो द्रष्टव्यः । तद्यथा । समुद्रे त्वा नृमणा अप्स्वंतरिति प्रजापतिर्वै नृमणा अप्सु त्वा प्रजापतिरित्येतन्नृचक्षा ईधे दिवो अग्न ऊधन्निति प्रजापतिर्वै नृचक्षा आपो दिव ऊधस्तृतीये त्वा रजसि तस्थिवांसमिति द्यौर्वै तृतीयं रजोऽपामुपस्थे महिषा अवर्धन्निति प्राणा वै महिषा दिवि त्वा प्राणा अवर्धन्नित्येतत् । शत० ६. ७. ४. ५. । इति ॥

पश्चादेनमपि नाशयत्वित्यर्थः ॥ शॄ हिंसायामित्यस्मात्कॄशॄस्निहीत्यादिनोप्रत्ययः । निदित्यनुवृत्तेराद्युदात्तत्वं । क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थी । हंतेस्तुमर्थे सेसेनिति तवैप्रत्ययः । अंतश्च तवै युगपदित्या- द्यंतयोर्युगपदुदात्तत्वं । उशब्दः पूरकः ॥ ॥४०॥

अपश्यमिति तृचं द्वात्रिंशं सूक्तं त्रैष्टुभं । प्रजापतिपुत्रः प्रजावान्नामर्षिः । ऋचः क्रमेण यजमानपत्नीहोतॄ- णामाशिषः प्रतिपादिकाः । अतस्तद्देवताकाः । तथा चानुक्रांतं । अपश्यं प्रजावान्प्राजापत्योऽन्वृचं यजमानप- त्नीहोत्राशिष इति ॥ प्रवर्ग्येऽभिष्टव एतत्सूक्तं । सूत्र्यते हि । अपश्यं त्वेत्येतस्याद्यया यजमानमीक्षते द्वितीयया पत्नीं तृतीययात्मानं । आ० ४. ६. । इति ॥

अपश्यं त्वा मनसा चेकितानं तपसो जातं तपसो विभूतं ।
इह प्रजामिह रयिं रराणः प्र जायस्व प्रजया पुत्रकाम ॥१॥
अपश्यं । त्वा । मनसा । चेकितानं । तपसः । जातं । तपसः । विऽभूतं ।
इह । प्रऽजां । इह । रयिं । रराणः । प्र । जायस्व । प्रऽजया । पुत्रऽकाम ॥१॥

हे यजमान त्वा त्वां मनसा बुद्ध्यापश्यं । अद्राक्षं । कीदृशं । चेकितानं कर्माणि भृशं जानंतं तपसो दीक्षा- रूपाद्व्रताज्जातं पुनरुत्पन्नं यद्वा जन्मांतरानुष्ठितात्सुकृतादुत्पन्नं तपसोऽनुष्ठीयमानाद्यज्ञाद्धेतोर्विभूतं व्याप्तं सर्वत्र प्रख्यातं । हे पुत्रकाम पुत्रान्कामयमान स त्वमिहास्मिँल्लोके प्रजां पुत्रपौत्रादिरूपां रराणो रमयन् रयिं धनमिहास्मिँल्लोके रमयन् प्रजया प्रजननेन प्र जायस्व । पुत्रादिरूपेणोत्पद्यस्व । प्रजा उत्पादयेत्यर्थः ॥

अपश्यं त्वा मनसा दीध्यानां स्वायां तनू ऋत्व्ये नाधमानां ।
उप मामुच्चा युवतिर्बभूयाः प्र जायस्व प्रजया पुत्रकामे ॥२॥
अपश्यं । त्वा । मनसा । दीध्यानां । स्वायां । तनू इति । ऋत्व्ये । नाधमानां ।
उप । मां । उच्चा । युवतिः । बभूयाः । प्र । जायस्व । प्रजया । पुत्रऽकामे ॥२॥

हे पत्नि दीध्यानां दीप्यमानां स्वायामात्मीयायां तनू तन्वां शरीरे ऋत्व्ये । ऋतुकाले भवं गर्भधारणरूपं कर्मर्त्व्यं । तस्मिन्निमित्तभूते नाधमानां भर्तुरुपगमनं याचमानां त्वा त्वां मनसापश्यं । अद्राक्षं । हे पुत्रकामे पुत्रान्कामयमाने मामुप मत्समीपं प्राप्य सा त्वमुच्चोच्चैर्भृशं युवतिस्तरुणी बभूयाः । भूयाः ॥ छंदस्युभयथेत्या- शीर्लिङः सार्वधातुकत्वाच्छप् । तस्य छांदसः श्लुः । अस्तिरप्यपि व्यत्ययेन भवतेरः । पा० ७. ४. ७३. । इत्यभ्या- सस्यात्वं ॥ युवतिर्भूत्वा च प्रजया प्रजननेन प्र जायस्व । पुत्रान्प्रसूष्व ॥ जनी प्रादुर्भावे । ज्ञाजनोर्जेति जादेशः ॥

अहं गर्भमदधामोषधीष्वहं विश्वेषु भुवनेष्वंतः ।
अहं प्रजा अजनयं पृथिव्यामहं जनिभ्यो अपरीषु पुत्रान् ॥३॥
अहं । गर्भं । अदधां । ओषधीषु । अहं । विश्वेषु । भुवनेषु । अंतरिति ।
अहं । प्रऽजाः । अजनयं । पृथिव्यां । अहं । जनिऽभ्यः । अपरीषु । पुत्रान् ॥३॥

अहं होतौषधीषु शाल्यादिषु फलार्थं गर्भमदधां । धारयामि । विश्वेषु सर्वेष्वन्येष्वपि भुवनेषु भूतजातेष्वं- तर्मध्येऽहमेव गर्भं धारयामि । तथा पृथिव्यां भूम्यां प्रजाः सर्वान्मनुष्यानहमजनयं । जनयामि । जनिभ्यो जायाभ्योऽपरीष्वन्यास्वपि स्त्रीषु पुत्रानहमजनयं । जनयामि । मत्साध्येन यागेन सर्वस्योत्पत्तेरहं सर्वजगद्धे- तुर्भवामीत्यर्थः ॥ ॥४१॥

विष्णुरिति तृचं त्रयस्त्रिंशं सूक्तमानुष्टुभं । गर्भाणां त्वष्टा नामर्षिः प्रजापतिपुत्रो विष्णुर्वा । लिंगोक्ता विष्णुत्वष्टृप्रजापतिसिनीवालीसरस्वत्यश्विन इति देवताः । तथा चानुक्रांतं । विष्णुस्त्वष्टा गर्भकर्ता विष्णुर्वा प्राजापत्यो गर्भार्थाशीर्लिंगोक्तदेवतमानुष्टुभमिति ॥ लैंगिको विनियोगः ॥

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु ।
आ सिंचतु प्रजापतिर्धाता गर्भं दधातु ते ॥१॥
विष्णुः । योनिं । कल्पयतु । त्वष्टा । रूपाणि । पिंशतु ।
आ । सिंचतु । प्रजाऽपतिः । धाता । गर्भं । दधातु । ते ॥१॥

विष्णुर्व्यापको देवो योनिं गर्भाधानस्थानं कल्पयतु । करोतु । त्वष्टा तनुकर्तैतत्संज्ञको देवश्च रूपाणि निरूपकाणि स्त्रीत्वपुंस्त्वाभिव्यंजकानि चिह्नानि पिंशतु । अवयवीकरोतु ॥ पिश अवयवे । मुचादित्वान्नुम् ॥ एवं प्रक्लृप्तायां योन्यां प्रजापती रेत आ सिंचतु । निषिंचतु । सृजत्वित्यर्थः । धाता धारको देवो हे जाये ते तव गर्भं गर्भरूपेण परिणतं तद्रेतो दधातु । तत्रैव धारयतु । स्रावपातापप्रसवा मा भूवन्नित्यर्थः ॥

गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति ।
गर्भं ते अश्विनौ देवावा धत्तां पुष्करस्रजा ॥२॥
गर्भं । धेहि । सिनीवालि । गर्भं । धेहि । सरस्वति ।
गर्भं । ते । अश्विनौ । देवौ । आ । धत्तां । पुष्करऽस्रजा ॥२॥

हे सिनीवाल्येतत्संज्ञे देवि गर्भं धेहि । निषिक्तं गर्भं धारय । हे सरस्वति त्वं च निषिक्तं गर्भं धारय । हे जाये पुष्करस्रजा पुष्करमालिनौ स्वर्णकमलाभरणावश्विनौ देवौ ते तव गर्भमा धत्तां । प्रक्षिपतां । कुरुतामित्यर्थः ॥

हिरण्ययी अरणी यं निर्मंथतो अश्विना ।
तं ते गर्भं हवामहे दशमे मासि सूतवे ॥३॥
हिरण्ययी इति । अरणी इति । यं । निःऽमंथतः । अश्विना ।
तं । ते । गर्भं । हवामहे । दशमे । मासि । सूतवे ॥३॥

हिरण्ययी हिरण्मय्यावरणी यं गर्भमुद्दिश्याश्विनाश्विनौ देवौ निर्मंथतः निर्मथितवंतौ हे जाये ते तुभ्यं त्वदर्थं तं गर्भं हवामहे । आह्वयामहे । दशमे मासि सूतवे प्रसोतुं ॥ पद्दन्नित्यादिना मासशब्दस्य मास्भावः । सूतेस्तुमर्थे सेसेनिति तवेन्प्रत्ययः ॥ ॥४२॥

महीति तृचं चतुस्त्रिंशं सूक्तं वरुणपुत्रस्य सत्यधृतेरार्षं गायत्रमादित्यदेवताकं । तथा चानुक्रांतं । महि सत्यधृतिर्वारुणिरादित्यं स्वस्त्ययनं गायत्रं वा इति ॥ धनलिप्सया प्रवसंतं शिष्यमाचार्योऽनेन सूक्तेनाभिमंत्रयते । सूत्र्यते हि । महि त्रीणामित्यनुमंत्र्यैवमतिरुष्टस्य न कुतश्चिन्नयं भवतीति विज्ञायते । आ° गृ° ३. १०.७–८. । इति ॥

महि त्रीणामवोऽस्तु द्युक्षं मित्रस्यार्यम्णः । दुराधर्षं वरुणस्य ॥१॥
महि । त्रीणां । अवः । अस्तु । द्युक्षं । मित्रस्य । अर्यम्णः । दुःऽआधर्षं । वरुणस्य ॥१॥

चीयां चयायां मित्रस्यार्यम्णो वरुणस्य च चुमं दीप्तं अत एव दुराधर्षमन्यैर्धर्षितुं बाधितुमशक्यं महि महद्वो रक्षणमस्माकमस्तु। चीयामित्यपि छंदसि दृश्यत इति वचनात्। का॰ ७. १. ५३. १.। चयादेशाभावः। नामन्यतरस्यामिति नाम उदात्तत्वं ॥

नहि तेषाममा चन नाध्वसु वारणेषु। ईशे रिपुरघशंसः ॥२॥

नहि। तेषां। अमा। चन। न। अध्वऽसु। वारणेषु। ईशे। रिपुः। अघऽशंसः ॥२॥

अमेति गृहनाम। अमा चन गृहेष्वपि तेषां वरुणमित्रार्यम्णां तदनुगृहीतानां स्तोतॄणां चाघशंसो ऽघमनर्थमाशंसमानो रिपुः शत्रुर्न हीशे। न खलु हिंसितुमीष्टे ॥ लोपस्त आत्मनेपदेष्विति तलोपः। अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः शिष्यते ॥ तथाध्वसु मार्गेषु वारणेषु यत्र पुरुषा निवार्यंते तेषु च स्थानेषु शत्रुर्निवारयितुं नेष्टे ॥

यस्मै पुत्रासो अदितेः प्र जीवसे मर्त्याय। ज्योतिर्यच्छंत्यजस्रं ॥३॥

यस्मै। पुत्रासः। अदितेः। प्र। जीवसे। मर्त्याय। ज्योतिः। यच्छंति। अजस्रं ॥३॥

अदितेरदीनाया देवमातुः पुत्रासः पुत्रा मित्रादयो यस्मै मर्त्याय मनुष्याय स्तोत्रेऽजस्रमविच्छिन्नं ज्योतिस्तेजो जीवसे जीवितुं प्रयच्छंति तस्य शत्रुर्नेश्वर इत्यर्थः ॥ ॥४३॥

वात इति तृचं पंचत्रिंशं सूक्तं वातगोत्रस्योलस्यार्षं गायत्रं वायुदेवताकं। तथा चानुक्रांतं। वातो वातायन उलो वायव्यमिति ॥ गतो विनियोगः ॥

वात आ वातु भेषजं शंभु मयोभु नो हृदे। प्र ण आयूंषि तारिषत् ॥१॥

वातः। आ। वातु। भेषजं। शंऽभु। मयःऽभु। नः। हृदे। प्र। नः। आयूंषि। तारिषत् ॥१॥

वातो वायुर्नोऽस्माकं हृदे हृदयाय भेषजमौषधमुदकं वा वातु। आगमयतु। कीदृग्भूतं। शंभु रोगशमनस्य भावयितृ मयोभु सुखस्य च भावयितृ। अपि च नोऽस्माकमायूंषि प्र तारिषत्। प्रवर्धयतु ॥

उत वात पितासि न उत भ्रातोत नः सखा। स नो जीवातवे कृधि ॥२॥

उत। वात। पिता। असि। नः। उत। भ्राता। उत। नः। सखा। सः। नः। जीवातवे। कृधि ॥२॥

उतापि च हे वात त्वं नोऽस्माकं पितासि। उत्पादको भवसि। उतापि च भ्राता भवसि। उतापि च नोऽस्माकं सखा समानख्यानो मित्रभूतश्च भवसि। स त्वं नोऽस्माञ्जीवातवे जीवनहेतवे यागाय कृधि। कुरु ॥ करोतेश्छांदसो विकरणस्य लुक्। श्रुशृणुपॄकृवृभ्य इति हेर्धिः ॥

यददो वात ते गृहेऽमृतस्य निधिर्हितः। ततो नो देहि जीवसे ॥३॥

यत्। अदः। वात। ते। गृहे। अमृतस्य। निऽधिः। हितः। ततः। नः। देहि। जीवसे ॥३॥

हे वात वायो ते तव गृहे स्थाने यददो योऽसावमृतस्यामरणस्य निधिर्निक्षेपो हितः स्थापितो वर्तते ततस्तस्मान्निधेराहृत्यामृतत्वं जीवसे नोऽस्माकं जीवनाय देहि। प्रयच्छ ॥ ॥४४॥

प्राग्नय इति पंचर्चं षड्विंशं सूक्तं । अग्निः पुत्रस्य वत्सस्यार्षं गायत्रमाग्नेयं । तथा चानुक्रांतं । प्राग्नये पंचाग्नेयो वत्स आग्नेयं त्विति ॥ प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रे छंदसीदमादिके द्वे सूक्ते । सूत्र्यते हि । प्राग्नये वाचमिति सूक्ते इमां मे अग्ने समिधं । आ० ४.१३. । इति ॥ दशरात्रस्य नवमेऽहन्याग्निमारुत इदं जातवेदसं निविद्धानं । सूचितं च । महतो यस्य हि प्राग्नये वाचमित्याग्निमारुतं । आ० ८.११. । इति ॥

प्राग्नये॒ वाच॑मीरय वृष॒भाय॑ क्षिती॒नां । स नः॑ पर्ष॒दति॒ द्विषः॑ ॥१॥
प्र । अ॒ग्नये॑ । वाच॑ं । ई॒र॒य॒ । वृ॒ष॒भाय॑ । क्षि॒ती॒नां । सः । नः॒ । प॒र्ष॒त् । अति॑ । द्विषः॑ ॥१॥

हे स्तोतः अग्नये स्तुतिरूपां वाचं प्रेरय । उच्चारय । कथंभूताय । क्षितीनां मनुष्याणां यजमानानां वृषभाय कामानां वर्षित्रे । किं प्रयोजनमिति चेत् । सोऽग्निर्नोऽस्मान्द्विषो द्वेष्टॄनति पर्षत् । अतिपारयेत् ॥

यः पर॑स्याः परा॒वत॑स्ति॒रो धन्वा॑ति॒रोच॑ते । स नः॑ पर्ष॒दति॒ द्विषः॑ ॥२॥
यः । पर॑स्याः । प॒रा॒ऽवतः॑ । ति॒रः । धन्व॑ । अ॒ति॒ऽरोच॑ते । सः । नः॒ । प॒र्ष॒त् । अति॑ । द्विषः॑ ॥२॥

योऽग्निः परस्याः परावतोऽतिशयिताद्दूरदेशात्तिरः । प्राप्तमामेतत् । प्राप्तसंबंधं धन्व मरुभूमिं जलवर्जितं देशमतिरोचते अतिक्रम्य प्रज्वलति । यद्वा । धन्वांतरिक्षं । धन्वांतरिक्षं तिरस्तिर्यगतिरोचते भृशं प्रकाशयते । गतमन्यत् ॥

यो रक्षां॑सि नि॒जूर्व॑त्य॒ग्निस्ति॒ग्मेन॑ शो॒चिषा॑ । स नः॑ पर्ष॒दति॒ द्विषः॑ ॥३॥

यो रक्षाँ॑सि नि॒जूर्व॑ति॒ वृषा॑ शु॒क्रेण॑ शो॒चिषा॑ । स नः॑ पर्ष॒दति॒ द्विषः॑ ॥३॥
यः । रक्षां॑सि । नि॒ऽजूर्व॑ति । वृषा॑ । शु॒क्रेण॑ । शो॒चिषा॑ । सः । नः॒ । प॒र्ष॒त् । अति॑ । द्विषः॑ ॥३॥

वृषा वर्षिता योऽग्निः शुक्रेण निर्मलेन शुभ्रवर्णेन वा शोचिषा तेजसा रक्षांसि यज्ञस्य हंतॄणि निजूर्वति निहिनस्ति । जूर्वी हिंसार्थः । गतमन्यत् ॥

यो विश्वा॒भि वि॒पश्य॑ति॒ भुव॑ना॒ सं च॒ पश्य॑ति । स नः॑ पर्ष॒दति॒ द्विषः॑ ॥४॥
यः । विश्वा॑ । अ॒भि । वि॒ऽपश्य॑ति । भुव॑ना । सं । च॒ । पश्य॑ति । सः । नः॒ । प॒र्ष॒त् । अति॑ । द्विषः॑ ॥४॥

योऽग्निः सूर्यरूपेण विश्वा विश्वानि सर्वाणि भूतजातान्यभिमुखं विपश्यति विशेषेण तेजसा प्रेक्षते । प्रकाशयतीत्यर्थः । भुवना भुवनानि भूतजातानि सं पश्यति च सम्यग्जानाति च । अन्यत्सिद्धं ॥

यो अ॒स्य पा॒रे रज॑सः शु॒क्रो अ॒ग्निरजा॑यत । स नः॑ पर्ष॒दति॒ द्विषः॑ ॥५॥
यः । अ॒स्य । पा॒रे । रज॑सः । शु॒क्रः । अ॒ग्निः । अजा॑यत । सः । नः॒ । प॒र्ष॒त् । अति॑ । द्विषः॑ ॥५॥

अस्य रजसो लोकस्यांतरिक्षस्य पारे उपरिदेशे शुक्रः शुभ्रवर्णो योऽग्निर्विद्युदात्मना सूर्यात्मना वाजायत प्रादुर्भवति स नोऽस्मान्द्विषो द्वेष्टॄनति पर्षत् । अतिपारयतु ॥ ॥४५॥

प्र नूनमिति तृचं सप्तविंशं सूक्तं । अग्निपुत्रस्य श्येनस्यार्षं गायत्रं जातवेदोगुणकोऽग्निर्देवता । तथा चानुक्रांतं । प्र नूनं तृचमाग्नेयः श्येनो जातवेदस्यमिति ॥ प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

प्र नूनं जातवेदसमश्वं हिनोत वाजिनं । इदं नो बर्हिरासदे ॥१॥

प्र । नूनं । जातऽवेदसं । अश्वं । हिनोत । वाजिनं । इदं । नः । बर्हिः । आऽसदे ॥१॥

जातवेदसं जातानां वेदितारं जातधनादिकं वाश्वं कर्मभिर्व्याप्नुवंतं वाजिनमन्नवंतं हे ऋत्विग्यजमानाः नूनमवश्यं प्र हिनोत । प्रवर्धयत । यद्वा । अश्वमिव स्तुतिभिः प्रेरयत ॥ हि गतौ वृद्धौ च । अस्माल्लोटि तशब्दस्य तप्तनप्तनथनाश्चेति तबादेशः ॥ किमर्थं । नोऽस्माकमिदं बर्हिरास्तीर्णमासद आसत्तुं प्राप्तुं । बर्हिरासीदत्वित्यर्थः ॥ सदेः तुमर्थे तवैकेनिति केन्प्रत्ययः ॥

अस्य प्र जातवेदसो विप्रवीरस्य मीळ्हुषः । महीमियर्मि सुष्टुतिं ॥२॥

अस्य । प्र । जातऽवेदसः । विप्रऽवीरस्य । मीळ्हुषः । महीं । इयर्मि । सुऽस्तुतिं ॥२॥

जातवेदसो जातानां वेदितुर्विप्रवीरस्य । विप्रा मेधाविनो यजमाना वीराः पुत्रा यस्य । तादृशस्य मीळ्हुषः सेक्तुरस्याग्नेर्महीं महतीं सुष्टुतिं शोभनां स्तुतिं प्रेयर्मि । प्रेरयामि ॥ ऋ गतौ जौहोत्यादिकः । अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वं ॥

या रुचो जातवेदसो देवत्रा हव्यवाहनीः । ताभिर्नो यज्ञमिन्वतु ॥३॥

याः । रुचः । जातऽवेदसः । देवऽत्रा । हव्यऽवाहनीः । ताभिः । नः । यज्ञं । इन्वतु ॥३॥

जातवेदसोऽग्नेर्या रुचो रोचमानाः कालीकरालीप्रभृतयः सप्त जिह्वा देवत्रा देवान्प्रति ॥ देवमनुष्यपुरुषपुरुमर्त्येभ्य इत्यादिना द्वितीयार्थे त्राप्रत्ययः ॥ हव्यवाहनीर्हव्यानां हविषां वोढ्र्यः प्रापयित्र्यो भवंति ॥ वा छंदसीति जसि पूर्वसवर्णदीर्घः ॥ ताभिर्जिह्वाभिर्नोऽस्माकं यज्ञं यागसाधनं हविरिन्वतु । देवान्प्रापयतु ॥ इवि व्याप्तौ । इदित्त्वान्नुम् ॥ ॥४६॥

आयं गौरिति तृचमष्टात्रिंशं सूक्तं गायत्रं । सार्पराज्ञी नामर्षिका । सैव देवता सूर्यो वेति । तथा चानुक्रांतं । आयं गौः सार्पराज्ञ्यात्मदैवतं सौर्यं वेति ॥ अविवाक्येऽहनि मानसग्रह एतत्सूक्तं शंसनीयं । सूत्रितं च । आयं गौः पृश्निरक्रमीदित्युपांशु तिस्रः पराचीः शस्त्वा । आ० ८. १३. । इति ॥

आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरं च प्रयन्त्स्वः ॥१॥

आ । अयं । गौः । पृश्निः । अक्रमीत् । असदत् । मातरं । पुरः । पितरं । च । प्रऽयन् ।
स्व१रिति स्वः ॥१॥

गौर्गमनशीलः पृश्निः प्राष्टवर्णः प्राप्ततेजा अयं सूर्य आक्रमीत् । आक्रांतवान् । उदयाचलं प्राप्तवानित्यर्थः । आक्रम्य च पुरः पुरस्तात्पूर्वस्यां दिशि मातरं सर्वभूतजातस्य निर्मात्रीं पृथिवीमसदत् । आसीदति । प्राप्नोति ॥ सदेश्छांदसो लुङ् । लृदित्त्वाच्च्लेरङादेशः ॥ ततः पितरं पालकं द्युलोकं चशब्दादंतरिक्षं च प्रयन् प्रकर्षेण शीघ्रं गच्छन् स्वः स्वरणः शोभनगमनो भवति । यद्वा । पितरं स्वर्गलोकं प्रयन्वर्तते ॥

अंतश्चरति रोचनास्य प्राणादपानती । व्यख्यन्महिषो दिवं ॥२॥

अंतरिति । चरति । रोचना । अस्य । प्राणात् । अपऽअनती । वि । अख्यत् ।
महिषः । दिवं ॥२॥

अस्य सूर्यस्य रोचना रोचमाना दीप्तिरंतः शरीरमध्ये मुख्यप्राणात्मना चरति । वर्तते । किं कुर्वती । प्राणादपानती । मुख्यप्राणस्य प्राणाद्याः पंच वृत्तयः । तत्र प्राणनं नाडीभिरूर्ध्वं वायोर्निर्गमनं । तथाविधा-

त्प्राणात्प्राणनादनंतरमपानती । अपाननं नाडीभिर्वायुमुखं वायोर्नयनं । तत्कुर्वती ॥ अपपूर्वादनितेर्लटः शतृ । अदादित्वाच्छपो लुक् । उगितश्चेति ङीप् । शतुरनुम इति नद्या उदात्तत्वं ॥ यद्वा । अंतर्द्यावापृथिव्योर्मध्येऽस्य सूर्यस्य रोचना रोचमाना दीप्तिश्चरति । गच्छति ॥ रुच दीप्तौ । अनुदात्तेतश्च हलादेरिति युच् ॥ किं कुर्वती । प्राणात्प्राणनादुदयानंतरमपानती सायंसमयेऽस्तं गच्छंती । ईदृश्या दीप्त्या युक्तः । अत एव महिषो महान्सूर्यो दिवमंतरिक्षमुदयास्तमययोर्मध्ये व्यख्यत् । विचष्टे । प्रकाशयति ॥ महेरविमह्योष्टिषच् । उ॰ १.४६. । इत्यौणादिकष्टिषच्प्रत्ययः । चक्षिङः ख्याञ् । छांदसे लुङ्यस्यतिवक्तीत्यादिना च्लेरङादेशः ॥

त्रिंशद्धाम वि राजति वाक्पतंगाय धीयते । प्रति वस्तोरह द्युभिः ॥ ३ ॥

त्रिंशत् । धाम । वि । राजति । वाक् । पतंगाय । धीयते । प्रति । वस्तोः । अह । द्युऽभिः ॥ ३ ॥

त्रिंशद्धाम धामानि स्थानानि ॥ वचनव्यत्ययः ॥ वस्तोर्वासरस्याहोरात्रस्यावयवभूतानि । अहशब्दोऽवधारणे । द्युभिः सूर्यस्य दीप्तिभिरिव वि राजति । विराजंते । विशेषेण दीप्यंते ॥ व्यत्ययेनैकवचनं ॥ मुहूर्तान्यत्र धामान्युच्यंते । पंचदश रात्रेः पंचदशाह्नः । पतंगाय । पतति गच्छतीति पतंगः सूर्यः । तस्मै श्रुतिरूपा वाक् प्रति धीयते । प्रतिमुखं स्तोतृभ्यः क्रियते । यद्वा । वस्तोरहनि त्रिंशद्धामानि । घटिकाभिप्रायमेतत् । त्रिंशद्घटिकाः ॥ अत्यंतसंयोगे द्वितीया ॥ एतावंतं कालं द्युभिर्दीप्तिभिरसौ सूर्यो वि राजति । विशेषेण दीप्यते । तस्मिंश्च समये वाक् त्रयीरूपा तस्मै सूर्यरूपाय पतंगाय प्रति धीयते । प्रतिमुखं धार्यते । स्तूयते सूर्यः सर्वत इत्यर्थः । श्रूयते हि । ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः इत्यादि । तै॰ ब्रा॰ ३.१२.९.१. ॥ यदा त्विदं सूक्तं सार्पराज्ञ्या आत्मस्तुतिः तदा सूर्यात्मना स्तूयत इत्यवगंतव्यं ॥ ॥ ४७ ॥

ऋतमिति तृचमेकोनचत्वारिंशं सूक्तं मधुच्छंदसः पुत्रस्याघमर्षणस्यार्षमानुष्टुभं । रात्र्यादीनां भावानां सृष्ट्यादिप्रतिपादकत्वात्तद्रूप एवार्थो देवता । तथा चानुक्रांतं । ऋतं माधुच्छंदसोऽघमर्षणो भाववृत्तमानुष्टुभं त्विति ॥ लिंगाद्विनियोगोऽवगंतव्यः ॥

ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥ १ ॥

ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥ १ ॥

ऋतमिति सत्यनाम । ऋतं मानसं यथार्थसंकल्पनं सत्यं वाचिकं यथार्थभाषणं । चकाराभ्यामन्यदपि शास्त्रीयं धर्मजातं समुच्चीयते । तत्सर्वमभीद्धादभितस्प्राद्ब्रह्मणा पुरा सृष्ट्यर्थं कृतात्तपसोऽधि । अध्युपर्यर्थे । उपर्यजायत । उदपद्यत । तपस्तप्त्वेदं सर्वमसृजत । तै॰ आ॰ ८.६. । इति श्रुतेः । तपश्चात्र स्रष्टव्यपर्यालोचनलक्षणं । यस्य ज्ञानमयं तपः । मुं॰ उ॰ १.१.९. । इति श्रुत्यंतरात् ॥ अभिपूर्वादिंधेः कर्मणि निष्ठा । श्वीदितो निष्ठायामितीट्प्रतिषेधः । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । स्वरितो वानुदात्ते पदादावित्येकादेशः स्वर्यते ॥ यद्वा । अभीद्धादभितः प्रकाशमानात्परमात्मनो मायाधिष्ठानरूपापादानभूतादृतं सत्यं चाजायत ॥ जनिकर्तुः प्रकृतिः । पा॰ १.४.३०. । इति प्रकृतेरपादानसंज्ञा ॥ ततस्तस्मादेवेश्वराद्रात्री । उपलक्षणमेतदह्नोऽपि । अहश्च रात्रिश्चाजायत ॥ रात्रेश्चाजसाविति ङीप् ॥ ततस्तस्मादेवेश्वरादर्णवोऽर्णसोदकेन युक्तः समुद्रश्चाजायत । समुद्रशब्दोऽंतरिक्षोदध्योः साधारण इत्यभिमतार्थस्य प्रकाशनायार्णवशब्देन विशेष्यते ॥ अर्णसः सलोपश्च । का॰ ५.२.१०९.३. । इति मत्वर्थीयो वप्रत्ययः सलोपश्च ॥

समुद्रादर्णवादधि संवत्सरो अजायत ।
अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ २ ॥

समुद्रादर्णवादधि संवत्सरो अजायत ।
अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ २ ॥

अर्णवात्समुद्रात्स्रष्टादध्यूर्ध्वं संवत्सरः संवत्सरोपलक्षितः सर्वः कालोऽजायत । श्रूयते हि । सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि कला मुहूर्ताः काष्ठाश्च ।तै॰ आ॰ १०. १. २.। इति । स चेश्वरोऽहोरात्राण्येतदुपलक्षितानि सर्वाणि भूतानि विदधत् कुर्वन् सृजन् ॥ अभ्यस्तानामादिरित्याद्युदात्तत्वं । ततः समासे कृदुत्तरपदप्रकृतिस्वरत्वं ॥ मिषतो निमिषादियुक्तस्य विश्वस्य सर्वस्य प्राणिजातस्य वशी स्वामी भूत्वा वर्तते ॥

सूर्याचंद्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चांतरिक्षमथो स्वः ॥३॥

सूर्याचंद्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चांतरिक्षमथो स्वः ॥३॥

सूर्याचंद्रमसौ कालस्य ध्वजभूतौ दिवं च पृथिवीं चांतरिक्षं च इत्थं त्रिभुवनं स्वः । स्वःशब्दः सुखवाची । दिवो विशेषणं । सुखरूपां दिवं । तदेतत्सर्वं धाता विधाता यथा पूर्वं पूर्वस्मिन्कालेऽकल्पयत् सृष्टवान् तथैवागामिन्यपि कल्पे कल्पयिष्यतीत्यर्थः ॥ ॥४८॥

संसमिति चतुर्ऋचं चत्वारिंशं सूक्तं संवननस्यार्षं । समानो मंत्र इति तृतीया त्रिष्टुप् शिष्टास्तिस्रोऽनुष्टुभः । प्रथमाया अग्निर्देवता । शिष्टानां संज्ञानं । अनुक्रम्यते च । संसं चतुष्कं संवननः संज्ञानमाग्नेयी तृतीया त्रिष्टुप् तृतीया त्रिष्टुबिति । आनुष्टुभं त्विति पूर्वसूक्तत्वादवशिष्टानामनुष्टुप्त्वं ॥ सूक्तविनियोगो लैंगिकः ॥

संसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ । इळस्पदे समिध्यसे स नो वसून्या भर ॥१॥

संऽसं । इत् । युवसे । वृषन् । अग्ने । विश्वानि । अर्यः । आ । इळः । पदे । सं । इध्यसे । सः । नः । वसूनि । आ । भर ॥१॥

हे वृषन्कामानां वर्षितरग्ने अर्य ईश्वरस्त्वं ॥ अर्यः स्वामिवैश्ययोः ।पा॰ ३. १. १०३.। इति यत्प्रत्ययांतो निपातितः । अर्यः स्वाम्याख्यायां ।फि॰ १. १८.। इत्यंतोदात्तत्वं ॥ स त्वं विश्वानि सर्वाणि भूतजातानि संसं ॥ प्रसमुपोदः पादपूरणे ।पा॰ ८. १. ६.। इति समो द्विर्वचनं ॥ इच्छब्दोऽवधारणे । आ समंतात्त्वं युवसे । मिश्रयसि । देवेषु मध्ये त्वमेव सर्वाणि भूतजातानि वैश्वानरात्मना व्याप्नोषि । नान्य इत्यर्थः । किंचेळ इडायाः पृथिव्याः पदे स्थान उत्तरवेदिलक्षणे । एतद्वा इळायास्पदं यदुत्तरवेदीनाभिः ।ऐ॰ ब्रा॰ १. २८.। इति ब्राह्मणं । तत्र त्वं समिध्यसे । ऋत्विग्भिः संदीप्यसे । स तादृशस्त्वं नोऽस्माकं वसूनि धनान्या भर । आहर ॥

सं गच्छध्वं सं वदध्वं सं वो मनांसि जानतां ।
देवा भागं यथा पूर्वे संजानाना उपासते ॥२॥

सं । गच्छध्वं । सं । वदध्वं । सं । वः । मनांसि । जानतां ।
देवाः । भागं । यथा । पूर्वे । संऽजानानाः । उपऽआसते ॥२॥

हे स्तोतारः यूयं सं गच्छध्वं । संगताः संभूता भवत ॥ समो गम्यृच्छीत्यादिना गमेरात्मनेपदं ॥ तथा सं वदध्वं । सह वदत । परस्परं विरोधं परित्यज्यैकविधमेव वाक्यं ब्रूतेति यावत् ॥ व्यक्तवाचां समुच्चारणे ।पा॰ १. ३. ४८.। इति वदेरात्मनेपदं ॥ वो युष्माकं मनांसि सं जानतां । समानमेकरूपमेवार्थमवगच्छंतु ॥ संप्रतिभ्यामनाध्याने ।पा॰ १. ३. ४६.। इति जानातेरात्मनेपदं ॥ यथा पूर्वे पुरातना देवाः संजानाना ऐकमत्यं प्राप्ता हविर्भागमुपासते यथास्वं स्वीकुर्वंति तथा यूयमपि वैमत्यं परित्यज्य धनं स्वीकुरुतेति शेषः ॥

समानो मंत्रः समितिः समानी समानं मनः सह चित्तमेषां ।
समानं मंत्रमभि मंत्रये वः समानेन वो हविषा जुहोमि ॥३॥

समानः । मंत्रः । संऽइतिः । समानी । समानं । मनः । सह । चित्तं । एषां ।
समानं । मंत्रं । अभि । मंत्रये । वः । समानेन । वः । हविषा । जुहोमि ॥३॥

पूर्वोऽर्धर्चः परोक्षकृतः उत्तरः प्रत्यक्षकृतः । एषामेकस्मिन्कर्मणि सह प्रवृत्तानामृत्विजां स्तोतॄणां वा मंत्रः स्तुतिः शस्त्राद्यात्मका गुप्तभाषणं वा समान एकविधोऽस्तु । तथा समितिः प्राप्तिरपि समान्येकरूपास्तु ॥ केवलमामकेत्यादिना समानशब्दाद्ङीप् । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वं ॥ तथा मनो मननसाधनमंतःकरणं चैषां समानमेकविधमप्यस्तु । चित्तं विचारजं ज्ञानं तथा सह सहितं परस्परस्यैकार्थेनैकीभूतमस्तु । अहं च वो युष्माकं समानमेकविधं मंत्रमभि मंत्रये । ऐकविध्याय संस्करोमि । तथा वो युष्माकं स्वभूतेन समानेन साधारणेन हविषा चरुपुरोडाशादिनाहं जुहोमि ॥ तृतीया च होश्छंदसि । पा॰ २. ३. ३. । इति कर्मणि कारके तृतीया ॥ वषट्कारेण हविः प्रक्षेपयामीत्यर्थः ॥

समानी व आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वः सुसहासति ॥४॥
समानी । वः । आऽकूतिः । समाना । हृदयानि । वः ।
समानं । अस्तु । वः । मनः । यथा । वः । सुऽसह । असति ॥४॥

हे ऋत्विग्यजमानाः वो युष्माकमाकूतिः संकल्पोऽध्यवसायः समान्येकविधोऽस्तु । तथा वो युष्माकं हृदयानि समानान्येकविधानि संतु । तथा वो युष्माकं मनोऽंतःकरणं । प्रत्येकापेक्षयैकवचनं । तदपि समानमस्तु । यथा वो युष्माकं सुसह शोभनं साहित्यमसति भवति तथा समानमस्त्वित्यन्वयः ॥ अस्तेर्लेटि बहुलं छंदसीति शपो लुगभावः ॥ ॥४९॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाश ऋक्संहिताभाष्येऽष्टमाष्टकेऽष्टमोऽध्यायः संपूर्णः ॥

शार्मण्यदेशजातेन श्रीगोतीर्थनिवासिना ।
मोक्षमूलरभट्टेन भाष्यमिदं विशोधितं ॥

---

# APPENDIX.



THE

# KHILAS OF THE RIG-VEDA.

# REMARKS.

Some of the MSS. of the Sa*m*hitâ-text contain a number of hymns, or sometimes single verses, which are not explained by Sâya*n*a, and did not form part of what the Brâhmans consider the canonical text of the Rig-veda. They are called 'Khila' and in some MSS. 'Parisish*t*a,' or 'Padasish*t*a.' I have never met with them in the Pada-text of the Rig-veda, and some of the Sa*m*hitâ MSS. also omit them. Still, some of them may claim a considerable antiquity; and though they are not included in the index of the hymns ascribed to Kâtyâyana, there can be no doubt that they were known to Kâtyâyana's predecessor, *S*aunaka, who was the author of several Anukrama*n*îs to the Rig-veda. He mentions the Khilas in general in the introduction to his Anuvâka-anukrama*n*î:

एकैकमनुवाकं तु खिलानि ब्राह्मणानि च । संवत्सरे संवत्सरे पठेदहरहः शुचिः ॥

Again, in the third verse of the same Anukrama*n*î, between the 13th and 14th Anuvâka of the first Ma*nd*ala, *S*aunaka states distinctly that he does not enumerate the Khailika Anuvâkas:

खैलिकानामनादेशोऽस्मिन् ग्रंथेऽनुवाकानां । यस्तु चर्चायते वेदे तस्य संख्येति न श्रुतिः ॥[1]

Where the number of the Anuvâkas, of the Sûktas, the Vargas, the verses, the metres, and of the single words in the Rig-veda is given by *S*aunaka (the words amount to 153,826), the Khilas are never taken into account. But the very fact that they were not counted by *S*aunaka, and that he himself says so, shows that they existed in his time. The number of hymns in the *S*âkala-*s*âkhâ is 1017, but, as *S*aunaka says, exclusive of the Khilas: सहस्रमेतत्सूक्तानां निश्चितं खैलिकैर्विना दश सप्त च पठ्यंते. The Bâshkala-*s*âkhâ, according to *S*aunaka, contained eight hymns more, but again, as he says, exclusive of Khilas: एतत्सहस्रं दश सप्त चैव अष्टावतो बाष्कलकेऽधिकानि । तान्पारणे शाकले शैशिरीये[2] वदंति शिष्टा न खिलेषु विप्राः ॥ Another proof of the antiquity of these Khila-hymns consists in their being quoted in the Nirukta[3]. In Pâ*n*ini the Khilas are not mentioned except in the Ga*n*apâ*th*a.

[1] This is the original reading, which has afterwards been changed into खैलिकानामनादेशोऽनुवाकानामिह स्मृतः. The commentary adds, अतोऽत्रोत्तरत्रापि खिलवर्जमृगुच्यत इति भावः ।. In *S*aunaka's Ârshânukrama*n*î the Khilas seem to have been mentioned.

[2] शैशिरीया इति पठंत्यन्ये ।

[3] Cf. Roth, Abhandlungen, p. 31.

Some of the verses which are Khilas in the Rig-veda occur in the text of the Âtharvana. In the Vâgasaneyi-samhitâ several entire Adhyâyas are called Khila (XXVI–XXXV), and even in the latest works of the Vaidik period, in the Âranyakas and Upanishads, some portions are still marked as apocryphal. The 7th and 8th Adhyâyas of the Brihadâranyaka are called Khila and Parisishta in the commentary (p. 948, ed. Roer), and the whole Yâgñikî Upanishad is called by the same name. In the epic poem of the Mahâbhârata the Harivamsa is reckoned as a Khila.

The Khilas generally occur at the end of Mandalas and Anuvâkas, not of Ashtakas and Adhyâyas—another proof of the early date of their insertion.

For the text of the Khilas I have used, besides the Samhitâ MSS. (S 1. S 2. S 3. S 4), my own MS. of Parisishtas, which I call P. This MS. begins: श्रीगणेशाय नमः ॥ प्रथमाष्टके शून्य ॥ द्वितीयाष्टके॰पंचमाध्याये मंडलांते ॥ मा बिभेर्न etc. It ends: शंन्नो अस्तु द्विपदे शं चतुंष्पदे ॥१॥ इति परिशिष्टानि संपूर्णानि ॥ ॥ संवत् १८१५ माघे मासे द्वादश्यां इंदुवासरे तद्दिने संपूर्ण ॥ I have also quoted the more important readings of Prof. Aufrecht's edition (A), and of Râgârâma Sâstri and Sivarâma Sâstri's edition (R), where the Parisishtas are printed as an appendix to the eighth Ashtaka.

The accents are given in some of the MSS., while in others they are omitted. But even where they are given, as in P, they are mostly placed at random, and have therefore as a rule been omitted in this reprint. The text, too, is often corrupt, and has been restored as best it could be, from our MSS., without attempting any conjectural emendations.

## ॥ अथ खैलिकानि सूक्तानि ॥

### १.

शनैश्चित्सूर्येण आदित्येन सहीयसा ।
अहं यशस्विनां यशो विद्यारूपाण्या ददे ॥१॥
उद्यन्नद्य वि[1] नो भज पिता पुत्रेभ्यो यथा ।
दीर्घायुत्वस्य हेशिषे तस्य नो देहि[2] सूर्य ॥२॥
उद्यंतं त्वा मित्रमह आरोहंतं विचक्षण ।
पश्येम शरदः शतं जीवेम शरदः शतं ॥३॥

1. This Khila is given at the end of the ninth Anuvâka of the first Mandala (Rv. I. 50), in S 3. It is counted as the 9th Varga, but in order to adjust the numbers the 20th Varga is counted twice. It does not occur in S 1. S 2. S 4, nor in MSS. Bodl. Wilson 429, 435, 443, nor in P and R.

[1] वि A. मि S 3.

[2] देहि TBr. III. 7, 6, 22. A. धेहि S 3.

२.

मा बिभेर्न मरिष्यसि परि त्वा पामि सर्वतः ।
घनेन हन्मि वृश्चिकमहं[1] दंडेनागतं ॥१॥
आदित्यरथवेगेन विष्णुबाहुबलेन[2] च ।
गरुडपक्षनिपातेन भूमिं गच्छ महायशाः ॥२॥
गरुडस्य जातमात्रेण त्रयो लोकाः प्रकंपिताः ।
प्रकंपिता मही सर्वा सशैलवनकानना ॥३॥[3]
गगनं[4] नष्टचंद्रार्कं ज्योतिषं न प्रकाशते ।
देवता भयभीताश्च[5] मारुतो न प्रवायति मारुतो न प्रवायत्यों नमः[6] ॥४॥
भोः[7] सर्प भद्र भद्रं ते दूरं गच्छ महायशाः[8] ।
जनमेजयस्य[9] यज्ञांते आस्तीकवचनं स्मर ॥५॥
आस्तीकवचनं श्रुत्वा यः सर्पो न निवर्तते ।
शतधा भिद्यते मूर्ध्नि शिंशवृक्षफलं यथा ॥६॥[10]
यो जरत्कारुणा जातो[11] जरत्कन्यां महायशाः ।[12]
तस्य सर्पाप[13] भद्रं ते भूमिं[14] गच्छ महायशाः ॥७॥[15]
असितिं चार्थसिद्धिं च सुनीतिं चापि यः स्मरेत् ।
दिवा वा यदि वा रात्रौ नास्ति सर्पभयं हरेत्[16] ॥८॥[17]
अगस्तिर्माधवश्चैव मुचुकुंदो महामुनिः ।
कपिलो मुनिरास्तीकः पंचैते सुखशायिनः ॥९॥

2. Khila found at the end of the first Mandala, in S 1. S 3. S 4. It is not given in S 2, nor in MSS. Bodl. Wilson 429, 435.

[1] For °महं R reads °महिं. Cf. Av. X. 4, 9.

[2] For विष्णुबाहु° S 4 and P read विष्णोर्बाहु°.

[3] इति पदशिष्टं S 4, which gives only these three verses.

[4] गगणं A. [5] भयविचस्ता S 3. A.

[6] मारुतो न प्रवायत्यों नमः deest in S 3.

[7] भो without Visarga, MSS.

[8] महायशाः P. R. महाविषाः S 1. S 3. महाविष A. [9] जन्मेजयस्य S 3. A.

[10] Verses 5 and 6 occur Mahâbhârata I. 2190:

सर्पापसर्प भद्रं ते गच्छ सर्प महाविष ।
जनमेजयस्य यज्ञांते आस्तीकवचनं स्मर ॥
आस्तीकस्य वचः श्रुत्वा यः सर्पो न निवर्तते ।
शतधा भिद्यते मूर्ध्नि शिंशवृक्षफलं यथा ॥

[11] P has जरत्कारुणाज्जातो, another MS. has जगत्कारुणाज्जातो.

[12] Cf. Mahâbhârata I. 2188:

यो जरत्कारुणा जातो जरत्कारौ महायशाः ।

[13] सर्पाप P. सर्पापि R. One MS. has सर्पाऽभि.

[14] भूमिं P. दूरं R, and one MS.

[15] This and the following verses (7 to 10) occur only in P. R gives our verse 7 as verse 8, and our verse 10 as verse 7. The other two verses are not given in R.

[16] One MS. has भवेत्.

[17] Cf. Mahâbhârata I. 2189:

असितं चार्तिमन्तं च सुनीथं चापि यः स्मरेत् ।
दिवा वा यदि रात्रौ वा नास्ति सर्पभयं भवेत् ॥

नर्मदायै नमः प्रातर्नर्मदायै नमो निशि ।
नमोऽस्तु नर्मदे तुभ्यं त्राहि मां विषसर्पतः ॥१०॥

३.

भद्रं वद दक्षिणतो भद्रमुत्तरतो वद ।
भद्रं पुरस्तान्नो वद भद्रं पश्चात्कपिंजल[1] ॥१॥
भद्रं वद पुत्रैर्भद्रं वद गृहेषु च ।
भद्रमस्माकं वद भद्रं नो अभयं वद ॥२॥
भद्रमधस्तान्नो वद भद्रमुपरिष्टान्नो वद ।
भद्रंभद्रं न आ वद भद्रं नः सर्वतो वद ॥३॥
असपत्नं पुरस्तान्नः शिवं दक्षिणतस्कृधि ।
अभयं सततं पश्चाद्भद्रमुत्तरतो गृहे ॥४॥
यौवनानि महयसि जिग्युषामिव दुंदुभिः ।
शकुंतक प्रदक्षिणं शतपत्राभि नो वद ॥५॥
आवदंस्त्वं शकुने भद्रमा वद तूष्णीमासीनः सुमतिं चिकिद्धि नः ।
यदुत्पतन्वदसि कर्करिर्यथा[2] बृहद्वदेम विदथे सुवीराः ॥६॥

४.

जागर्षि त्वं भुवने जातवेदो जागर्षि यत्र यजंते हविष्मान् ।
इदं हविः श्रद्दधानो जुहोमि तेन पासि गुह्यं नाम गोनाँ[1] ॥१॥

५.

सूक्तांते तृणान्यप्नावरण्ये वोदकेऽपि वा ।

3. This Khila occurs at the end of the second Mandala. It is given in S1. S3. S4. Wilson 435. P, the sixth verse (= Rv. II. 43, 3) only in S1. S2 and Wilson 429 have not got it, but S2 adds after Varga 12, पद्शिष्टं, a word occurring so frequently in the MSS. instead of परिशिष्टं that I am almost inclined to take it as a synonym of Parisishta. It might mean what is left out in the Pada. The verses 1, 2, 5, 6 occur Kausika-sûtra 46, 54.

[1] कपिंगल S3. This verse occurs Nir. IX. 5. Cf. Roth, Abhandlungen, p. 32, and Notes on Nir. l.c.

[2] On Karkari, see Stenzler, Indische Studien, II. 159.

4. This verse is given at the end of hymn V. 44 in S1. S2. S3. S4, also in P. Wilson 439 has परिशिष्टं । जागर्षि गोनां ॥ It is not in Wilson 436.

[1]. Cf. Rv. V. 3, 3.

5. P has तृतीयाध्याये । प्र ये वसुभ्य॰. R says चतुर्थाष्टकस्य तृतीयाध्याये तृतीयवर्गांते एकर्चं परिशिष्टं ।. The Samhitâ MSS. have no Khila after V. 49. But see Khila 12.

यत्तृणैरध्ययनं[1] तदधीतं तृणानि भव ते भव ॥१॥
वापीकूपतडागानां समुद्रं गच्छ स्वाहाग्निं गच्छ स्वाहा[2] ॥२॥

६.

स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिं महद्भूतं[1] वायसं देवतानां।
असुरघ्नमिंद्रसखं समत्सु बृहद्यशो नावमिवा रुहेम ॥१॥
अंहोमुचमांगिरसं गयं च स्वस्त्यात्रेयं मनसा च तार्क्ष्यं।
प्रयतपाणिः शरणं प्र पद्ये स्वस्ति संबाधेष्वभयं[2] नो अस्तु ॥२॥

७.

वर्षंतु ते विभावरि दिवो अभ्रस्य विद्युतः।
रोहंतु सर्वबीजान्यव ब्रह्मद्विषो जहि ॥१॥

८.

॥ श्रीसूक्तं ॥

हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजां[1]।
चंद्रां हिरण्मयीं लक्ष्मीं जातवेदो म आ वह[2] ॥१॥

अस्यार्थः। हे जातवेदः। जानाति वेदं। जातप्रज्ञो वा। जाते जाते विद्यत इति वा। हे अग्ने त्वं हिरण्यवर्णां हिरण्यस्य सुवर्णस्य वर्णः कांतिस्तद्वद्वर्णो यस्यास्तां। हरिणीं हरितवर्णां। हरिणीरूपधरां वा। श्रीर्धृत्वा हरिणीरूपमरण्ये संचचार हेति देवीपुराणाच्च। सुवर्णरजतस्रजां सुवर्णस्य रजतस्य च पुष्पाणि सुवर्णानि रजतानि तेषां स्रक् माला यस्यास्तां। स्रक्साहचर्यात् पुष्पाणीत्यवगम्यते। पुष्पसादृश्यात् पुष्पे फले लुक्। आपं चैव हलंतानामित्याप्। यद्वा सुवर्णरजतविरचितशृंखलां। सुष्ठु वर्णो यस्य तत्सुवर्णं यद्रजतं तत्पुष्पस्रजां[3]। तद्विरचितशृंखलां वा। चंद्रां चंद्रवत्प्रकाशमानां। तद्रूपेणावस्थितां वा। हिरण्मयीं हिरण्यस्वरूपां। हिरण्यविग्रहां वा। लक्ष्मीं लक्षणवतीं। लक्ष्मीर्लाभाद्वा लक्षणाद्वेत्यादिनिरुक्तात्। नि॰ ४. १०.। एवंरूपां श्रियं मे मह्यं मदर्थमा वह। आह्वय। अग्नेर्देवहोतृत्वादाह्वानं तदधीनमिति भावः। अग्निर्वै देवानां होतेति श्रुतेः ॥१॥

[1] One MS. has यत्तृणैर॰.

[2] अग्निं गच्छ स्वाहा deest in R.

6. This Khila is given at the end of V. 51 in the Samhitâ MSS. It is also in P. R. A.

[1] महाद्भुतं A. [2] A adds च.

7. This verse is given in the Samhitâ MSS. at the end of hymn V. 84, also in P. R. A.

8. The Srîsûkta is given at the end of the fifth Mandala in the Samhitâ MSS. (In S 3 the leaf containing it is bound after the sixth Adhyâya.) It is also in P. R. A. As Dr. Hall has been so fortunate as to discover a commentary on this Khila, I reprint the same, as published by him in the Journal of the Asiatic Society of Bengal, vol. xxviii. p. 121. The commentary is ascribed to Vidyâdhara, to Vidyâtîrtha Mahesvara, and to Vidyâranya Svâmin. Dr. Hall adds, loc. cit., some valuable extracts and remarks bearing on the character of this peculiar hymn.

[1] ॰स्रजम् A.

[2] म आ वह P. R. ममा वह Samhitâ MSS. and A.

[3] Something wanting in this sentence.

तां म आ वह जातवेदो लक्ष्मीमनपगामिनीं[1] ।
यस्यां हिरण्यं विंदेयं गामश्वं पुरुषानहं ॥२॥

अस्यार्थः। हे जातवेदः अग्ने त्वमनपगामिनीमपगमनरहितामनपायिनीमित्यर्थः। तां वक्ष्यमाणलक्षणां लक्ष्मीं मे मह्यमा वह। आह्वय। यस्यां श्रीदेव्यामावाहितायां सत्यां हिरण्यं सुवर्णं गां धेनुमश्वं वाजिनं पुरुषान् पुत्रपौत्रमित्रदासभूतानहं विंदेयं प्राप्नुयां ॥२॥

अश्वपूर्वां[2] रथमध्यां हस्तिनादप्रबोधिनीं[3] ।
श्रियं देवीमुप ह्वये श्रीर्मा देवी जुषतां[4] ॥३॥

अस्यार्थः। अश्वपूर्वामश्वाः पूर्वे पुरोगा यस्यास्तां। अथवाश्वपूर्णामश्वैः पूर्णां परिपूर्णामिति केचित्। रथमध्यां रथा मध्ये यस्यास्तां। हस्तिनादप्रबोधिनीं हस्तिनां गजानां नादेन बृंहितेन प्रबोधिनीं प्रकर्षेण ज्ञापयित्रीं। देवीं देवनशीलां। द्योतनशीलां वा। श्रियं श्रयणीयां। सेनारूपां वा। उप ह्वये समीपं प्रत्याह्वये। एतादृशी देवी श्रीर्मा मां जुषतां सेवतां ॥३॥

कांसोस्मितां[5] हिरण्यप्राकारामार्द्रां ज्वलंतीं तृप्तां तर्पयंतीं ।
पद्मेस्थितां पद्मवर्णां तामिहोप ह्वये श्रियं ॥४॥

अस्यार्थः। कां वाङ्मनसयोरगोचरां दुर्निरूपस्वरूपामित्यर्थः। ब्रह्मरूपां वा। को ह वै नाम प्रजापतिरिति श्रुत्यंतरात्। क इति ब्रह्मणो नामेति पुराणाच्च। सोस्मितां। आ ईषदा समंतादुन्नतं यत् स्मितं हास्यं तद्युक्तां। उपांत्यलोपश्छांदसः। हिरण्यप्राकारां हिरण्यस्य सुवर्णस्य प्राकार आकरणं यस्यास्तां। हिरण्यप्रकृष्ट आकार आकृतिर्यस्यास्तामिति वा। आर्द्रां क्लिन्नां क्षीरोदधेरुत्पन्नत्वात्। रुद्ररूपां वा। रुद्रशब्दोऽत्रामूर्धन्यस्वरादिः। आर्द्रया रुद्र इत्यादौ तथा दर्शनात्। अन्यद्व्याकृतं। ज्वलंतीं प्रकाशमानां। तृप्तां प्रीतामपि च तर्पयंतीं भक्तान् मनोरथैरिति शेषः। पद्मेस्थितां कमले निषण्णामासीनां। पद्मवर्णां कमलवर्णां। तामिति प्रसिद्धां श्रियमिहोप ह्वये समीपं प्रत्याह्वये ॥४॥

चंद्रां प्रभासां यशसा ज्वलंतीं श्रियं लोके देवजुष्टामुदारां ।
तां पद्मिनीमीं[6] शरणं प्र[7] पद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणोमि[8] ॥५॥१॥

अस्यार्थः। अत्र प्र पद्य इत्यस्यानंतरमहंशब्दप्रक्षेपः प्रामादिकः। चंद्रां चंद्रवत् प्रकाशमानां। प्रभासां प्रकृष्टा भाः कांतिर्यस्यास्तां। आपं चेत्याप्। यशसा कीर्त्या ज्वलंतीं प्रकाशमानां। लोके स्वर्लोके देवजुष्टां देवैरिंद्राद्यैर्जुष्टां सेवितां। प्रीतां वा। उदारां वदान्यां प्रगल्भां वा। पद्मिनीं पद्मलतारूपां। पद्माकारां वा। ईमिति निपातोऽनर्थकः। मिताक्षरेष्वनर्थकाः कमीमिद्विति यास्कवचनात्। नि° १.९.। ईकारवाच्यां वा। तां श्रियं लोक इह लोके शरणं रक्षित्रीं प्र पद्ये प्रपन्नोऽस्मि। अहमिति शेषः। अतो हे श्रीः मे ममालक्ष्मीरश्रीर्नश्यतां नाशं प्राप्नोतु। एतादृशीं त्वां वृणोमि। अंतर्भावितण्यर्थात्। वृणी शरणत्वेन स्वीकुर्वे ॥५॥ वर्गः १॥

आदित्यवर्णे तपसोऽधि जातो वनस्पतिस्तव वृक्षोऽथ बिल्वः ।
तस्य फलानि तपसा नुदंतु या अंतरा[9] याश्च बाह्या अलक्ष्मीः ॥६॥

[1] लक्ष्मीमनपगामिनीं Samhitâ MSS. and P.

[2] अश्वपूर्वां P. R. अश्वपूर्णां Samhitâ MSS. and A.

[3] °प्रबोधिनीम् P. R. °प्रमोदिनीम् Samhitâ MSS. and A.

[4] देवीर्जु° P. S4.

[5] S4 accentuates कांसोस्मितां.

[6] पद्मनेमिं S1. 2. 3. 4. A. पद्मनेमीं P.

[7] शरणमहं प्र S2. S3. P.

[8] वृणे P. R.

[9] या अंतरा A. मायान्तरा S1. Hall (but the commentary mentions no मा). मायांतरा S2. 3. 4. P. ममांतरा R.

वृक्षोऽथेत्यतः परमपि पूर्वरूपं नाङ्गत्वात्। आदित्यवर्णे आदित्यस्य सूर्यस्य वर्ण इव वर्णो यस्यास्तस्याः संबोधनं हे श्रीः तव तपसः नियमाद्धेतोर्वनस्पतिः। अपुष्पाः फलवंतो ये ते वनस्पतयः स्मृता इति मानवस्मरणात्। मनु° १. ४७.। बिल्वः बिल्वनामको वृक्षो द्रुमोऽधिजातः प्रादुर्भूतः। त्वत्करादिति शेषः। कात्यायनः। बिल्वो लक्ष्म्याः करेऽभवदिति वामनपुराणात्। अथेत्यनंतरं तस्य बिल्वस्य फलानि पक्वानि प्रशस्तुकानि तपसा त्वत्तपसा त्वदनुग्रहेणेत्यर्थः। अंतरा अंतरिंद्रियसंबंधिन्यो याश्च बाह्या बहिरिंद्रियसंबंधिन्यस्ता अलक्ष्मीरश्रियो नुदंतु अपनुदंतु निवारयंत्वित्यर्थः ॥ ६ ॥

उपैतु मां देवसखः कीर्तिश्च मणिना सह।
प्रादुर्भूतोऽस्मि[1] राष्ट्रेऽस्मिन्कीर्तिमृद्धिं[2] ददातु मे ॥ ७ ॥

अस्यार्थः। हे श्रीः देवसखः देवो महादेवस्तस्य सखा कुबेरः। कीर्तिश्च कीर्त्यभिमानिनी दक्षकन्या देवता। कुबेरकोशशाला वा। सा च मणिना चिंतामणिना मणिभद्रेण कोशाध्यक्षेण सह सार्धमुपैतु उपगच्छतु। अहमस्मिन् राष्ट्रे जनपदे प्रादुर्भूतोऽस्मि। उत्पन्नोऽस्मि। संगत्य कीर्तिं यशः कोशं वा ऋद्धिं सर्ववस्तुसमृद्धिं मे मह्यं ददातु यच्छतु ॥ ७ ॥

क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं[3] नाशयाम्यहं।
अभूतिमसमृद्धिं च सर्वां[4] निर्णुद मे गृहात् ॥ ८ ॥

अस्यार्थः। क्षुत्पिपासामलामशनतृष्णामलिनात्मिकां। ज्येष्ठां वृद्धां श्रीप्रागुत्पन्नामित्यर्थः। अलक्ष्मीमश्रियमहं नाशयामि नाशं प्रापयामि। हे श्रीः त्वमभूतिमसंपत्तिं तथा सर्वामसमृद्धिमनभिवृद्धिं मे मम गृहात् गेहात् निर्णुद निवारय ॥ ८ ॥

गंधद्वारां दुराधर्षां नित्यपुष्टां करीषिणीं।
ईश्वरीं सर्वभूतानां तामिहोप ह्वये श्रियं ॥ ९ ॥

अस्यार्थः। गंधो घ्राणग्राह्यो गुणो द्वारं लक्षणं यस्यास्तां। दुराधर्षां केनापि धर्षयितुमशक्यां। नित्यपुष्टां नित्यं निरंतरं सस्यादिभिः पुष्टां समृद्धां। करीषिणीं करीषः शुष्कगोमयादिस्तद्वतीं गवाश्वादिबहुपशुसमृद्धामिति यावत्। सर्वभूतानां सर्वप्राणिनामीश्वरीमधिष्ठात्रीं। आधारभूतां वा। तां भूरूपां श्रियमिह लोके उप ह्वये उपाह्वये समीपं प्रत्याह्वये ॥ ९ ॥

मनसः काममाकूतिं वाचः सत्यमशीमहि।
पशूनां रूपमन्नस्य[5] मयि श्रीः श्रयतां यशः ॥ १० ॥ २ ॥[6]

अस्यार्थः। हे श्रीः मनसः कामं मनोऽभिलाषं। आकूतिं संकल्पं च। वाचः वागिंद्रियस्य सत्यं याथार्थ्यं। पशूनां गोमहिष्यादीनां रूपं क्षीरादि। अन्नस्य। अत्तीत्यन्नं। तस्यादनीयस्य यवव्रीह्यादे रूपं भक्ष्यादिचतुर्विधं चाशीमहि लभेमहि। श्रीः संपत्तिः यशः कीर्तिश्च मयि श्रयतां। आश्रयतां ॥ १० ॥ वर्गः २ ॥

[1] °भूतोस्मि P. A. °भूतोसु S2. R. °भूतोसु S3. °भूतोसि S1. S4.
[2] ऋद्धिं P. वृद्धिं S1. 2. 3. 4. A.
[3] क्षुत्पिपासामला ज्येष्ठा अलक्ष्मीर्णा° S1. 2. 3. A. °मलां ज्येष्ठा अलक्ष्मीर्णा° S4. °मला ज्येष्ठामलक्ष्मीं णा° R. °मला ज्येष्ठा अलक्ष्मीर्णा° P.
[4] सर्वा S1. 2. 3. 4. P. Cf. TÂ. X. 66.
[5] रूपमन्यस्य S1. S2. S4.
[6] VS. XXXIX. 4; TBr. II. 4, 6, 6.

कर्दमेनप्रजा भूता मयि संभव[1] कर्दम ।
श्रियं वासय मे कुले[2] मातरं पद्ममालिनीं ॥११॥

अस्यार्थः । कर्दमेन कर्दमाख्येन पुत्रेण प्रशस्ता जा अपत्यं यस्याः सा सुपुत्रेत्यर्थः । जामपत्यमिति यास्कवचनात् । नि° ३. ६. । भूता । अभवत् । अतः हे कर्दम श्रीपुत्र त्वं मयि मदीयगृहे संभव संवस । पद्ममालिनीं कमलमालाधारिणीं मातरं तव जननीं श्रियं मे मम कुले वंशे वासय निवासय ॥११॥

आपः सृजंतु[3] स्निग्धानि चिक्लीत वस मे गृहे ।
नि च[4] देवीं मातरं श्रियं वासय मे कुले ॥१२॥

अस्यार्थः । आपः जलाभिमानिन्यो देवताः । स्निग्धानि स्नेहयुक्तानि कार्याणि सृजंतु । उत्पादयंतु । अपां स्नेहगुणवत्त्वादिति भावः । हे चिक्लीत चिक्लीताख्य श्रीपुत्र मे मम गृहे गेहे वस निवस । च अपि च देवीं मातरं श्रियं मे मम कुले वंशे नि वासय संवासय ॥१२॥

आर्द्रां पुष्करिणीं[5] पुष्टिं[6] पिंगलां पद्ममालिनीं ।
चंद्रां हिरण्मयीं लक्ष्मीं जातवेदो म आ वह[7] ॥१३॥

अस्यार्थः । आर्द्रामार्द्रांगां । पुष्करिणीमभिषेकोद्युक्तां दिग्गजशुंडयेति भावः । पुष्करशब्दो गजशुंडाग्रवाचकः । पद्ममालिनीं पद्मवतीं । पद्मलतारूपां वा । पुष्टिं पुष्ट्यभिमानिनीं । पुष्टिरूपां वा । पुष्टिरूपेण संस्थितेति मार्कंडेयवचनात् । पिंगलां पिंगलवर्णां । पद्ममालिनीमित्यादि सिद्धमन्यत् ॥१३॥

आर्द्रां यःकरिणीं यष्टिं[8] सुवर्णां हेममालिनीं ।
सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आ वह ॥१४॥[9]

अस्यार्थः । आर्द्रामार्द्रांगां । यःकरिणीं यष्टिकरां वेत्रहस्तामित्यर्थः । टिलोपश्छांदसः । तद्वतीं दंडकारिणीं वा । दंडकरां वा । यष्टिं दंडरूपां । सुवर्णां शोभनवर्णां । हेममालिनीं हेमविकृतमणिशृंखलादिमालावतीं । सूर्यां सूर्यवत् प्रकाशमानां । तद्रूपां वा । सिद्धमन्यत् ॥१४॥

तां म आ वह जातवेदो लक्ष्मीमनपगामिनीं[10] ।
यस्यां हिरण्यं प्रभूतं[11] गावो दास्योऽश्वान्विंदेयं पुरुषानहं ॥१५॥३॥

अस्यार्थः । प्रभूतं भूयिष्ठं । गावः गाः । दास्यः परिचारिकाः । उभयत्र शस् । इयमृक् द्वितीयया ऋचा व्याख्याता । अर्थ इयान् विशेषः ॥१५॥ वर्गः ३॥ ॥ इति श्रीसूक्तभाष्यं समाप्तं ॥

यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहं ।
श्रियः[12] पंचदशर्चं च श्रीकामः सततं जपेत् ॥१६॥

[1] संभव P. R. संभ्रम S 1. 2. 3. 4. A.

[2] गृहे S 1.

[3] स्रजंतु S 2. 3. 4. P. स्रजंति S 1.

[4] नी च S 2. S 4. P.

[5] यःकरिणीं S 2. S 3. यःक्करि° S 4 sec. m. यष्करि° S 4 pr. m.

[6] पुष्टीं P. A. यष्टीं S 1. 2. 4.

[7] ममा वह S 1. 2. 3. 4. The same in the next verse.

[8] यःकारिणीं यष्टीं P. पुष्करिणीं यष्टीं A. यःकारिणीयष्टिं R. पुष्करिणीं पुष्टीं S 1. 2. 4. पुष्करिणीं पुष्टिं S 3.

[9] Verse 14 precedes 13 in S 1. 2. 3. 4. A.

[10] °मलप° S 1. 2. 4. P.

[11] प्रभूतिं S 1. S 3.

[12] सूक्तं S 4. R. Dr. Hall.

पद्मानने पद्मऊरु[1] पद्माक्षि[2] पद्मसंभवे ।
तन्मे भजसि पद्माक्षि[3] येन सौख्यं लभाम्यहं ॥१७॥
अश्वदायी गोदायी धनदायी[4] महाधने ।
धनं मे जुषतां[5] देवि[6] सर्वकामांश्च देहि मे ॥१८॥
पुत्रपौत्रधनं धान्यं हस्त्यश्वादिगवे रथं[7] ।
प्रजानां भवसी[8] माता आयुष्मंतं करोतु मे[9] ॥१९॥
धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः ।
धनमिंद्रो बृहस्पतिर्वरुणं धनमश्नुते[10] ॥२०॥४॥
वैनतेय सोमं पिब सोमं पिबतु वृत्रहा ।
सोमं धनस्य सोमिनो मह्यं[11] ददातु सोमिनः ॥२१॥
न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।
भवंति कृतपुण्यानां भक्तानां श्रीसूक्तं जपेत् ॥२२॥
सरसिजनिलये सरोजहस्ते धवलतरां[12] शुभगंधमाल्यशोभे[13] ।
भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि[14] प्र सीद मह्यं ॥२३॥
विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियां ।
विष्णोः प्रियसखीं देवीं[15] नमाम्यच्युतवल्लभां ॥२४॥
महालक्ष्मी[16] च विद्महे विष्णुपत्नी[17] च धीमहि ।
तन्नो लक्ष्मीः[18] प्र चोदयात् ॥२५॥
पद्मानने[19] पद्मिनि पद्मपत्रे पद्मप्रिये[20] पद्मदलायताक्षि[21] ।
विश्वप्रिये विश्वमनोनुकूले त्वत्पादपद्मं हृदि[22] सं नि धत्स्व ॥२६॥
आनंदः कर्दमश्चीतश्चिक्लीत[23] इव विश्रुतः[24] ।

[1] पद्मउरु S2. S4. पद्मऊरू S3. P. R. A.
[2] पद्माक्षी S2. S4. P. R. [3] पद्माक्षी S4. P.
[4] अश्वदाये गोदाये धनदाये S2. S4. अश्वदाये च गोदाये धनदाये P. अश्वदायी गोदायी धनदायि R. A. [5] लभतां P. Dr. Hall.
[6] देवी A. देवीं S1. S2. S4. P.
[7] हस्त्यश्वाश्वतरे रथैः A. [8] भवसि S3.
[9] करोम्यहं S1. करोतु मां A.
[10] वरुणं धनमुत्सृजे S1. वरुणं धनमश्विना S3. S4. P. वरुणं धनमस्तु मे R. वरुणो धनमश्विना A.
[11] मघं S2. मिहं S1. [12] धवलतरा Dr. Hall.
[13] शुभगंधमाल्येशोभे P. शुक्लगंधमाल्यशुभे R.
[14] °करी R.
[15] लक्ष्मीं प्रियसखीं देवीं S3. लक्ष्मीप्रियसखीं देवीं S4. लक्ष्मीप्रियसखीदेवीं R.
[16] महादेवि R. [17] °पत्नि R.
[18] लक्ष्मिः S4. लक्ष्मि S3.
[19] पद्मासने S3. [20] पद्मानने S4.
[21] °क्षी P. [22] मयि S3. R.
[23] आनंदः कर्दमः श्रीतश्चि° S4. आननंदकर्दमश्रीदश्चि° S3.
[24] विश्रितः S4. विश्रिता: P.

ऋषयः श्रियपुत्राश्च श्रीर्देवीर्देवताः श्रिया[1] ॥२७॥
श्रीवर्चस्वमायुष्यमारोग्यमाविधात्पवमानं[2] महीयते ।
धान्यं धनं[3] पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥२८॥
ऋणरोगादि दारिद्र्यं[4] पापक्षुदपमृत्यवः ।
भयः[5] शोकमनस्तापा नश्यंतु मम सर्वदा ॥२९॥५॥[6]

९.

विश्वेश्वर विरूपाक्ष विश्वरूप सदाशिव ।
शरणं भव भूतेश करुणा कर शंकर ॥१॥
हर शंभो महादेव विश्वेशामरवल्लभ ।
शिव शंकर सर्वात्मन्नीलकंठ नमोऽस्तु ते ॥२॥
मृत्युंजयाय रुद्राय नीलकंठाय शंभवे ।
अमृतेशाय शर्वाय श्रीमहादेवाय ते नमः ॥३॥
एतानि शिवनामानि यः पठेन्नियतः सकृत् ।
नास्ति मृत्युभयं तस्य पापरोगादि किंचन ॥४॥

१०.

यज्ञेशाच्युत गोविंद माधवानंत केशव ।
कृष्ण विष्णो हृषीकेश वासुदेव नमोऽस्तु ते ॥१॥
कृष्णाय गोपिनाथाय चक्रिणे मुरवैरिणे ।
अमृतेशाय गोपाय गोविंदाय नमो नमः ॥२॥
एतान्यनंतनामानि मंडलांते (सदा) पठेत् ॥३॥

[1] Instead of देवताः श्रिया, S 4 has only देवताः, Dr. Hall's reprint देवता only. In S 3 the second line is left out.

[2] °माखहात्पवमानं S 2. °माविधाक्षुभमानं S 4. °माविधाच् शुभमानं Dr. Hall. °माविधाच्छोभमानं R.

[3] धनं धान्यं S 1. S 2. S 4. R.

[4] दारिद्र्य° S 3.

[5] रोगशोक° S 3.

[6] Verses 16 to 29 are given in this order according to P. S 4 and Dr. Hall's reprint. The last verse is omitted in S 4. In S 1 and S 2 after 23 only verse 28 follows, all the others are omitted. In S 3 after verse 23 there follows 26, 24, 25, 27, 29, 28.

9 and 10. These verses, addressed to *S*iva and Vishnu respectively, are given in S 3 on the margin of the leaf containing the *S*rîsûkta. One MS. at Saugor has the following lines after the *S*rîsûkta:

वासनाद् वासुदेवोऽसि वासितं ते जगत्त्रयं ।
सर्वभूतनिवासोऽसि वासुदेव नमोऽस्तु ते ॥
दश सप्त च नामानि मंडलांतेषु यः पठेत् ।
स शिवस्य पदं गत्वा शिवलोके महीयते ॥

Kullûka, in his commentary on Manu III. 232, explains खिलानि by श्रीसूक्तशिवसंकल्पादीनि; and it is not unlikely, therefore, that he knew the *S*rîsûkta as followed by some verses addressed to *S*iva. Compare also Medhâtithi on Manu l.c., खिलानि श्रीसूक्तमहानाम्निकादीनि.

११.

चक्षुश्च श्रोत्रं च मनश्च वाक्च प्राणापानौ देह इदं शरीरं ।
द्वौ प्रत्यंचावनुलोमौ विसर्गावेतं तं मन्ये दशयंत्रमुत्सं ॥१॥
उरश्च पृष्ठश्च[1] करौ च बाहू जंघे चोरू उदरं शिरश्च ।
रोमाणि[2] मांसं रुधिरास्थिमज्जमेतच्छरीरं जलबुद्बुदोपमं ॥२॥[3]
भ्रुवौ ललाटे च तथा च कर्णौ हनू[4] कपोलौ छुबुकस्तथा च ।
ओष्ठौ च दंताश्च तथैव जिह्वा मे तच्छरीरं[5] मुखरत्नकोशं ॥३॥

१२.

यत्स्तृणैरध्ययनं तदधीतं स्तृणानि भवते भव ।[1]
वापीकूपतडागानां समुद्रं गच्छ स्वाहा ॥१॥
सूक्तांते स्तृणान्यग्नौ[2] ॥२॥

१३.

शंवतीः पारयंत्येते तं[1] पृच्छंति वचो युजा ।
अभ्यारं तं[2] यमाकेतुं य एवेदमिति ब्रवत्[3] ॥१॥
भासाकेतुं पुरुस्पृहं[4] भारतीर्ब्रह्मवर्धनीः ।
संजानाना मही माता य एवेदमिति ब्रवत् ॥२॥
इंद्रस्तं किं विभुं प्रभुं भानुनेयं सरस्वती[5] ।
येन सूर्यमरोचयद्येनेमे रोदसी उभे ॥३॥
जुषस्वाग्ने अंगिरः काण्वं मेध्यातिथिं ।
मा त्वा सोमस्य बर्बृहत्सुतस्य मधुमत्तमः ॥४॥

11. This Khila occurs at the end of Rv. VI. 44 (Ash*t*aka IV. 7, 20) in S 1. S 2. S 3, but not in S 4. P has only the first two verses.

[1] उरस्च पृष्ठीस्च S 2. मखस्च पृष्ठस्च P. उरस्च पृष्टिस्च R.

[2] लोमानि S 3. A.

[3] The order of these two verses is inverted in S 3 and P.

[4] हनुः S 1. [5] जिह्वा एतत्सुशुभ्रं A.

12. This verse is found at the end of Rv. VI. 48 in S 1 and S 4 only. See also Khila 5.

[1] यस्तृणैरध्ययनं तदधीतिं स्तृणानि भवते भव S 1. यत्स्तृणैरध्ययनंस्तदधीतं स्तृणानि भवतेव S 4.

[2] तृणान्य॰ S 4.

13. This Khila occurs in the fifth Ash*t*aka, in S 2 at the end of the third Adhyâya (after Rv. VII. 35), in S 4 at the beginning of the fourth Adhyâya (before Rv. VII. 36), in S 1 it is put at the beginning of the hymn VII. 35 (end of 27th Varga). It is not in S 3. P has अथ पंचमाष्टके तृतीयाध्यायांते. R the same. A has important various readings in this Khila.

[1] ॰यंत्येतं तं S 1. S 2. ॰यंत्येतेदं P.

[2] अभ्यारं सं S 1. [3] ब्रवन् S 4. R.

[4] परिस्रुतं S 2. S 4. R.

[5] सरस्वतीं S 4. P. R.

ऋषयस्तु तपस्तेपुः सर्वे स्वर्गजिगीषवः ।
तपसस्तपसोऽग्र्यं तु पावमानीर्ऋचोऽब्रवीत् ॥ ६ ॥ १ ॥
यन्मे गर्भे वसतः पापमुग्रं यज्जायमानस्य च किंचिदन्यत् ।
जातस्य च यच्चापि च वर्धतो मे तत्पावमानीभिरहं पुनामि ॥ ७ ॥
मातापित्रोर्यन्न कृतं वचो मे यत्स्थावरं जंगममाबभूव ।
विश्वस्य तत्प्रहृषितं वचो मे तत्पावमानीभिरहं पुनामि ॥ ८ ॥
गोघ्नात्तस्करत्वात्स्त्रीवधाद्यच्च किल्बिषं[1] ।
पापकं च चरणेभ्यस्तत्पावमानीभिरहं पुनामि ॥ ९ ॥
ब्रह्मवधात्सुरापानात्स्वर्णस्तेयाद्वृषलीगमनमैथुनसंगमात्[2] ।
गुरोर्दाराभिगमनाच्च[3] तत्पावमानीभिरहं पुनामि ॥ १० ॥
बालघ्नान्मातृपितृवधाद्भूमितस्करात्सर्ववर्णगमनमैथुनसंगमात् ।
पापेभ्यश्च प्रतिग्रहात्सद्यः प्रहरति सर्वदुष्कृतं तत्पावमानीभिरहं पुनामि ॥ ११ ॥
अमंत्रमन्नं यत्किंचिद्धूयते च हुताशने ।
संवत्सरकृतं पापं तत्पावमानीभिरहं पुनामि ॥ १२ ॥
क्रयविक्रयाद्योनिदोषाद्भक्ष्याद्भोज्यात्प्रतिग्रहात् ।
असंभोजनाच्चापि नृशंसं तत्पावमानीभिरहं पुनामि ॥ १३ ॥
दुर्यष्टं दुरधीतं पापं यच्चाज्ञानतोऽकृतं ।
अयाजिताश्चासंयाज्यास्तत्पावमानीभिरहं पुनामि ॥ १४ ॥
ऋतस्य योनयोऽमृतस्य धाम विश्वा देवेभ्यः पुण्यगंधाः ।
ता न आपः प्र वहंतु पापं शुद्धा गच्छामि सुकृतामु लोकं तत्पावमानीभिरहं
पुनामि ॥ १५ ॥ २ ॥
पावमानीः स्वस्त्ययनीर्याभिर्गच्छति नांदनं ।
पुण्यांश्च भक्षान्भक्षयत्यमृतत्वं च गच्छति ॥ १६ ॥
पावमानं[4] पितॄन्देवान्ध्यायेद्यश्च[5] सरस्वतीं ।
ऋषींस्तस्योप वर्ते[6] तत्क्षीरं सर्पिर्मधूदकं ॥ १७ ॥
पावमानं परं ब्रह्म शुक्रं ज्योतिः सनातनं ।

[1] The metre is frequently wrong, but might easily be mended here by reading गोघ्नत्वात्तस्करत्वाच्च. In the next verses, too, the metre is corrupt.

[2] वृषळिगमन° S4. P. R.

[3] दाराञ्जिग° S4. P. दाराधिग° R.

[4] पावमानीः P. पावमानीं R.

[5] ध्यायेभ्यश्च P. ध्यायेध्यश्च S4.

[6] पितॄंस्तस्योप तिष्ठे S4. पितॄंस्तस्योप वर्ते R.

पितॄंस्तस्योप तिष्ठे[1] तत्क्षीरं सर्पिर्मधूदकं ॥१८॥
पावमानं परं ब्रह्म ये पठंति मनीषिणः ।
सप्तजन्मा[2] भवेद्विप्रो धनाढ्यो वेदपारगाः ॥१९॥
दशोत्तराण्यृचश्चैव[3] पावमानीः शतानि षट् ।
एतज्जुह्वञ्जपेन्मंत्रं घोरं मृत्युभयं[4] हरेत् ॥२०॥३॥

१८.

इलैव[1] वामनु[2] वस्तां घृतेन यस्याः पदे[3] पुनते देवयंतः ।
घृतपदी शक्वरी सोमपृष्ठोप[4] यज्ञमस्थित वैश्वदेवी ॥१॥
वैश्वदेवी पुनती देव्या गाद्यस्यामिमा बह्व्यस्तन्वो वीतपृष्ठाः ।
तया मदंतः सधमादेषु वयं स्याम पतयो रयीणां ॥२॥

१९.

यत्र तत्परमं पदं विष्णोर्लोके महीयते ।
देवैः सुकृतकर्मभिस्तत्र माममृतं कृधींद्रायेंदो परि स्रव ॥१॥
यत्र तत्परमाख्यं[1] भूतानामधिपतिः[2] ।
भावभावी[3] च यो गीश्च[4] तत्र माममृतं कृधींद्रायेंदो परि स्रव ॥२॥
यत्र लोकास्तनूत्यजाः श्रद्धया तपसा जिताः ।
तेजश्च यत्र ब्रह्म[5] च तत्र माममृतं कृधींद्रायेंदो परि स्रव ॥३॥
यत्र देवा महात्मानः सेंद्राश्च मरुद्गणाः[6] ।
ब्रह्मा[7] च यत्र विष्णुश्च तत्र माममृतं कृधींद्रायेंदो परि स्रव ॥४॥[8]
यत्र गंगा च यमुना यत्र प्राची सरस्वती ।
यत्र सोमेश्वरो देवस्तत्र माममृतं कृधींद्रायेंदो परि स्रव ॥५॥[9]

[1] ऋषींस्तस्योप वर्ते S4. ऋषींस्तस्योप तिष्ठे R. [2] सप्त जन्म S4. P. R. A. [3] °ण्यृचांश्चैव S4. P. R. A. [4] घोरमृ° S4. P. R.

18. This Khila is given after Rv. IX. 86 in S3 and Wilson 438. It is not in S1. S2. S4. P and Wilson 432, nor in R and A.

[1] इनेव Wilson 438. [2] वामन्नु S3. [3] पदेषु न Wilson 438. [4] °पृष्ठो Wilson 438.

19. This Khila is given at the end of the ninth Maṇḍala. It is not in S4. पंचमाध्याये मंडलांते P.

[1] परमाप्यं S1. Wilson 438. °माख्यं S2. P. [2] भूतानामधिपतिं S1. R. देवानामधिपतिं S2. भूतानामधिपति A. [3] भावभावि S2. A. [4] च योगी च P. वयो गोश्च A. [5] ब्रह्मा S1. P. [6] समरुद्गणाः S2. [7] ब्रह्म S2. [8] The order of verses 3 and 4 is inverted in P. [9] In S2 and S3 hymn IX. 114 is repeated after this verse. Wilson 438 has only verses 1, 2, 5. S1 places verse 2 after verse 4. Deest in Wilson 432. S2 gives only verses 5, 1, 2 (in this order).

२०.

सस्रुषीस्तदपसो दिवा नक्तं च सस्रुषीः ।
वरेण्यक्रतूरहमा देवीरवसे हुवे ॥१॥

२१.

सितासिते सरिते[1] यत्र संगथे[2] तत्राप्लुतासो दिवमुत्पतंति ।
ये वै तन्वं१ वि सृजंति धीरास्ते जनासो अमृतत्वं भजंते ॥१॥

२२.

अविधवा भव वर्षाणि शतं साग्रं तु सुव्रता ।
तेजस्वी च यशस्वी च धर्मपत्नी पतिव्रता ॥१॥
जनयद्बहुपुत्राणि मा च दुःखं लभेत्क्वचित् ।
भर्ता ते सोमपा नित्यं भवेद्धर्मपरायणः ॥२॥
अष्टपुत्रा भव त्वं च सुभगा च पतिव्रता ।
भर्तुश्चैव पितुर्भ्रातुर्हृदयानंदिनी[1] सदा ॥३॥
इंद्रस्य तु यथेंद्राणी श्रीधरस्य यथा श्रिया ।
शंकरस्य यथा गौरी तद्भर्तुरपि भर्तरि ॥४॥
अत्रेर्यथानुसूया स्याद्वसिष्ठस्याप्यरुंधती ।
कौशिकस्य यथा सती तथा त्वमपि भर्तरि ॥५॥
ध्रुवैधि पोष्या मयि मह्यं त्वादाद्बृहस्पतिः ।
मया पत्या प्रजावती सं जीव शरदः शतं ॥६॥

२३.

असौ या सेना मरुतः परेषामभ्यैति न ओजसा स्पर्धमाना ।
तां गूहत तमसापव्रतेन यथामीषामन्यो[1] अन्यं न जानात् ॥१॥
अंधा अमित्रा भवताशीर्षाणा अहय इव ।
तेषां वो अग्निदग्धानामग्निमूळ्हानामिंद्रो हंतु वरंवरं ॥२॥

20. This verse is given after Rv. X. 9 in S 1. 2. 3. 4. It is not in P and R. Cf. Av. VI. 23, 1.

21. This verse is inserted after Rv. X. 75, 5 in S 1. S 2. S 4. तृतीयाध्याये इमं मे गंगे° P. The same verse occurs in the Mantrasamhitâ (p. 107^b of my MS.).

[1] सरितो S 1. [2] संगति S 4. P.

22. This Khila occurs at the end of Rv. X. 85, after the third Adhyâya of the eighth Ashtaka. Cf. Weber, Indische Studien, V. 194.

[1] °नंदनी S 4.

23. This Khila occurs at the end of Rv. X. 103. Cf. Av. III. 2, 6. [1] यथामोषाऽन्यो S 4. R.

